॥ श्रीः ॥

# श्री शिवगीताभाष्यम्

श्रीशृंगगिरि श्रीजगद्गुरु

श्रीमदभिनव नृसिंहभारतीस्वामिभिः

विरचितम्

शृंगगिरि जगद्गुरुसंस्थानद्वारा प्रकाशितम्

श्रीशुभकृन्नामवत्सरः शा. श. १८८४

बेंगळूरु प्रेस्

१९६२

# प्रस्तावनम्

श्रीमत्परमहंस-परिव्राजकाचार्याः शृंगगिरिशारदापीठाधीश्वराः श्रीशंकरगुरुपरंपरालंकाराः श्रीमदभिनवनृसिंहभारतीमहास्वामिनः १५९९ क्रिस्तुवत्सरप्रभृति १६२२ वत्सरपर्यन्तं शृंगगिरिशारदापीठं अलमकुर्वन्। एते महाभागाः षट्सु दर्शनेषु कृतावगाहाः मन्त्रशास्त्रेपि निष्णाता अभूवन्। अत्र च प्रमाणं एतत्कर्तृकं शिवगीताभाष्यं पुरतः प्रकाशत एव। इमे शिवगीताभाष्यं विधाय तात्कालिकैतद्देश राजं केलदिश्रीवेंकटप्पनायकमहाराजं केलदिराजधान्यां अश्रावयन्। राजनि श्रीचरणानां वात्सल्यं राज्ञश्च श्रीचरणेषु भक्तिश्च आसीत्। अयमुदन्तः गुरुवंश काव्यादवगम्यते।

पद्मपुराणान्तर्गता शिवगीता सगुण-निर्गुणब्रह्मविद्ये सरलं प्रतिपादयन्ती शिवोपासकानां अद्वैतब्रह्मजिज्ञासूनां नितरां उपकारिणी आस्ते। श्रीमदभिनवनृसिंहभारतीस्वामिनः अस्या भाष्यं विधाय तत्र तत्र निगूढान् अर्थान् अतिसरलं प्रकाश्य शिवगीताध्येतॄणां महतीमुपकृति-मतन्वन्।

एतद्ग्रन्थमुद्रणे मातृकाद्वयं सहायकमभूत्। एका हि मातृका शृंगगिरिमठीयपुस्तकभाण्डागारस्था तालपत्रमयी। अन्या तु विद्यानिधि श्रीरामचन्द्रशास्त्रिभिः बेंगलूरुनगरे समासादिता। मातृकाद्वयमपि समग्रं शुद्धं च। उपक्रम पद्यबृन्दं परं पत्रस्य जीर्णतया मध्ये मध्ये विच्छिद्य उपलभ्यते। यथोपलब्धं तथैव मुद्रापितम्। अर्थावगतये परं पण्डितानां पूरणानि अधस्तात् दत्तानि।

ग्रन्थोयं पण्डितपाणिपल्लव-मलंकुर्वाणः शिवे भक्तिं समेधयमानः चिरं प्रकाशतामित्याशास्महे ॥

शृंगगिरिः,
१४–९–१९६२.

विद्यातीर्थः

# श्री शिवगीताविषयसंग्रहः

श्री महागणपतये नमः।

# श्री शिवगीताभाष्यम्

## प्रथमोऽध्यायः

लीलान्दोलित[1].........................लसच्छत्रयन्
[2]..............................................।
कर्णान्ताञ्चितलोलचामरयुगः सर्वामराधीशतां
भावेन द्विरदाननः प्रकटयन् भूयात् स नः श्रेयसे ॥ १ ॥

शारदामाश्रये देवीं शारदाम्बुरुहासनाम्।
पारदां सर्वविद्याब्धेः पारदाञ्चितसुप्रभाम् ॥ २ ॥

यदविद्यासहायेन सृजत्यवति हन्ति च
तन्नमामि परं ब्रह्म[3].................॥ ३ ॥

[4]...............वबोधभिन्नमतिभिर्दुर्वादिभिर्वञ्चितं
लोकं यः कृपयोद्दिधीर्षुरकरोद्वैय्यासिकीनां गिराम्।
भाष्यं साधु विवेचितश्रुतिशिरस्तत्वस्य तस्यादरात्
सर्वज्ञस्य नमामि शंकरमहाचार्यस्य पादाम्बुजम् ॥ ४ ॥

---

सूचना—मूलमातृकायां अस्फुटानि स्थानानि अर्थावगतये एवमूहितुं शक्यन्ते।

[1] मण्डलीकृतकरं शीर्षे

[2] भास्वद्रत्नकिरीटतो निजशिरस्संभूषयन्सर्वदा।

[3] सच्चिदानन्दविग्रहम्।

[4] तत्त्वार्थाज्ञ-

यद्भासा रविचन्द्रपावकमुखा[१]......................
यत्सत्[२]........स्वरूपममलं वाङ्मानसागोचरः।
यत्सत्वेन च शुक्तिरूप्यवदिदं भातीन्द्रजालोपमं
विद्याशंकरनामकं हृदि परं तद्वस्तु नस्तात्सदा ॥ ५ ॥

श्री शंकरार्यगुरुवंशमहार्हरत्नं
वन्दे नृसिंहमुनिपं परमं गुरुं नः।
यो वै विधाय किल वैदिकनिर्णयादि-
ना[३]........................ ॥ ६ ॥

अस्ति श्रीकेलदी सदाशिवमहीभृद्वंशमुक्तामणिः
नानाशास्त्रकलाविवेककुशलः कीर्तिप्रतापोज्वलः।
शुद्धाद्वैत[४]........................................
[५]........गमामितगुणः श्रीवेंकटक्ष्मापतिः ॥ ७ ॥

शृंगेरीवसुधां खलैरपहृतां भूदेवविद्वेषिभिः
श्रीमत्क्रोडतनुर्यथावदचलां संस्थाप्य विश्रान्तिभाक्।
सद्वेदाचलसीम्नि वेंकटनृपः श्रीधर्मसिंहासने
भक्त्यास्थापयदप्रमेयमहिमाधारं नृसिंहं गुरुम् ॥ ८ ॥

तर्कादि[६].........................दीन् दृढैः
वेदान्तोक्तिनखैर्यथा च दितिजं बाढं विदार्य क्षणात्।
प्रह्लादं विदधे नृलोकमखिलं योगेन यः स्वाश्रयं
सेव्योऽसावखिलैर्बुधैरपि सदा श्रीमान्नृसिंहो गुरुः ॥ ९ ॥

---

[१] भान्तीह तेजोमयाः।

[२] सौख्यर्चित-

[३] नानिबन्धनिकरं यशसा विरेजे।

[४] मतप्रकाशनमहाकार्ये च नित्योत्सुकः।

[५] सोऽयं सद्धृदयं-

[६] श्रुतिबाह्यतन्त्रधिषणोन्मत्तान् करीन्द्रान्-

सोऽयं श्रीशंकराचार्यगुरुवंशाब्धिचन्द्रमाः ।
सु[1]...........................जगत् ॥ १० ॥

तच्छिष्योऽखिलशास्त्रतत्वनिपुणो ज्ञातात्मतत्वो जगद्
वन्द्यः श्रीनरसिंह भारतिगुरुर्मोहान्धकारारुणः ।
अद्वैतप्रतिपादकं वितनुते शुद्धं शिवज्ञानदं
निर्दोषं शिवगीतिकाविवरणं भाष्यं सतां प्रीतये ॥ ११ ॥

[2]..............................................तत्
कार्त्स्न्येनोपनिषद्रहस्यमखिलं वेत्तुं लघूपायतः ।
भेत्तुं भेदिमतानि जन्म सफलीकर्तुं च वाञ्छन्ति ये
सन्तस्तैर्नरसिंहभारतिकृतं भाष्यं निधेयं हृदि ॥ १२ ॥

इह खलु स्वभावतः सकलजनानुभवसिद्धं दुःखं परिजिहीर्षवः सर्व एव तद्धानोपायमनुसरन्तः, तत्वज्ञानमेव तदुपाय माकलयन्तः, तदन्यमुपायमलभमानाः परमर्षयः सकलशास्त्रार्थतत्वकोविदं परमकारुणिकं सूतमासाद्य तमुपायमेव पृष्टवन्तः । तान् प्रति—"अथातः संप्रवक्ष्या"मीति विशेषप्रतिज्ञापूर्वकं तमुपायमेव सूत उवाचेति व्यास आह—

सूत उवाच—

अथातः संप्रवक्ष्यामि शुद्धं कैवल्यमुक्तिदम् ।
अनुग्रहान् महेशस्य भवदुःखस्य भेषजम् ॥ १ ॥

ननु प्रथमत एव पद्मपुराणं वक्तव्यमिति मुनयः सूतं पृष्टवन्तः, तान् प्रति पद्मपुराणं वक्ष्यामीति सूतेन प्रतिज्ञातमेवेति तदन्तर्गतशिव-

---

[1] मनोभिस्सदा सेव्यो जीयाद्विद्योतयन्-

[2] यद्रामाय महेश्वरेण करुणादृष्ट्योपदिष्टं च-

गीताया अपि प्रतिज्ञातत्वात् प्रतिज्ञान्तरं कथमितिचेन्न—साक्षात्तत्व-ज्ञानोपायत्वरूपविशेषद्योतनार्थं पुनः प्रतिज्ञेति ॥

ननु 'अहं संप्रवक्ष्या'मीति-एतावतैव प्रतिज्ञायाः सिद्धत्वात् ।—अथातः (संप्रवक्ष्यामीति) इति किमर्थमितिचेन्न—अथ मुनिप्रश्नानन्तरं, अतः= प्रश्नाद्धेतोः संप्रवक्ष्यामीति प्रतिज्ञार्थः । ननु प्रश्ने सति अवश्यं वक्तव्य-मिति कोऽयं नियम इति चेन्न—अधिकारिप्रश्ने सति अनुक्ते प्रत्यवाय-स्मरणात् ॥ तथाचाह आपस्तम्वाचार्यः—"आचार्योऽप्यनाचार्यो भवति श्रुतात् परिहरमाण" इति । तथा च महाभारते—उद्यमपर्वणि विदुर-प्रजागरे—"हरणञ्च परस्त्रीणां परदाराभिमर्शनम् । शुश्रूषोश्च परित्याग-स्त्रयोदोषाः क्षयावहाः ॥" इति । विशुद्धाद्वैतप्रतिष्ठापनधुरंधराः श्रीमत्-केलदीवेंकटेन्द्रमहीन्द्राः शिवगीताशुश्रूषया उपसन्नानां मुनीनां तद्गीता-श्रावणप्रस्तावे 'अथात' इति प्रयुञ्जानस्य संप्रवक्ष्यामीति प्रतिजानतो भगवतः सूतस्य तात्पर्यं "अथातो ब्रह्मजिज्ञासेत्यादि—सूत्रग्रथित—समन्वया-विरोध—साधन—फलप्रतिपादकचतुर्लक्षणीं ब्रह्ममीमांसां अथात"—इति प्रतीकत उपादाय सुखबोधाय तदर्थं प्रतिपिपादयिषया प्रवृत्तम्, अन्यथोक्तो भयमनुपपन्नमेवेति प्राहुः ॥ सं=सम्यक्त्वं, तच्चासंदिग्धत्वं, तच्च स्वकीय-तदर्थकसंशयाविषयत्वं, वैशद्यं लघुत्वं कृत्स्नता चेति प्रशब्दार्थः । वैशद्यञ्च झटित्यर्थप्रतिपादकत्वम् । अत्रोपसर्गार्थस्तु धात्वर्थेऽन्वेति । एतावता शास्त्रान्तरापेक्षया अस्य शास्त्रस्य प्रकर्षो लब्धः, शुद्धमिति क्रियाविशेषणं । तच्च परकीयदूषणानाक्रान्तत्वम् । ननु शास्त्रेण तत्व-ज्ञानमुत्पादनीयं, तच्च तत्त्वज्ञानं मुक्त्युपायत्वेनैवोपादेयं । तथा सति सालोक्यादीनामपि मुक्तिव्यवहारविषयत्वात् तदुपायत्वे तस्या प्रयोजकत्व मित्यत आह **कैवल्येति**—कैवल्येत्यत्र स्वार्थेष्यञ् चातुर्वर्ण्य-मित्यादिवत्, कैवल्यञ्च निष्प्रपञ्चानन्दस्वरूपम् । ननु कैवल्यपदादेव परममुक्तिलाभे मुक्तिपदवैय्यर्थ्यमिति चेन्न—कैवल्यमिति सावधारणोक्तिः, तथाच निष्प्रपञ्चानन्दस्वरूपैव मुक्तिः परमपुरुषार्थः । ननु तादृश-कैवल्यात्मक-मुक्त्यतिरिक्त-मुक्तिः-परमपुरुषार्थ इति ख्यापनार्थं मुक्ति-पदम् । अत्रमाध्वाः—तत्वज्ञाने सत्यपि प्रारब्धकर्मवशात् भक्त्यभावेन प्रसादाभावात्, भक्तौ सत्यां प्रसादसद्भावेन चिदात्मकादिशरीरे स्वतो

नीचोच्चभावापन्नस्वरूपानन्दाविर्भावरूपा परममुक्तिः सैव सायुज्यमिति ।। सायुज्यन्तु नैक्यं, किन्तु "सयुजः परमात्मानं प्रविश्य च बहिर्गताः" इत्यादिस्मृतौ सयुजां प्रवेशमात्रोक्तेः, सयुजोर्भावः सायुज्यमिति तच्छब्देन संबन्धस्यैवोक्तेश्च। "सालोक्यमथ सामीप्यं सारूप्यं योग एव चेति" स्मृतौ सायुज्ये संबन्धार्थकयोगपदप्रयोगाच्च। तस्मात् सायुज्यं नाम नीरक्षीरादिवद् अन्यदेहाविष्टग्रहादिवच्च संश्लेषमात्रम्, नत्वैक्यम्। "हरौ नियतचित्तत्वात् ग्रहवत् तत्प्रवेशनात्। मोक्षं तादात्म्यमित्याहुः नतु तद्रूपतः क्वचित्" इति स्मृतेः। तत्र "सैषानन्दस्यमीमाँसा भवति" युवास्यात् साधु युवाध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एकोमानुष आनन्दः। ते-येशतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। "श्रोत्रियस्य चाकामहतस्य" इत्यादि "स एको ब्रह्मण आनन्द" इत्यन्तं दर्शिततैत्तिरीय श्रुत्या, "अथ ये शतं कर्मदेवानामानन्दाः। स एक आजानजानां देवाना-मानन्दः। यश्च श्रोत्रियोऽवृजिनोऽकामहत" इत्यादिवाजसनेयिश्रुत्या, "नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम्। सर्वैर्गुणैः शतगुणाः मोदन्त इति हि श्रुति" रिति स्मृत्या च, "ज्ञानं चोपासनं चैव मुक्ता-वानन्द एव च। यथाधिकारं देवानां भवत्येवोत्तरोत्तर"मिति—अध्यात्मेन, अकामहतावृजिनत्वविशेषणदानेन च। अकामहतत्वञ्च कामनारहितत्वम्, अवृजिनत्वं पापरहितत्वम्, इदन्तु परममुक्ता-वेवेति मुक्तानामेवोत्तरोत्तरं तारतम्यश्रवणात्, तस्मात् स्वतस्तरत-मभावापन्नानन्दाविर्भावरूपा मुक्तिरिति। अत्र तत्वज्ञाने सति लिङ्ग-शरीराविद्यानिवृत्तेरनन्तरमपि मुक्तस्य भोगार्थं देहान्तरसंभवः, तथा च श्रुतिः—"यथा पेशस्करी पेशसो मात्रामुपादायान्यन्नवतरं कल्याण-तरं रूपं कुरुते। एवमेवायमात्मा इदं शरीरं निहत्याविद्यां गमयित्वा अन्यन्नव तरं कल्याणतरं रूपं कुरुते, पित्र्यं वा गांधर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वा अन्येषां भूताना"मिति। तच्च शरीरमीश्वरवच्चिदात्मकं वा, कर्मा-नारब्धमैच्छिकं प्राकृतं वाः तथा च श्रुतिः—चिदानन्दशरीरेण सर्वे मुक्ता यथा हरिम्। भुंजते कामतोभोगान् तदन्तर्बहिरेवचेति। तत्व प्रदीपे—"शुद्धिप्रकृतिमयानि ज्योतीरूपाणि सुखैकतानानि शरीराणि अनुप्रविश्ये"त्युक्तत्वाच्च। "चिता वाचिता वा नित्येन वानित्येन वाथा-

नन्दी ह्येष भवतीति" देहद्वयश्रुतेश्च। ईश्वरश्चैकोऽनेकोऽदेहो देहवांश्च स्वयमवयवः अवयवी चेति। एवं ब्रह्म सर्वज्ञत्वादिगुणकम्। शंखचक्रादिविशिष्टाकारकम्, "सर्वज्ञः सर्ववित् नारायण एक एवाग्र आसीत्, न ब्रह्मा न च शंकरः" इति श्रुतेः। "चतुर्भुजाद्याकारोऽपि आनन्द एव, आप्रणखात् सर्व एवानन्द" इति श्रुतेः। गुणा अपि आनन्दा एव। ब्रह्मणो हेयगुणत्वानुपपत्तेः। एवं गुणगुणिनोः शरीरशरीरिणोः अभेदो भेदश्चेति एतत् सर्वं अचिन्त्याद्भुतशक्तेः परमेश्वरस्यैश्वर्यवशान्न-विरुध्यते। "अंगांगित्वेन भगवान् क्रीडते परमेश्वरः। ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने। अतर्क्ये हि कुतस्तर्कः अप्रमेये कुतः प्रमा" इति (भाष्यकार)न्यायामृतकार-न्यायसुधाकर्तृ–प्रभृतयः मन्यन्ते। तत्तु श्रुति–स्मृति–शास्त्रार्थ–तत्वज्ञान–विजृम्भितं युक्तिविरुद्धं हेयं। तथाहि। तत्र ज्ञाने सत्यपि प्रारब्धकर्मवशात् भक्त्यभावेन प्रसादा-भावात्, भक्तौ सत्यां प्रसाद सद्भावेन चिदात्मकादि शरीरे स्वतो नीचोच्च भावापन्नस्वरूपानन्दाविर्भावरूपा मुक्तिरिति—तत्र तत्त्वज्ञानानन्तरं सत्यामविद्यानिवृत्तौ भक्तिः प्रसादश्च, तदनन्तरं शरीरविशेषे तादृशा-नन्दाविर्भावो वा, तत्त्वज्ञानानन्तरं भक्तिः प्रसादश्च, तदनन्तरमविद्या-निवृत्तिः, ततस्तादृशशरीरे तादृशानन्दाविर्भावो वा। तत्र नाद्यः— प्रसादो हि ईश्वरनिष्ठो वा जीवनिष्ठो वा, ईश्वरनिष्ठोऽपि सुखविशेषोवा, इच्छाविशेषोवा, कृतिविशेषोवा, इति, तत्र जन्यसुखादीनामदृष्टजन्यत्व नियमात् अदृष्टं विना सुखाद्यनुपपत्तेः। न च सुखं प्रत्यदृष्टस्य कारणत्वं, नतु ज्ञानादीन् प्रति, तथा च ज्ञानविशेषादिरेव प्रसाद इति वाच्यम्। तथा सति ज्ञानादिवदीश्वरे दुःखद्वेषादेरप्युत्पत्तिप्रसङ्गः। अदृष्टाभावान्न तत्र दुःखद्वेषाद्युत्पत्तिरिति चेत्? तुल्यं ज्ञानादावपीति। किञ्चादृष्टं विनापि भक्त्याऽप्रामाणिकसुखज्ञानाद्युत्पत्तिरीश्वरे यदि स्वीक्रियेत तर्हि विनिगमनाविरहात् अभक्त्याऽनन्ताप्रामाणिकदुःखद्वेषादिकल्पनापत्तेः। न च तत्तदुपाध्यवच्छिन्नमीश्वरस्य नित्यसुखादिकमेव प्रसाद इति वाच्यम्। उपाध्यवच्छिन्नसुखादिकं हि उपाधिः सुखं चेति मिलितं वा, केवलं सुखादिकं वा, केवलमुपाधिर्वा। न प्रथमद्वितीयौ, ईश्वरसुखादे-र्नित्यत्वेन असाध्यतया भक्तेर्वैय्यर्थ्यप्रसङ्गात्। न तृतीयः; उपाधिः, भक्तिर्वा भक्तिध्वंसो वा, तादृशसमयो वा? तत्र न प्रथमः। भक्तेरुपाधित्वे,

भक्तेर्भक्त्यजन्यतया प्रसादार्थिनो, भक्तौ प्रवृत्त्यनुपपत्तेः। एकस्य स्वनिरूपितसाध्यसाधनत्वाभावात् भक्त्यन्तरस्वीकारेऽनवस्थामाताच्च, न द्वितीयः; यत्रेच्छा तदभावे द्वेषः, यत्र द्वेषः तदभावे इच्छेति नियमात्। भक्तेरिच्छाविषयतया तदभावे भक्तिध्वंसे द्वेषविषयत्वादिच्छाया अभावात्। प्रसादमुद्दिश्य भक्तौ प्रवृत्तिर्न स्यात्। न तृतीयः, तादृशसमयस्य स्वतः सिद्धत्वेन भक्त्यसाध्यत्वात्। यश्च प्रसादो जीवनिष्ठ इति द्वितीयः पक्ष उक्तः सोऽपि न संभवति। तत्र जीवनिष्ठः प्रसादोहि अदृष्टविशेषोवा सुखादिकं वा? नाद्यः, अविद्यायां नष्टायामदृष्टोत्पत्तेरसंभवात्। अदृष्टं प्रत्यविद्यायाः कारणत्वकल्पनाया आवश्यकत्वात्। अन्यथा जीवन्मुक्तिदशायां भोगार्थं प्रवृत्तस्य तत्वज्ञानिनोऽदृष्टान्तरोत्पत्या संसारानुवृत्तिप्रसङ्गात्। न च तादृशादृष्टातिरिक्तादृष्टं प्रत्यविद्यायाः कारणत्वं वाच्यम्। गौरवात्, विनिगमनाविरहात्। संसारकालीनादृष्टं प्रत्यपि अविद्यायाः कारणत्वं न स्यात्। तत्र कारणत्वेऽत्रापि स्यात्। किञ्च स्वकीयादृष्टप्रयोज्यशरीरावच्छिन्नत्वेन सातिशयत्वेन चाश्वमेधजन्यस्वर्गादिवत् क्षयित्वापत्या परमपुरुषार्थत्वाभावप्रसङ्गात्।। तत्तदतिशयस्य तत्तत्कर्मातिशयप्रयुक्तत्वात्। अश्वमेधादिजन्यस्वर्गादौ तथादर्शनात्। अश्वमेधादिजन्यस्वर्गाद्यविशेषाच्च। न चाश्वमेधजन्यस्वर्गादीनामविद्याजन्यत्वात् प्रसादजन्यानन्दाविर्भावं प्रत्यविद्याया अहेतुत्वात् ततो विशेष इति वाच्यम्। अश्वमेधजन्यस्वर्गादिकं प्रत्यपि अविद्यायाः कारणत्वे मानाभावात्, अदृष्टजन्य शरीरजन्य भोगत्वेनाविद्याजन्यत्वमिति यदि तदा प्रकृतेऽपि अदृष्टजन्यशरीरजन्यभोगं प्रत्यविद्यायाः कारणत्वं न स्यात्। तस्माद्विनिगमनाविरहात् स्वकीयादृष्टजन्यशरीरावच्छिन्नभोगमात्रं प्रत्येव अविद्यायाः कारणत्वे प्रसादसमयेऽपि तस्याविद्यमानत्वात् तादृशानन्दाविर्भावस्य अश्वमेधादिजन्यस्वर्गेण समानत्वात् क्षयितया न परमपुरुषार्थत्वमिति। अत्र जीवनिष्ठो यः सुखादिरूपः प्रसाद इति द्वितीयः पक्षः सोऽपि न सम्भवति। तथाहि, सुखादिरूपः प्रसादो हि तस्मिन् शरीरे उत्पत्स्यमान शरीरान्तरे वा? नाद्यः, भवदभिमत मोक्षरूपभोगस्य शरीरान्तरसाध्यत्वात्, सुखादिरूपप्रसादस्य पूर्वशरीरवृत्तित्वेन तन्नाशानन्तरं प्रसादस्यापि नाशात् कालान्तरीयकार्यासंभवात्। व्यापारकल्पनायां पारिशेष्यात् अदृष्टरूपव्यापार-

कल्पनाया आवश्यकत्वे पुनःसंसारापत्या पूर्वकल्पोक्तदोषानुवृत्तिप्रसङ्गात्। न द्वितीयः पूर्वशरीरवृत्तेः प्रसादकारणीभूतायाः भक्तेर्विनष्टत्वेन तत्कार्यस्य शरीरान्तरवर्तिप्रसादस्यासंभवात्, तत्राप्यदृष्टरूपव्यापार-कल्पनापत्त्या पूर्वदोषानुवृत्तिप्रसङ्गादिति। तस्माददृष्टशरीरादीना-मविद्याजन्यत्वेनाविद्यानाशानन्तरमदृष्टशरीरादेरसंभवेनाविद्यानाशानन्तरं भक्तिः प्रसादशरीरादिकमिति प्रथमः पक्षो न संभवतीति॥ अत्र तत्वज्ञानानन्तरमविद्यायां सत्यामेव भक्तिप्रसादौ, तदनन्तरमविद्या-नाशः, तदनन्तरं शरीरविशेषे तादृशानन्दाविर्भाव इति द्वितीयः पक्षोपि न संभवति। तथाहि लोकेऽज्ञानस्य साक्षादेव ज्ञाननिवर्त्यत्वदर्शनात् तत्वज्ञानानन्तरमज्ञानस्यावस्थानस्यैवासंभवात्। अपि चाज्ञानस्य तत्त्व-ज्ञानैकनाश्यत्वात् तत्वज्ञानानन्तरमपि अविद्याया अनुवृत्तौ नाशकान्तरा-संभवात् सर्वदा तस्या अनुवृत्तेः प्रसङ्गात्, "तावत्कालं स्थितं चैनं कः पश्चान्नाशयिष्यतीति" न्यायात्।

किञ्च प्रारब्धभोगार्थं प्रवृत्तस्य पुरुषस्याविद्यारूपकारणसद्भावात् अदृष्टान्तरोत्पत्तिप्रसङ्गेन संसारानुवृत्तिप्रसङ्गः। यच्चोक्तं तादृशशरीरे स्वतो नीचोच्चभावापन्नानन्दाविर्भावो मुक्तिरिति तदसत्; उत्पन्नस्य शरीरविशेषस्य तादृशानन्दाविर्भावस्य च एकैकस्यैवोत्तरोत्तरसमयानु-वृत्तिः, आहोस्वित् तादृशशरीरस्य तादृशानन्दाविर्भावस्य च धारा वा? नाद्यः, भावमात्रस्यैव विनाशित्वनियमात्, उत्पन्नस्य शरीरस्य तादृशा-नन्दाविर्भावस्य च सकलोत्तरसमयावस्थानासंभवात्। नद्वितीयः, एकस्यैव जीवस्याप्रामाणिकानन्तशरीरानन्दाभिव्यक्तिकल्पनायां गौरवात्, मानाभावाच्च॥

किञ्च तारतम्यस्य लोके कारणतारतम्यप्रयुक्तत्वात् आनन्दस्य नित्यत्वेन तारतम्यासंभवात्, अभिव्यक्तिनिष्ठतारतम्यमेव कार्यता-वच्छेदकं कल्पनीयम्। तथा सत्यानन्दनिष्ठतारतम्ये मानाभावादिति। न चेष्टापत्तिः, श्रुत्या आनन्दतारतम्यस्यैव बोधनात्, नत्वाविर्भावस्येति, अपि च मुक्तौ तारतम्यस्वीकारे स्वापेक्षया तारतम्यज्ञाने तदधीनेर्ष्याद्वेष-योरपि प्रसङ्गः।

ननु 'सैषानन्दस्य मीमांसा भवति' इत्यारभ्य "स एको ब्रह्मण आनन्दः इत्यन्तश्रुतिरेव मोक्षतारतम्ये प्रमाणमिति चेत् मैवम्, आनन्दस्य नित्यत्वेन पूर्वोक्तयुक्त्या तारतम्यासंभावात्, तारतम्याश्रयाभिव्यक्ति-विषयानन्दवत्त्वमेव श्रुत्या प्रतिपाद्यते। तस्मादियं श्रुतिः न मुक्तौ तारतम्यप्रतिपादिका, किन्तूपासनादितारतम्य–निबन्धनस्वर्गतारतम्य प्रतिपादिकेति ।। यच्च श्रोत्रियस्याकामहतत्वावृजिनत्व–विशेषणमहिम्ना श्रुतेः परममुक्तिविषयत्वमिति तन्न, श्रोत्रियो वेदपारगः, स हि सर्वेषु लोकेषु वर्तमानस्यानन्दहेतोः भोगे प्रयाससाध्यत्व–सातिशयत्वानित्यत्व-दोषान् शास्त्रानुभवाभ्यां निश्चित्य तत्र निष्कामो भवति, तथा सति मनुष्यगन्धर्वलोकगतान् विषयान् भुञ्जानस्य यावानानन्दः तावान् अकामहतस्य श्रोत्रियस्यापि विद्यते, अत एवाकामहतत्वञ्च कामहत-भिन्नत्वं, कामहतत्वञ्च कामनयाबद्धत्वं बन्धजनकीभूतकामनावत्त्वमिति यावत् तद्राहित्यं ; तथाच संसारदशायामपि बन्धप्रयोजकीभूतकामना-विरहस्य विद्यमानत्वान्न तादृशश्रुतेः परममुक्तिविषयत्वमिति । अवृजिनत्वञ्च तत्काले पापजन्यभोगराहित्यं। पुण्यस्य बलवत्वात् पुण्यमेव भुज्यत इति। यच्चोक्तं 'नृपाद्याः शतधृत्यन्तामुक्तिगा उत्तरो-त्तरम्। सर्वैर्गुणैः शतगुणा मोदन्त' इति हि श्रुतिरिति स्मृत्या, "ज्ञानं चोपासनञ्चैव मुक्तावानन्द एव च। यथाधिकारं देवानां भवत्येवोत्तरो-त्तर"मित्याध्यात्मेन च, तत्र तत्र आनन्दबोधकस्थले मुक्तिपदश्रवणात् तस्यापि मुक्तित्वमिति—तदप्यसत्, तादृशस्मृतेराध्यात्म्यस्य चाप्रामाणिक-त्वात्। प्रामाणिकत्वे वा सालोक्य-सारूप्यादिरूपस्वर्गविशेषेऽपि मुक्ति-पदप्रयोगात् तद्विषयत्वेनाप्युपपत्तेः न तु परममुक्तिविषयत्वमिति। एतेन तत्तच्छ्रुतिस्मृतिबलात्, तत्तदानन्दतारतम्याभिव्यक्तिरेव परम-मुक्तिरित्यपि परास्तम्। बाधकबलात् तत्तत्स्वर्गविषयत्वेनाप्युपपत्तेरिति। किञ्च "अशरीरं वाव सन्तं न प्रियाप्रियेस्पृशत" इत्यादिश्रुत्या परममुक्तावशरीरत्वबोधनात् । पूर्वोदाहृतश्रुतिस्मृत्यादीनामपरमुक्ति विषयत्वमिति ।।

यच्चोक्तं "हरौनियतचित्तत्वादित्यादिना, सायुज्यं नाम नैक्यम्, किन्तु सम्बन्धमात्रं, ग्रहावेशादिवत् तच्चेश्वरशरीरे प्रविश्य निर्गमनमात्र-मिति। तन्न, शरीरयोर्मूर्तत्वेन प्रवेशनिर्गमनयोरसंभवात्।" इति।

न च लिङ्गशरीरस्य प्रवेशनिर्गमन एव जीवस्य प्रवेशनिर्गमन इति वाच्यम्। तदानीं लिङ्गशरीरस्य नाशाभ्युपगमात्। किञ्च मुक्ति-समये अन्तःकरणस्य नाशात् आनन्दाभिव्यक्त्यनुपपत्तिः॥ यच्चोक्तं 'ईश्वरः शंखचक्रादिविशिष्टशरीरवान्, तादृशशरीराभिन्नश्चे'ति, तदप्यसत्—एवं सति ईश्वरस्यतादृशशरीराभिन्नत्वे "उमासहायं परमेश्वरं विभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षि तमसः परस्ता" दिति। "ते देवारुद्रमपृच्छन् को भवानिति, सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च, नान्यः कश्चन मत्तो व्यतिरिक्तः इत्यादि श्रुत्या, तादृशरूपविशिष्टस्यापीश्वरत्वप्रतिपाद-नात्। विनिगमनाविरहेण द्वयोरपीश्वरत्वे शरीरभेदादीश्वरभेदापत्तेः। तस्मात् श्रुतिस्मृतिशास्त्रार्थतत्वं परममुक्तिस्वरूपं चाजानतः केवलं परधनकुतूहलिनो माध्वस्य मतं श्रेयोऽर्थिभिरनुपादेयमिति संक्षेपः॥

अत्र वैशेषिकाः—एकविंशतिदुःखप्रभेदो मोक्षः, तत्रैकविंशति दुःखानि—षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः शरीरं सुखं दुःखं चेति तेषां प्रभेदः स एव परम मोक्ष इति वदन्ति। तन्न, तत्वज्ञानस्यैकविंशति-दुःखप्रभेदजनकत्वमसम्भवि। तथाहि—नतावत् जीवात्मसाक्षात्काररूप-तत्वज्ञानस्य तादृशध्वंसजनकत्वं, तस्य सवासनमिथ्याज्ञानमात्रनाशकत्वेन जीवन्मुक्तिदशायामपि तादृशदुःखानां विद्यमानत्वात्। नापीश्वर-साक्षात्काररूपतत्वज्ञानस्य तादृशध्वंसजनकत्वम्, ईश्वरसाक्षात्कारस्य (रूपतत्वज्ञानस्य) साक्षान्मुक्तिजनकत्वेन तदनन्तरं सुखाद्यनुत्पादात् तद्ध्वंसानुपपत्तेः। किं च तादृशध्वंसकूटं प्रति तत्त्वज्ञानस्य जनकत्व-मेकैकं प्रति वा, नाद्यः, कस्यापि तत्वज्ञानस्य तादृशध्वंसकूटजनकत्वं न सम्भवति, केषांचिदुत्पन्नत्वात्, केषांचिदुत्पत्स्यमानत्वात्, तत्व-ज्ञानस्यैकसाध्यत्वानुपपत्तेः। न द्वितीयः। संसारदशायामपि तत्सत्वात् तुल्यन्यायेनापुरुषार्थत्वाच्च। तस्माद्वैशेषिकाभिमता मुक्तिरनुपादेया॥

नैय्यायिकानां तु स्वसमानाधिकरणदुःखप्रागभावानवच्छिन्नदुःखध्वंसो मोक्षः, अवच्छिन्नत्वञ्चैकक्षणवृत्तित्वं, स्वं लक्ष्यत्वेनाभिमतम् तत्समानाधिकरणं यद्दुःखं तत्प्रागभावानवच्छिन्नः स एव, स्वपदस्य तथैव व्युत्पत्तेः। न च स्वसमानाधिकरणदुःखावच्छिन्नो दुःखध्वंस

इत्येवास्तु, किं प्रागभावंपदेनेति वाच्यम् संसारदशायां दुःखध्वंसेऽति-व्याप्तेः, तद्ध्वंसस्यापि तदानीं दुःखानवच्छिन्नत्वात्, प्रागभावपदोपादाने तु तदानीं स्वसमानाधिकरणोत्पत्स्यमानप्रागभावावच्छिन्नत्वेन तद-नवच्छिन्नात्वाभावावन्नातिव्याप्तिः। चरमदुःखध्वंसस्य पुरुषान्तरीय-दुःखप्रागभावावच्छिन्नत्वेनाव्याप्तिवारणार्थं स्वसमानाधिकरणेति। तस्य व्यधिकरणत्वान्न दोषः। चरमदुःखध्वंसस्य महाकालसंबंधेन स्वपूर्ववर्ति-स्वसमानाधिकरणदुःखप्रागभावावच्छिन्नत्वेनासम्भवः। अतोऽवच्छिन्नत्व-मेकक्षणवृत्तित्वं, तस्य च स्वसमानाधिकरणदुःखप्रागभावाधि-करणक्षणावृत्तित्वान्न दोषः। चरमदुःखध्वंसं प्रति जीवात्मसाक्षात्कारस्य वासनानाशद्वारा कारणत्वम्—ईश्वरसाक्षात्कारस्य तु साक्षात्कारणत्व-मिति निष्कृष्टमतमप्यनुपादेयमेव, तथाहि—सकलपुरुषनिष्ठ—चरम-दुःखध्वंसत्वेन रूपेण स्वपदवाच्यत्वं ग्राह्यम्? अहोस्वित् तत्तच्चरमदुःख-ध्वंसत्वेन? नाद्यः—सकलपुरुषनिष्ठचरमदुःखध्वंसानां स्वपदवाच्यत्वे तत्समानाधिकरणत्वेन सकलदुःखप्रागभावानां सङ्ग्रहे परस्परं प्रत्येकं तदवच्छिन्नत्वेन तदनवच्छिन्नत्वाभावादसंभवापत्तेः॥ न द्वितीयः—अननुगततत्तच्चरमदुःखध्वंसत्वेनस्वशब्दवाच्यत्वेऽनुगतरूपेण तत्त्वज्ञान निरूपितकार्यत्वासंभवात्।

ननु अननुगतकार्यं प्रत्येव तत्वज्ञानस्य कारणत्वं स्यात् को दोष इति चेन्न। तत्तद्व्यक्तित्वेन रूपेण तत्तद्व्यक्तिनिरूपितजनकत्वनिश्चयस्या-संभवात्। शास्त्रे कस्यापि प्रवृत्तिर्नस्यात्।

ननु चरमत्वं दुःखवृत्तिजातिविशेषः, तदवच्छिन्नध्वंसं प्रति तत्व-ज्ञानत्वेन कारणत्वान्नाननुगम इति चेन्न—तत्तन्निषिद्धकर्मजन्यतावच्छेदक-चरमदुःखवृत्तिजात्या संकरप्रसङ्गात्। नापि अखण्डोपाधिः। जाति-मात्रोच्छेदापत्तेः। तेन रूपेण तदनवच्छिन्नसामान्याभावाभावादिति दिक्। एवं कैवल्यरूपां मुक्तिं ददातीति कैवल्यमुक्तिदम्—ननु ददाते-र्दानमर्थः, तच्च स्वस्वत्वध्वंसपूर्वकपरस्वत्वापादकत्यागविशेषः, सचार्थो ददातेः कथं भवतीति चेन्न—धातूनामनेकार्थत्वात् प्रकृतेस्तात्पर्यवशात् कारणत्वमर्थः, तथाच तत्वज्ञानद्वारा शिवगीताख्यं शास्त्रं मुक्ति-जनकमित्यर्थः। तदुक्तं भगवद्गीतायां—"कट्वम्ललवणात्युष्णतीक्ष्ण-

रूक्षविदाहिनः। आहारा राजसस्येष्टा दुःखशोकामयप्रदाः" दुःख-शोकामयजनका इत्यर्थः।

ननु—तत्वज्ञानद्वारा शास्त्रस्य मुक्तिजनकत्वं न सम्भवति, प्रकृते-ऽविद्यानिवृत्तेर्ब्रह्मस्वरूपानतिरिक्तायाः मुक्तेर्जन्यत्वासंभवादिति चेन्मैवम् —तत्वज्ञाने सत्यविद्यानिवृत्तिरूप-ब्रह्मस्वरूपलाभः, तदभावेऽविद्येति योगक्षेमसाधारणीकारणता बोध्या। 'शुद्धकैवल्यमुक्तिद'मितिपाठेऽयमर्थः शुद्धाः निर्मलान्तःकरणाः साधनचतुष्टयसंपत्तिमन्त, इति तेषां कैवल्यरूपा मुक्तिः शुद्धकैवल्य मुक्तिः, तां ददातीति शुद्धकैवल्यमुक्तिदम्॥

नन्वसन्दिग्धं सम्यक् शान्तं प्रवक्ष्यामीत्युक्तं, तत्कुत इत्यत आह अनुग्रहादिति॥ इदं शास्त्रं न केवलमाहत्य कैवल्यमुक्तिदम्, अपितु कायक्लेशाद्यभावरूपफलप्रदमपीत्यभिप्रेत्याऽऽह—भवदुःखस्य भेषजमिति, भवतीति भवः—शरीरमिति यावत् तन्निबन्धनं यद्दुःखं तस्य भेषजं निवर्तकमित्यर्थः। अत एवाग्रे "कायक्लेशो मनः क्षोभ" इत्यनेन तथैव फलश्रवणात्॥ १॥

ननु "सत्येनलभ्यस्तपसा ह्येष आत्मा सम्यज्ज्ञानेन ब्रह्मचर्येणनित्य" मिति श्रुत्या साक्षादेव कर्मणां मोक्षजनकत्वं बोध्यते। ततोलाभोमोक्षस्य। "कर्मणैवहि संसिद्धिमास्थिताजनकादयः" इति स्मृतेः। 'येत्वसंकल्पित-फलकर्मकर्तारः साकारोपासनापरिवासितचेतसो यतयः ते हिरण्यगर्भपदवी-मनुप्राप्यापवृज्यन्त' इति स्मरणाच्चसाक्षादेव कर्मणो मोक्षजनकत्वमित्येकः पक्षः॥ किञ्च "विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत" इति श्रुत्या "उभाभ्यामेव पक्षाभ्यां यथाखे-पक्षिणां गतिः। तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्मशाश्वतम्।" इति "तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः। तत्प्राप्तिहेतुर्विज्ञानं कर्मचोक्तं महामते" इति स्मरणाच्च ज्ञानकर्मसमुच्चय इत्यपरः पक्षः। एवं सति शास्त्रस्य तत्वज्ञानद्वारैव मोक्षजनकत्वं कुत इत्यत आह—

न कर्मणा मनुष्ठानैर्न दानैस्तपसापि वा।
कैवल्यं लभते मर्त्यः किन्तु ज्ञानेन केवलम्॥ २॥

तत्र कर्मणः साक्षान्मुक्तिजनकत्वं नास्ति न संभवतीत्यर्थः। तथाहि—कर्मणः साक्षान्मोक्षजनकत्वम्? उत अदृष्टद्वारा? आहोस्वित् पापनाशनद्वारा? अथवा तत्वज्ञानद्वारेति चत्वारः पक्षाः। तत्रनाद्यः, तत्तदाश्रमविहित तत्तत्कर्मत्वादिना असंकल्पित-तत्तत्कर्मत्वादिना अश्वमेधत्वादिना च प्रत्येकं कारणत्वे व्यभिचारः। ब्रह्मचर्याश्रमविहितं तत्तत्कर्म विनापि गृहस्थाश्रमविहितकर्मणा मोक्षजननात्। एवमश्वमेधत्वादिना कारणत्वे प्रत्येकं व्यभिचारात्। प्रत्येकं तत्तत्कर्म विनापि अविद्यानिवृत्तेरात्मस्वरूपायाः सत्वात्। किञ्च प्रारब्धातिरिक्तसर्वकर्मणां भोगादेव नाश्यत्वे संचितकर्मणा मनंतत्वात् मुमुक्षूणां प्रवृत्तिर्नस्यात्, कर्मण एव तत्तत्कर्मनाशकत्वमिति शङ्का न कार्या, यतो "ज्ञानाग्निः सर्वकर्माणि" इति स्मृतेः ज्ञानस्यैव तन्नाशकत्वम्, कर्मणा तन्नाशकत्वकल्पनायां प्रमाणाभावात्। अपि च यतो ज्ञानमज्ञानस्य निवर्तकमिति लोकेऽधिष्ठानतत्वसाक्षात्कारेणैव भ्रमनिवृत्तिदर्शनात्, न तु कर्मणेति। अत एव न द्वितीयतृतीयौ। नापि चतुर्थः। तत्वज्ञानद्वारा मोक्षजनकत्वे कर्म मोक्षं प्रति कारणं न भवति। कर्मणोऽन्यथासिद्धत्वात्। लाघवात् तत्वज्ञानं प्रत्येव कारणत्वम्। अत एव "तमेतं वेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति—इष्यमाणज्ञान एव कर्मप्रयोज्यत्व 'मश्वेनजिगमिषति' इत्यादिवत् साधु सङ्गच्छते। अत एव समुच्चयपक्षो निरस्तः, प्रत्येकं तत्तदाश्रमविहिततत्तत्कर्मसमुच्चितज्ञानस्य कारणत्वे व्यभिचारात्"।

नन्वत्रापि तत्वज्ञानं प्रति तत्तत्कर्मणां कारणत्वे व्यभिचार इति वाच्यम्। स्वर्गादिवत् तत्वज्ञाननिष्ठवैजात्यकल्पनात्। अत एव काशीमरणजन्यतावच्छेदकं तत्वज्ञाननिष्ठवैजात्यं कल्प्यत इति सिद्धान्तः। मोक्षस्य एकरूपत्वेन वैजात्याभावादिति। तत्वज्ञानं प्रति तु कर्मणः कारणत्वमदृष्टद्वारा पापनिवृत्तिद्वारावेत्यन्यदेतत्, तस्मात् 'सत्येन लभ्य' इति श्रुतेः सत्यादिप्रयोज्य सम्ज्ज्ञानेन एष आत्मा लभ्य इत्यर्थः। अत एव 'कर्मणैवही'त्यादिना कर्मणः संसिद्धिजनकत्वं, संसिद्धिस्तत्वज्ञानं, न मोक्षः, उक्तदूषणगणग्रासात्। तस्मात् "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनायेति" श्रुत्या मोक्षं प्रति तत्वज्ञानस्यैव कारणत्वमित्युपसंहरन्नाह—**किन्तु ज्ञानेन केवलमिति** कर्मणां तत्तदाश्रमविहितकर्मणा-

मनुष्ठानैः=आचरणैः, दानैः सर्वस्वादि दानैः, तपसा 'तपोनानशनात्पर-मिति श्रवणात् तादृशतपसापि कैवल्यं न लभते' इत्यर्थः ॥ २ ॥

अत्र तत्वज्ञानोपायभूतं शास्त्रं संप्रवक्ष्यामीत्युक्तं, तद्यदिस्वकपोल-कल्पितं स्यात् तर्हि अश्रद्धेयमेवस्यात्। यद्यपि अनुग्रहान्महेशस्येत्युक्त्या स्वकर्तृकेऽपि शास्त्रेऽप्रामाणिकत्वशंका नोदेति। तथापि साक्षादीश्वर-मुखादेव निर्गतशिवगीताशास्त्रं प्रशस्ततममेवेत्यभिप्रेत्याह—

रामाय दण्डकारण्ये पार्वतीपतिना पुरा।
या प्रोक्ता शिवगीताख्या गुह्याद् गुह्यतमा हि सा ॥ ३ ॥

पुरा प्रथमतः पार्वतीपतिना शिवगीताख्योपनिषत् रामाय प्रोक्तेति संबन्धः। रामायेत्यत्रोद्देश्यत्वं चतुर्थ्यर्थः। दण्डकारण्य इत्यनेन उपदेशस्थल प्रकर्षो द्योतितः। पार्वतीपतिनेत्यत्र पार्वती माया, तत्पतित्वं तदधिष्ठातृत्वं। तथा च मायावच्छिन्नस्यैव परब्रह्मणो जगत्कर्तृत्वम्। तदनवच्छिन्नस्य तदसम्भवात्। एवं सति मायापरिगृहीतसकल प्राण्यदृष्टोपार्जितलीलाविग्रहवता भगवता उपादिष्टेत्यर्थः। हिर्हेतौ। यतः शिवगीताख्योपनिषत् शक्त्या लक्षणयाच साक्षात् सगुण-निर्गुण ब्रह्मप्रतिपादिका, अतो गुह्याद् गुह्यतमा, प्रकटगुह्यगुह्यतरेभ्योऽधिकेत्यर्थः बुद्धिस्थवाचकसर्वनाम—यत्तत् समभिव्याहारवशाल्लब्धः। तत्रदेहात्म-वादिनां शास्त्रे प्राकट्यं, धर्मप्रतिपादके शास्त्रे गुह्यत्वं, सगुणब्रह्म-प्रतिपादके शास्त्रे गुह्यतरत्वम्, अतिरहस्यार्थप्रकाशकत्वेन सगुण-निर्गुण ब्रह्मप्रतिपादिकत्वेन च शिवगीताख्योपनिषदो गुह्यतमत्वमिति ध्येयम् ॥ ३ ॥

ननु शिवगीताख्योपनिषद्यदि गुह्यतमा तर्हि अतिरहस्यार्थप्रति-पादकत्वनिबन्धनातिदुःखगाहित्वेन मुमक्षूणां शास्त्रे प्रवृत्तिर्नस्यादित्यत आह—

यस्याः श्रवणमात्रेण नृणां मुक्तिर्ध्रुवा भवेत्।

यस्याः = शिवगीताख्योपनिषदः श्रवणमात्रेण, अत्र मात्रशब्दः अयोगव्यवच्छेदार्थकः, तथा च श्रवणे सति अवश्यं मुक्तिरित्यर्थः। शंखः

पाण्डुर एवेतिवत्। अत्र श्रवणं नाम शिवगीताख्याया उपनिषदः अद्वैते ब्रह्मणि तात्पर्यावधारणानुकूलव्यापारविशेषः। तत्वज्ञानद्वारा मोक्षे संपादनीये श्रवणस्य प्रधानत्वात् मनननिदिध्यासनयोस्तदङ्गत्वात् श्रवणमेवोपात्तमिति ध्येयम्॥ एवं सति "आत्मावा अरेद्रष्टव्यः श्रोतव्योमन्तव्यो निदिध्यासितव्यः" साक्षात् कर्तव्य इति श्रवणमनननिदिध्यासन विधायक श्रुतिरपि साधु सङ्गच्छते नृणां अधिकारिणां मुक्तिः ध्रुवा-नित्या॥ ध्रुवमिति पाठे ध्रुवं नित्यं, तच्च क्रियाविशेषणम्। ध्रुवा हि सेतिक्वाचित्कः पाठः, सापूर्वोक्तकैवल्यरूपा, तस्याः सुखज्ञानस्वरूपत्वेनानित्यत्वं स्यादिति परकीयशंकां निराकुर्वन्नाह ध्रुवेति—

ननु 'ज्ञानमुत्पन्नं विनष्टं सुखमुत्पन्नं विनष्ट' मित्यादि प्रतीतिबलात् ज्ञानसुखयोरनित्यत्वं सिद्धं, तथा च मुक्तेस्तदभिन्नत्वेन तस्या अनित्यत्वं दुर्वारमिति चेत् मैवम्—"नित्यं विज्ञानमानन्दं ब्रह्मे"ति श्रुतितः समानविभक्तिक पदोपात्तानां नित्यविज्ञानानन्दब्रह्मणां परस्परमभेद एव प्रत्याय्यते, न तु विज्ञानाश्रयानन्दाश्रययोरभेदः। नैय्यायिक वैशेषिकयोर्मते विज्ञाने आनन्दे च नित्यत्वं कल्पयित्वा तदाश्रयान्तरमपि कल्पनीयमिति गौरवम्। लाघवाद्विज्ञानन्दयोः ब्रह्मभेदप्रतिपादकत्वं कल्प्यते, एतेन ज्ञानवत्वादिसंबन्धेन ब्रह्मण आनन्दवज्जीवाभेदप्रतिपादकत्वं श्रुतेरिति प्राचीननैय्यायिकमतमप्यपास्तम्॥ अत एव ज्ञानसुखादीनामुत्पादविनाशप्रत्ययानां वृत्तिविषयत्वेनोपपत्तेः न तद्बलादनित्यत्वम्। तस्मात् ज्ञानसुखयोर्नित्यत्वात् तदभिन्नब्रह्मण एवमुक्तिरूपत्वात् सिद्धं मुक्तेर्नित्यत्वमिति। यस्याः स्मरणमात्रेणेति पाठे यस्या इति प्रयोजकत्वे पञ्चमी, तथा च शिवगीताप्रयोज्यरहस्यार्थस्मरणानन्तरमवश्यं मुक्तिर्भवतीत्यर्थः। अत्रापि मात्रपदमुक्तार्थकम्। शेषं पूर्ववत्॥

ननु पुरा रामाय गुह्यतमा शिवेन प्रोक्ता या शिवगीता सा त्वयाकुतोलब्धेत्यत आह—

पुरा सनत्कुमाराय स्कन्देनाभिहिता हि सा॥ ४॥

अत्र रामाय शिवेन शिवगीता प्रोक्तेत्यत्र प्राथम्यवाचिपुराशब्द महिम्ना उपस्थितस्कंदोपदेशात् प्राथम्यं रामोपदेशस्य गम्यते। तथा च

रामोपदेशानन्तरं स्कन्दाय शिवेन प्रोक्ता या शिवगीता सा सनत्कुमाराय स्कन्देन प्रोक्तेत्यर्थः। अत्र पुराशब्दोऽविरतार्थकः तदुक्तं प्रकाशे (प्रसादे) 'पुरेत्यविरते चिरातीते भविष्यदासत्तिष्विति'। अविरतत्वञ्च शिवगीतोपदेश तद्विरोधिप्रसङ्गराहित्यञ्चेति ॥ ४ ॥

ननु सनत्कुमाराय स्कन्देनाभिहिता सा त्वया कुतोऽवसीयत इत्यत आह—

सनत्कुमारः प्रोवाच व्यासाय मुनिसत्तमाः।
मह्यं कृपातिरेकेण प्रददौ बादरायणः ॥ ५ ॥

ननु सनत्कुमारेण व्यासायोपदिष्टापि त्वया कुतोऽधिगतेत्यत आह—मह्यमिति अत्र कृपा—निरुपाधिकपरदुःखप्रहाणेच्छा, तदतिरेकेण तदतिशयेन हेतुना मह्यं बादरायणः तां प्रोक्तवानित्यर्थः। प्रोवाच, प्रददावित्यत्र प्रशब्दः पूर्वोक्ताविरतार्थको बोध्यः, एतेन सत्संप्रदायाविच्छेदो दर्शितः॥ कृपातिरेकेण शास्त्रं दत्वा यदि नियमादिकं न शिक्षितं स्यात् तर्हि शिष्याणामनर्थादिक मापद्येत अतो नियमादिकं शिक्षितमित्याह—

उक्तं च तेन कस्मैचिन्नदातव्यमिदं त्वया।
सूतपुत्रान्यथा देवाः क्षुभ्यन्ति च शपन्ति च ॥ ६ ॥

तेन बादरायणेन कस्मै चित् स्वर्गादिजनक तत्तत्कर्मशालिने इदं गुह्यतमं शास्त्रं, अत्र चशब्दोऽवधारणे, तथा च तादृशाय न वक्तव्यमेवेत्यर्थः॥ अत्र बादरायणोक्तं नियमादिकमृषीन् शिक्षयितुं सूतेनोक्तमिति ध्येयम्। स्वर्गादिजनकतत्तत्कर्मशालिने यदिदीयेतेत्यन्यथाशब्दार्थः। तादृशाय दत्तं चेत् काहानिरित्यत आह—देवा इत्यादि—क्षुभ्यन्ति—प्रकृतिविकारभावं प्राप्नुवन्ति, शपन्ति विरोधानुचिन्तां कुर्वन्ति। अत्र चकारद्वयमवधारणार्थं क्षुभ्यन्त्येव शपन्त्येवेत्यर्थः॥ ६ ॥

अथ पृष्टो मया विप्रा भगवान् बादरायणः।
भगवन् देवताः सर्वाः किं क्षुभ्यन्ति शपन्ति च ॥ ७ ॥
तासा मत्रास्ति का हानिः यया कुप्यन्ति देवताः।
पाराशर्योऽथ मामाह यत्पृष्टं शृणु वत्स! तत् ॥ ८ ॥

अथ देवाः क्षुभ्यन्ति शपन्ति चेति वाक्यार्थज्ञानानन्तरं, न तु नदातव्यमिति व्यासोक्त्यनन्तरं, तर्हि क्षुभ्यन्ति शपन्ति चेत्यनेनैवादातव्यत्वे हेतोरुक्तत्वात् निराकाङ्क्षत्वेन पुनः प्रश्नानुपपत्तेः। किञ्च क्षुभ्यन्ति शपन्ति चेति क्षोभशापकारणप्रश्नेन दातव्यमित्युक्तेः समान विषयत्वाभावेनाप्रयोजकत्वात्। सामान्यतो ज्ञान एव विशेषजिज्ञासोदयात् इति। हे भगवन् देवाः किमर्थं क्षुभ्यन्ति शपन्ति चेत्यत्र शिवगीताशास्त्रोपदेशे क्रियमाणे सति यया हान्यादेवाः कुप्यन्ति? सा (क्षुभ्यन्ति शपन्ति चेत्यत्र शिवगीताशास्त्रोपदेशे) हानिस्तासां केति च मयापृष्टो भगवान् वादरायण इति सम्बन्धः। अत्र भगवच्छब्द "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणे"त्यनेनोक्तार्थो बोध्यः। 'कं क्षुभ्यन्ति' इति पाठे दातारं श्रोतारं वेति प्रश्नार्थः, पाराशर्येति पृष्टः पाराशर्यो व्यासो हे वत्स पुत्र त्वया यत् पृष्टं तत् 'अथ शृण्विति' मामाहेत्यन्वयः। अत्राथशब्दः कात्स्न्यार्थिकः। तथाच कात्स्न्येन शृण्वित्यर्थः, तदुक्तं प्रसादे अथेति "मङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेष्विति" वत्सलेति पाठे वत्साः = अज्ञानिनः; तान् लाति = अनुगृण्हातीति वत्सलः, अज्ञानुग्राहकइत्यर्थः।। अथवा वत्सल दयालो इति।।

प्रश्नस्योत्तरमाह—

नित्याग्निहोत्रिणो विप्राः सन्ति ये गृहमेधिनः।
त एव सर्वफलदाः सुराणां कामधेनवः।। ९।।

नित्यञ्च तत् अग्निहोत्रञ्च, नित्याग्निहोत्रं तत् एषामस्तीति नित्याग्निहोत्रिणः "यावज्जीवमग्निहोत्रं जुहोतीति विहितत्वात् नित्यत्वमग्निहोत्रस्य, अत्र इन् प्रत्ययो नित्ययोगे। हे विप्राः गृहमेधिनः गृहैः = दारैः मेधन्ते सङ्गच्छन्त इति गृहमेधिनो गृहस्थाः, ये सन्ति त एव सुराणां सर्वफलदाः अत एव कामधेनवः, तद्गुणयोगात्।। ९।।

ननु देवतोपास्त्यामनुष्यैर्देवेभ्य इष्टं लभ्यते न तु मनुष्येभ्यो देवैरित्यत्र आह—

भक्ष्यं भोज्यञ्च पेयञ्च यद्यदिष्टं सुपर्वणाम्।
अग्नौ हुतेन हविषा तत् सर्वं लभ्यते दिवि॥ १०॥

अत्र भक्ष्यं कठिन द्रव्यं, भोज्यं मृदुद्रव्यं, पेयं द्रवद्रव्यं, चकाराल्लेह्य-चोष्ये गृह्येते, अपरश्चकारः—एवकारार्थकः स च क्रियासङ्गतः। तथा च लभ्यत एवेत्यर्थः। हुतेनेत्यत्र भावे क्तः। हवनक्रियायां भक्ष्यादिकर्मत्वं, हविःकरणकत्वमन्वेति। अत्र हविः घृतं, "घृतमाज्यञ्च हविरित्यमरः। अत्र यद्यपि पेयमित्यनेनैव घृतस्यलाभात् हविषेतिव्यर्थं, तथापि घृतस्य अतिशयत्वद्योतनार्थं तथोक्त"मिति ध्येयम्। तथाच श्रुतिः—"देवा आज्यपा आज्यमजुषन्त। चक्षुषी वा एते यज्ञस्य यदाज्यभागा"विति च। 'एवं सति भक्ष्यादिकर्मक–हविःकरणक–देवतोद्देश्यकत्यागेन दिवि यद्यदिष्टं तत् सर्वं सुपर्वभिः लभ्यत' एवेति वाक्यार्थः। सुपर्वणामित्यत्र 'क्तस्य च वर्तमान' इति षष्ठी। तथा च सुपर्वणां यद्यदिष्टमिच्छा-विषयीभूतं तत्तदर्थात् सुपर्वभिर्लभ्यत इत्यर्थः। अत्राग्नौ हुतेन हविषा भक्ष्यादिकं यद्यदिष्टं सुपर्वणां तत् सर्वं दिवि लभ्यत इति तुनार्थः। यतस्तै रस एव भुज्यते, नतु रस विशिष्टमपूपादिकं मनुष्यवत्तैर्भुज्यते। तदुक्तं मंत्रशास्त्रे-सपर्यासप्तके-आचार्यचरणैः—"मलधातुरसाभिधानमेतत् पृथिवी-वह्निजलात्मकं जलाद्यं। उपहारविधानमत्र देवे रस एवाञ्चति पञ्चभूतसूक्ष्मः"॥ ९॥

सपुन स्त्रिविधो रसः सुधांशुः प्रकृतिश्चेति सुखोत्तरैः स्वरूपैः। रसभेदसमष्टिरिन्दुरुक्तः प्रकृतिः केवलमीश्वरोपभोग्या॥ २॥

तद्व्याख्यानेऽपि—तत्र सूक्ष्माणि भूतानि भोग्यान्येव दिवौकसां, तान्यादाय तदाकाररसस्तदनुधावति "मनुष्यत्वेऽन्नपानादि देवत्वेऽप्यमृतं भवेदित्यादि स्मरणाच्च"॥ १०॥

यद्यपि हविर्भुजां त्रयस्त्रिंशद्देवानां तृप्तिकारणममृतकामधेन्वादिक-मन्यदप्यस्ति, तथापि स्वस्वोद्देश्यकमन्त्रपूर्वक हविःस्त्यागप्रयोज्यप्रीति-विशेषस्याऽऽधिक्यख्यापनार्थमाह—

नान्यदस्ति सुरेशाना मिष्टसिद्धिप्रदं दिवि।
दोग्ध्री धेनुर्यथा नीता दुःखदा गृहमेधिनाम्॥ ११॥

तथैव ज्ञानवान् विप्रो देवानां दुःखदो भवेत्।
त्रिदशास्तेन विघ्नन्ति प्रविष्टा विष्टपं नृणाम्॥ १२॥

सुरेशानामित्यत्र सुराः कर्मदेवाः। तेषामीशानाः श्रेष्ठाः हविर्भागभोजिनः त्रयस्त्रिंशद्देवाः तेषामित्यर्थः। का हानिरिति प्रश्नस्योत्तरमाह—दोग्ध्रीत्यादिना—दोग्ध्रीत्यत्र दुग्धे गौः पयः स्वयमेवेत्यादिवत् कर्मकर्तरितृचः प्रयोगः, एतेन स्वयमेव दुग्धं प्रयच्छतीति तादृशीगौश्चेन्नीता तर्हि सा अतिशयदुःखजनिकेति ध्वनितम्। धेनुः धानकर्मगौः नीतेति नयनं प्रापणं तच्चेद्देशान्तरसंबंधः, तेन दुग्धप्रयोजकीभूतप्रकृतसंबंध सामान्याभाव उपलक्षितो यथा तथेति सादृश्ये, सादृश्यञ्च दुःखजनकत्वं गृहमेधिनां देवानामित्यत्र षष्ठ्यर्थः दुःखेऽन्वेति, देवदत्तस्य गुरुकुलमित्यादिवत् नित्यसंबंधित्वेन तथैव साकांक्षत्वमिति॥ वस्तुतस्तु गृहमेधिनामित्यत्र षष्ठ्यर्थो विशेष्यीभूतायां दुःखदायामन्वेति, षष्ठ्यर्थश्च तद् वृत्तिजनकत्वरूपः संबंधः। यद्यपि संबंधे षष्ठी संबंधसामान्यबोधजनिका। तथापि तात्पर्यवशात् संबंधविशेषे पर्यवसानं, चैत्रस्य धनमित्यादिवत्। तथापि नैतादृशस्थले एकदेशान्वय इति तत्वम्॥ अत्र विप्रशब्देन कर्मशालित्वं लक्ष्यते। ननु कर्मशालिनां ज्ञानवत्वे देवानां दुःखं, तावता एतेषां काहानिरित्यत आह—त्रिदशा इतिं। त्रिदशाः हविर्भागभोजिनः, तेन हविर्भागभोजनाभावेन नृणां विष्टपं मनुष्यलोकं प्रविष्टा विघ्नन्ति तत्वप्रयोजकीभूतश्रवणमनननिदिध्यासनादिकं प्रतिबध्नन्ति इत्यर्थः। विषयमिति पाठे विषयं रूपाद्याश्रयं इन्द्रियार्थं, "विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि चेति विश्वः।" तं प्रविष्टा......देवा विघ्नन्ति तत्तद्विषयभोगेच्छामुत्पादयन्ति। नतु शिवगीताश्रवणादावित्यर्थः। हृदयमितिपाठे हृदयं मनः, "चित्तं तुचेतो हृदयंस्वान्तं हृन्मानसं मन" इत्यमरः। तत्प्रविष्टाः सन्तो विघ्नन्ति मनश्चांचल्यं कुर्वन्ति। तेन शिवगीताश्रवणे प्रवृत्तिर्न भवतीत्यर्थः॥ १२॥

ननु देवा विरोधानुचिन्तां कुर्वन्तु नाम, तावता शिवभक्तिमतां काहानिरित्यत आह—

ततो न जायते भक्तिः शिवे कस्यापि देहिनः।
तस्मादविदुषां नैव जायते शूलपाणिनः॥ १३॥

ततः देवविरोधानुचिन्तनात्, अत्र पञ्चम्याः प्रयोज्यत्वमर्थः। तथा च देवविरोधानुचिन्तनप्रयोज्यभक्त्यभाव इत्यर्थः। तत्प्रयोज्यत्वञ्च तत्तद्विषयावष्टम्भप्रयुक्ततत्तद्विषयरागप्रतिरुद्धशिवगीताश्रवणेच्छाविरहप्रयुक्ततत्तत्प्रवृत्यभावनिवन्धनशिवस्वरूपाज्ञानोत्तरवर्तित्वं। अत्र आराध्यत्वेन ज्ञानं भक्तिः, सा च शिवस्वरूपापरिचये न संभवतीति भावः। अत्र भक्त्यभावइत्युपलक्षणम्। अनेन श्रद्धाविरहोपि द्रष्टव्यः। कस्यापि देहिनः कर्मशालिन इत्यर्थः।

ननु भक्तेः कुत्रोपयोगः? न तावत्तत्वज्ञाने, सत्सु श्रवणादिषु भक्तिविलम्बेन तत्वज्ञानविलम्बाभावात्। नाऽपि मोक्षे, आवश्यकतत्वज्ञानादेव मोक्षसंभवात्, न तस्याः कारणत्वमिति चेन्न, भक्तिश्रद्धेविना तत्वज्ञानस्यवानुत्पादात्। स्मर्यते च भागवते दशमस्कन्धे ब्रह्म स्तुतौ—

"श्रेयः स्रुतिं भक्तिमुदस्य ते विभो। क्लिश्यन्ति ये केवलबोधलब्धये, तेषामसौ क्लेशल एव शिष्यते। नान्यद्यथास्थूलतुषावघातिना"मिति॥ श्रूयते च—"श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येदिति॥" तथा च द्वयोः तत्वज्ञानमुक्तिकारणत्वम्। मोक्षं प्रतितु अन्यथासिद्धत्वान्न कारणत्वमिति पूर्वोक्तार्थमेवोपसंहरन्नाह—तस्मादित्यादि। शूलपाणिन इत्यस्य विदुषामित्यनेन संबंधः। अत्र षष्ठ्यर्थः विषयविषयिभावसंबंधः। तथा च शूलपाणिविषयकज्ञानाभाववतामित्यर्थः। शूलपाणिशब्दः योगरूढः, शूलपाणेरिति वक्तव्ये शूलपाणिन इति तु छान्दसःप्रयोगः। 'न जायत' इत्यत्र भक्तिरित्यनुषज्यते। एवकारो विदुषामित्यनेन संबद्धचते॥ १३॥

ननु देवविरोधनानुचिन्तनप्रयोज्यो भक्त्यभाव इत्युक्तं तदसङ्गतम्। आराध्यत्वेन ज्ञानं भक्तिः, सा च श्रवणात्प्रागपि जातैवेति देवानां कुत्र प्रतिबन्धकत्वमित्यत आह—

यथाकथंचिज्जाताऽपि मध्ये विच्छिद्यते नृणाम्।
जातं वाऽपि शिवज्ञानं न विश्वासं भजत्यलम्॥ १४॥

यथाकथञ्चित्सामान्यतो जाताऽपि आराध्यत्वज्ञानरूपा भक्तिः अप्रयोजिकेति शेषः। अत्र सामान्यतः आराध्यत्वज्ञानरूपभक्ति प्रति

देवानामप्रतिबन्धकत्वेपि श्रवणोत्तरभावितत्वज्ञानफलोपधायकाराध्यत्व-ज्ञानविशेषरूपभक्त्यभावं प्रति श्रवणादिविघटनद्वारा देवविरोधचिन्तनस्य प्रयोज्जकत्वमित्याह—मध्य इत्यादिना। मध्य इत्यनेन सामान्य ज्ञानोत्तरः श्रवणात्प्राक्समयो विवक्षितः। विच्छिद्यत इति कर्मकर्तरियक्। पूर्वोक्तभक्तिविशेष एवात्रानुषज्यते। नृणां कर्मशालिनां। ननु पूर्वोक्त सामान्यत आराध्यत्वेन शिवज्ञानादेव (तत्वज्ञानादेव) तत्वज्ञानोपपत्तौ किमान्तरालिकशिवज्ञानविशेषेणेत्यत आह—जातं वेत्यादि। श्रवणा-त्प्राग्जातमपि तादृशं शिवज्ञानं अश्रद्धामलकलङ्कितत्वेन तत्वज्ञानं प्रति न पर्याप्तं प्राप्नोतीत्यर्थः। एतावता 'कं क्षुभ्यन्ति, शपन्ति चेति' प्रश्न-स्याप्युत्तरं श्रोतारं प्रत्येवेति प्रकरणादवसीयते॥ १४॥

ऋषय ऊचुः—

यद्येवं देवता विघ्नमाचरन्ति तनूभृताम्।<br>
पौरुषं तत्र कस्यास्ति यथा मुक्तिर्भविष्यति॥ १५॥<br>
सत्यं सूतात्मज ब्रूहि तत्रोपायोऽस्ति वा नवा।

सूत उवाचः—

कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते॥ १६॥

एवं पूर्वोक्तरीत्या तनूभृतां कर्मशालिनां पौरुषं देवविघ्ननिवारण-सामर्थ्यं, अन्यत्सर्वं तत्र उपायोऽस्ति नवेत्येतदन्तं सुगमम्॥

ननु देवा यदि तत्वज्ञानप्रयोजकीभूतश्रवणादिकं प्रतिबध्नन्ति तर्हि मोक्षार्थिनां प्रवृत्तिरेव न स्यादित्यत आह—कोटिजन्मार्जितैरित्यादि। तथा च कोटिजन्मार्जितान्येव पुण्यानि देवप्रतिबन्धे उत्तेजकानि, प्रतिबन्ध प्रतिबन्धकस्यैवोत्तेजकत्वात्। सत्स्वपि देवप्रतिबन्धेषु तादृशपुण्य-रूपोत्तेजकसत्वात् मुमुक्षूणां प्रवृत्तेस्संभवादिति भावः। अत्रेदं विचार्यते—कोटिजन्मार्जितैरित्यत्र जन्मसु कोटित्वाश्रयत्वं किं पर्याप्त्याख्यसंबंधेन? आहोस्वित् प्रत्येकवृत्तिसंबंधेन? नाद्यः, सजातीयसंवलनतृणस्तम्बस्य घनमुक्तोदकनिवारकत्ववत् कोटिजन्मनां संवलनासंभवात्सकलतादृश-जन्मोपार्जितपुण्याप्रसिद्धेः। न द्वितीयः, प्रत्येकवृत्तिसंबंधेन कोटित्वाश्रय-

प्रत्येकसकलजन्मार्जितपुण्याप्रसिद्धेरिति। मैवं, जन्मार्जितैः कोटिपुण्यैरिति योजना। तथा च कोटिभिः जन्मार्जितैः पुण्यैरिति। एवं सति कोटीनां जन्मोपार्जितानां पुण्यानां एकत्रात्मनि संवलनात्तेन शिवभक्तिः दृढा जायत इति भावः। प्रशब्दस्य प्रकर्षोर्थः। स च प्रकृते दाढर्च्यम्। शिव इति विषयसप्तमी, शिवविषयिणी भक्तिरित्यर्थः॥ १६॥

इष्टापूर्तानि कर्माणि तेनाचरति मानवः।
शिवार्पणधिया कामान् परित्यज्य यथाविधि॥ १७॥

तेन शिवभक्तिरूपकारणेन इष्टं यागादि, पूर्तं तटाकादि, तानि कर्माणि मानवः मोक्षार्थी। ननु मोक्षार्थिनां कर्माचरणेन किं प्रयोजनं, भक्त्यैव तेषां तत्वज्ञानं संभवति इत्यत आह—शिवार्पणधियेत्यादिना। तथा च बन्धजनकीभूतकामान्परित्यज्य शिवार्पणधिया शिवविषयक-कर्मार्पणबुद्ध्या पूर्वोक्तकर्माण्याचरति यथाविधि विध्युक्तप्रकारेणे-त्यर्थः। तानि कर्माणि अन्तःकरणशुद्धिद्वारा मोक्ष उपयुज्यन्त इत्यतः तानि कर्माणि करोतीति। तदुक्तं भगवद्गीतायां—"योगिनः कर्म-कुर्वन्ति सङ्गंत्यक्त्वात्मशुद्धय" इति॥ १७॥

अनुग्रहात्तेन शंभोः जायते सुदृढो नरः।
ततो भीताः पलायन्ते विघ्नं हित्वा सुरेश्वराः॥ १८॥

तेन निष्कामकर्मानुष्ठानेन शंभोरनुग्रहः, तस्मात् नरो मोक्षार्थी सुदृढः निश्चलान्तःकरणो जायते। तथा च मनस्थैर्ये जाते सर्वमेव जितं भवति। तदुक्तम्—"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इति। ननु मनसः स्थैर्ये जातेऽपि देवाः मनश्चाञ्चल्यार्थं कुतो न यतन्त इत्यत आह—तत इति। ततः शंभोरनुग्रहात् भीताः सुरेश्वराः विघ्नस्य वैफल्येन तद्धित्वा पलायन्ते। तथा चानुग्रहनिबन्धनदाढर्च्ये जातेऽनुग्रह-कर्तुः सकाशाद्भीतिरुचितेति भावः॥ १८॥

जायते तेन शुश्रूषा चरिते चन्द्रमौलिनः।
शृण्वतो जायते ज्ञानं ज्ञानादेव विमुच्यते॥ १९॥

तेन विघ्नाभावप्रयुक्तनिश्चलान्तःकरणेन चन्द्रमौलिनः चन्द्रमौलेः चरिते-गुण-कर्मणि चन्द्रमौलिपदेन चरितपदेन च लीलाविग्रहवत्वं प्रदर्शितम्। तथा च लीलाविग्रहप्रयुक्ततत्तद्गुणकथाविषयिणी शुश्रूषा जायत इत्यर्थः। एवञ्च प्रथमतः सगुणब्रह्मस्वरूपं ज्ञात्वा तदनन्तरं निर्गुणब्रह्मस्वरूपं ज्ञातव्यमिति भावः। ननु श्रवणे जातेऽपि कथं मोक्षः ? स तु ज्ञानादेव लभ्यः। तच्च ज्ञानं कुत इत्यत आह-शृण्वत इति। तथा च शृण्वतो ज्ञानं, ज्ञानादवश्यं मुक्तिर्जायत इत्यर्थः॥ १९॥

ननु ईश्वरानुग्रहवशादेव कृतविघ्ने निवारितेऽपि बहुजन्मार्जित-दुरितरूपविघ्नसत्वात् कथं तत्वज्ञानोदय इत्यत आह—

बहुनाऽत्र किमुक्तेन यस्य भक्तिः शिवे दृढा।
महापापोपपापौघकोटिग्रस्तोऽपि मुच्यते॥ २०॥

यस्य शिवविषयिणी दृढाभक्तिः सः महापाताकादिकोटिभिः ग्रस्तो-ऽपि मुच्यत इति भक्तिभावेन तानि पापानि नश्यन्तीत्यर्थः। अत्र महा-पापोपपापौघ इति पाठे महापापं ब्रह्महत्यादिकं उपपापानि तेषामोघाः समूहा इत्यर्थः। महापापाघपापौघ इति पाठे महापापानि प्रसिद्धानि, अघानि अतिपातकानि मातृगमनादीनि, पापानि अनुपातकानि, तेषा-मोघाः समूहा इत्यर्थः। महापापाद्यपापौघ इति पाठे महापापं ब्रह्म-हत्यादि, तदेव आद्यं येषां अतिपातकोपपातकनुपातकानां तेषामोघाः॥ ॥ २०॥

अत्र मोक्षार्थिनः प्रवृत्यर्थं भक्तिं स्तौति—

अनादरेण शाठ्येन परिहासेन मायया।
शिवभक्तिरतश्चेत्स्यादन्त्यजोऽपि विमुच्यते॥ २१॥

अनादरेण इच्छाविशेषाभावेन, शाठ्येन-दौर्जन्येन निन्दयेत्यर्थः। परिहासेन-विनोदवाक्यविशेषेण, मायया प्रतारणयेति एवं रूपेण शिव-भक्तिरतश्चेत्स्यात् अन्त्यजोऽपि विमुच्यत इत्यर्थः॥ २१॥

अत्र उक्तप्रकारेण भक्तौ सुलभायामऽपि यस्तां न करोति स निन्द्य-एवेत्याह—

एवं भक्तिश्च सर्वेषां सर्वदा सर्वतोमुखी।
तस्यां तु विद्यमानायां यस्तु मर्त्यो न मुच्यते।
संसारबन्धनात्तस्मादन्यः को वाऽस्ति मूढधीः ॥ २२ ॥

संसारबन्धनाद्यो न मुच्यत इति योजना। तस्मात्सर्वप्रयत्नेन भक्तिः कर्तव्येति भावः। अन्यत्सर्वं सुगममेवेति ॥ २२ ॥

ननु शिवद्रोहादेः कथं मुक्तिजनकत्वं, लोके राजद्रोहादीनां विपरीतफलदर्शनादित्यत आह—

नियमाद्यस्तु कुर्वीत भक्तिं वा द्रोहमेव वा।
तस्याऽपि चेत्प्रसन्नोऽसौ फलं यच्छति वाञ्छितम् ॥ २३ ॥

तथाच शिवविषयकनियमेन यस्तु द्रोहादिकं करोति सोऽपि शिवभक्तसम इत्यर्थः। द्वयोः साम्यं प्रदर्शयन्नाह—तस्याऽपीति। द्रोहादिकं कृतवतोपीत्यर्थः। तथा चेश्वरस्य सर्वत्र समत्वाद्राजदृष्टान्तोनुपपन्न इति भावः। अत्र भक्तिः आराध्यत्वेन ज्ञानम्, वाशब्दद्वयमवधारणार्थकम्। "स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः" इत्यमरः। चेदिति यद्यर्थे। एवकारो भिन्नक्रमः। तथा च यदि नियमेन भक्तिमेव कुर्वीत, यदि द्रोहमेव कुर्वीत तस्य प्रसन्नस्सन्फलं प्रयच्छत्येवेत्यर्थः ॥ २३ ॥

पूर्वं भक्तिद्रोहयोः नियमप्रयुक्तं फलसाम्यमुक्त्वा इदानीं बहुस्वल्पद्रव्यसाध्यपूजाजनितफलयोरपि साम्यमाह—

ऋद्धं किंचित्समादाय क्षुल्लकं जलमेव वा।
यो दत्ते नियमेनाऽसौ तस्मै दत्ते जगत्त्रयम् ॥ २४ ॥

ऋद्धं षड्रसोपेतमन्नं किञ्चित्फलमूलादिकं, क्षुल्लकं स्वल्पं जलमेव वा, सम्यक्त भक्तिपूर्वकत्वं, आदाय गृहीत्वा, तथा च भक्तिपूर्वकं नियमेन यो दत्ते पूजां करोति तस्मै असौ शिवः जगत्रयं दत्ते जगत्त्रयैश्वर्यं हिरण्यगर्भपदवीं प्रयच्छतीत्यर्थः। अत्र भक्तेरेव नियामकत्वादिति भावः। इदञ्च सगुणब्रह्मोपासनाफलमिति ध्येयम् ॥ २४ ॥

पूर्वं बहुस्वल्पद्रव्यसाध्यपूजाफलयोः साम्यमुक्त्वा इदानीं शिवोद्देश्यककेवलकायिकव्यापारस्य फलमाह—

तत्राप्यशक्तो नियमान्नमस्कारं प्रदक्षिणम् ।
यः करोति महेशस्य तस्मै तुष्टो भवेच्छिवः ॥ २५ ॥

तत्रापि पूजायामपि अशक्तः अत्र करोत्यर्थः नमस्कारे प्रदक्षिणे च प्रत्येकमन्वेति। तथा च तादृशपूजायामशक्तो जनः यः नियमतो महेशस्य नमस्कारं प्रदक्षिणं च करोति, महेशः तस्मै तुष्टो भवेत्, तदुद्देश्यकप्रीतिमान्भवेदित्यर्थः ॥ २५ ॥

प्रदक्षिणादावशक्तस्यापि सुलभाभीष्टफलसाधनमाह—

प्रदक्षिणेष्वशक्तोऽपि यः स्वान्ते चिन्तयेच्छिवम् ।
गच्छन्समुपविष्टो वा तस्याभीष्टं प्रयच्छति ॥ २६ ॥

प्रदक्षिणेष्वित्यत्र बहुवचनेन त्रित्वं बोद्धयते "वसन्ताय कपिञ्जलानालभेत" इतिवत्। स्मर्यते च—"एकं गणाधिपे कुर्याद् द्वे सूर्ये त्रीणि शङ्करे" इति। गच्छन्समुपविष्टोवेत्यनेन देशकालनियमाभावः सूचितः। चिन्तयेत्स्मरेदित्यर्थः। तस्याभीष्टमिति। तस्येति अभीष्टेन संबद्धयते। तथा च तस्य यदभीष्टं तत्प्रयच्छतीत्यर्थः। षष्ठयर्थश्च तद्वृत्तीच्छाविषयत्वरूपः संबंधः ॥ २६ ॥

पूर्वोक्तर्द्धद्रव्यसाधनाशक्तस्य शरीरदाढर्यवतः साङ्गपूजेच्छावतः सुलभानि पूजासाधनानि ऋद्धमित्येतदनन्तरं क्षुल्लकमित्येतत्पूर्वं सिंहगुहावलोकन्यायेनाह—

चन्दनं बिल्वकाष्ठस्य पुष्पाणि वनजान्यपि ।
फलानि तादृशान्येव यस्य प्रीतिकराणि वै ॥ २७ ॥

पूर्वोक्त क्षुल्लकजलाद्यपेक्षया वनद्रव्यस्य बह्वायाससाध्यत्वेन प्रकरणासङ्गत्या तथैव तात्पर्यात् बिल्वकाष्ठस्य चन्दनमनुलेपनं, पुष्पाणि वनजानि पद्मोत्पलादीनि तादृशानि तत्तत्कालोद्भवानि वनजानि फलानि बदरीफलादीनि अपि शब्दाद्बिल्वपत्रादिपरिग्रहः, ईदृशानि सर्वाणि वनजानि यस्य प्रीतिकारण्येव ॥ २७ ॥

दुष्करं तस्य सेवायां कर्माऽस्ति भुवनत्रये ॥ २८ ॥

तस्य सेवायां सत्यां भुवनत्रये किं दुष्करम् किं दुष्प्रापमित्यर्थः ॥ २८ ॥

ननु परमेश्वरस्योत्तमग्राम्यद्रव्येणैव पूजोचिता। तेनैव तस्य प्रीतिर्भवति। न तु अर्कद्रोणपुष्पादिना, तेषां निर्गन्धत्वादिना हेयत्वादित्यत आह—

वन्येषु यादृशी प्रीतिः वर्तते परमेशितुः।
उत्तमेष्वऽपि नास्त्येव ग्रामजेष्वऽपि तादृशी ॥ २९ ॥

वन्येषु फलपुष्पादिषु परमेशितुः परमैश्वर्यवतोऽपि यादृशी प्रीतिः वर्तते, ग्रामजेषूत्तमेष्वपि तादृशी प्रीतिर्नास्त्येव। अयं भावः—परमैश्वर्यवतोऽपि तस्योत्तमत्वप्रयुक्तप्रीतिर्नास्त्येव। उत्तमत्वं भोगार्हत्वं, तच्च लिप्सानिबन्धनं, तस्य सा नास्त्येव। तदुक्तं महिम्नस्तुतौ—"न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति" इति ॥ एवं सति अर्कद्रोणादीनां पुष्पाणां निर्गन्धत्वेपि हेयत्वाभावः, किन्तु भक्तिप्रयुक्त एव तत्प्रीतिविशेषः, एतावता भक्तितारतम्यनिवन्धनप्रीतितारतम्यं, न तु विषयप्रकर्षापकर्षनिबन्धनमिति। अथवा ग्राम्योत्तमसाधनपूजानिन्दा न हि निन्दान्यायेनाह—क्षीरहोमस्तुत्यर्थजर्तिलगवीधुकयवागूहोमनिन्दावत् वन्यपूजासाधनस्तुत्यर्था, न तु ग्राम्योत्तम साधननिषेधार्थेति ध्येयम् ॥ २९ ॥

ननु सर्वेषां शिवाभिन्नत्वेन शिवत्वातिरिक्तरूपेण इन्द्रादीन्मोक्षार्थी किमिति नोपास्त इत्यत आह—

तं त्यक्त्वा तादृशं देवं यस्सेवेतान्यदेवताम्।
स हि भागीरथीं त्यक्त्वा सेवते मृगतृष्णिकाम् ॥ ३० ॥

तं सर्वेश्वरत्वेन प्रसिद्धं तादृशं स्वल्पपूजयापि बहुफलदं देवं स्वप्रकाशरूपं त्यक्त्वा यः मोक्षार्थी अन्यदेवतां अन्यत्वेन शिवत्वातिरिक्तेन रूपेण देवतां सेवेत, सः भागीरथीं विविधतृष्णोपशमनीं सकललोकैकपावनीं हित्वा मृगतृष्णिकां मरुमरीचिकां काङ्क्षते काङ्क्षतीत्यर्थः। तथा च शिवतत्वप्रकारकोपासनैव कैवल्यरूपमोक्षजनिकेति ध्येयम् ॥ ३० ॥

ननूक्तरीत्या सुलभे साधने सर्वेषां सर्वदा सर्वत्र विद्यमाने इयताकालेन सर्वे उच्छिन्नसंसाराः स्युरित्याशङ्क्य परिहरति—

किन्तु यस्यास्ति दुरितं कोटिजन्मसु संचितम्।
तस्य प्रकाशते नाऽयमर्थो मोहान्धचेतसः ॥ ३१ ॥

पूर्वस्माद्वैलक्षण्यं प्रदर्शितं किन्त्वित्यनेन, किन्तद्वैलक्षण्यमित्यत आह—यस्येत्यादि। अयमर्थ इति—सुलभद्रव्यसाध्यया पूजया मम बहुफलं मुक्तिर्भविष्यतीत्येवंरूपोऽर्थः मोहान्धचेतसः मोहः "शिवः आराध्य" इत्यर्थावारकमज्ञानं तेनान्धं प्रकाशासमर्थं चेतः यस्य तस्य न प्रकाशते। अत्र तुशब्दोवधारणे, 'तुस्याद्भेदेवधारणे' इत्यमरः। तथा च न प्रकाशत एवेत्यर्थः। ननु कोटिजन्मार्जितपुण्यवशादेव भक्तिरुत्पद्यत इत्युक्तम्। तदभावादेव भक्तेरभावः। तथा च बहुपापप्रदर्शनमसङ्गतमेवेति चेन्न। कोटिजन्मार्जितपुण्यसत्वेपि विविध पापबाहुल्यादन्तःकरणस्य कलुषितत्वेन तादृशज्ञानानुदयात्। एवं सति प्रबलतादृशदुरितशून्यानां तादृशपुण्यवतामेव तादृशोर्थः प्रकाशत इति भावः। अतस्सर्वेषां तादृशोर्थो न सुलभ इति न पूर्वोक्तदोषावकाश इति॥ ३१॥

पूर्वं गच्छन्नित्यादिना साकारस्मरणे देशकालनियमाभाव (इति) फलविशेषश्चोक्तः। इदानीं सोऽहमित्याकारके ध्याने देशकालनियमाभावपूर्वकं फलविशेषमाह—

न कालनियमो यत्र न देशस्य स्थलस्य च।
यत्रास्य चित्तं रमते तत्र ध्यानेन केवलम्॥ ३२॥
स्वात्मत्वेन शिवस्याऽसौ शिवसायुज्यमाप्नुयात्॥

चकाराद्दिगासननियमो गृह्यते। ननूभयत्र देशकालनियमाभाव उक्तः। स चासङ्गतः। वैदिककर्मत्वेन देशकालनियमस्यावश्यकत्वात्। तथाहि—"ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशीति" दिङ्नियमः, "प्राचीनप्रवणे वैश्वदेवेन यजेते"ति देशनियमः, "वसन्ते वसन्ते ज्योतिषा यजेते"ति कालनियमः, "पर्वताग्रे, नदीतीर" इत्यादि स्थलनियमः। तदेतन्नियमचतुष्टयं यथा कर्मणि दृश्यते तथोपासनायामपि वैदिकत्वाविशेषादिति चेन्न। ऐकाग्र्यं हि ध्यानस्य प्रधानं साधनम्—न च तस्य दिगादिनियतः कश्चिदतिशयो दृश्यते॥ अतो नास्ति नियमः। अत एव श्रुतिः—योगाभ्यासाय प्रदेशं निर्दिशन्ती 'मनोनुकूल' इत्येव आह, यस्मिन्देशे सौमनस्यं तत्रैव युञ्ज्यात्। न तु शास्त्रेणनियमितः कश्चिद्देशोस्तीत्यर्थः। "समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः।

मनोनुकूले न च चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेदि"ति योगाभ्यासाय देशविशेषः श्रूयत इति चेत्। न। दृष्ट सौकर्यार्थं तदिति वाक्यशेषे मनोनुकूलत्वविशेषणान्निश्चीयते। तस्मान्नास्ति दिगादिनियमः। तथा च पूर्वोक्तस्मरणस्थलेपि कालादिनियमाभाव उपपद्यते। तथा च व्याससूत्रं—"यत्रैकाग्रता तत्राविशेषादि"ति॥ यत्र तत्रेति देशकालसाधारणं अस्य मोक्षार्थिनः चित्तं रमते स्थिरं भवति केवलं ध्यानेन शिवोहमस्मीत्याकारकेण सायुज्यमवाप्नुयात् शिवस्येति ध्यानेनाऽन्वयः॥ ३२॥

अत्र पूर्वोक्तशिवोहमस्मीति वाग्विषयीभूतशिवस्य लोकप्रसिद्धराजवैषम्यं प्रदर्श्य राजसाम्यं परिहरन्मनोवाक्कायकृतशिवोपासनायाः कैवल्यरूपफलमपि प्रदर्शयन्नाह—

अतिस्वल्पतरायुःश्रीर्भूतेशांशाधिपोऽपि यः।
स तु राजाहमस्मीति वादिनं हन्ति सान्वयम्॥ ३३॥

वैषम्यमेव प्रदर्शयति—अतिस्वल्पेत्यादिना। आयुश्च श्रीश्च आयुश्रियौ, अति स्वल्पतरे आयुश्रियौ यस्य सः। भूतेशांशाधिप इति—भूतेशः परमेश्वरः तस्य अंशा राजानः, "यद्यद्विभूतिमत्सत्वमि"त्युक्तत्वात् तेषामधिपश्चक्रवर्ती। यः सोऽपि राजाहमस्मीति वादिनं सान्वयं हन्ति। किमुत परमेश्वरस्य वार्तेति॥ ३३॥ अत्र राजसाम्यं परिहरति—

कर्तापि सर्वलोकानां अक्षय्यैश्वर्यवानपि।
शिवः शिवोऽहमस्मीति वादिनं यं च कंचन॥ ३४॥
आत्मना सह तादात्म्यभागिनं कुरुते भृशम्॥ ३५॥

सर्वलोकानां कर्ताऽपि अक्षय्यैश्वर्यवानऽपि शिवः शिवोहमस्मीति ध्यानपूर्वकं भृशं पौनःपुन्येन शिवोहमिति वादिनं "अत इनी"ति इनिप्रत्ययः। यं कञ्चनमोक्षार्थिनं आत्मना सह तादात्म्यभागिनं भागः भजनं संबंधः भावे घञ्, तदाश्रयं स्वस्वरूपमिति यावत्। कुरुते तत्संपादयतीत्यर्थः। तथा च यः कश्चन चक्रवर्ती राजाहमस्मीति अनृतवादिनं भेदज्ञानात् द्वेषात्तं सान्वयं हन्ति, परमेश्वरः द्वेषाभावात्सत्य वादित्वेन स्वस्वरूपं प्रयच्छतीति भावः॥ ३५॥

पूर्वं तत्तत्साधनस्य तत्तत्फलजनकत्वमुक्तं, इदानीं धर्मार्थकाममोक्ष-रूपसकलफलकपाशुपतव्रतं वक्तुं भूमिकामारचयति —

धर्मार्थिकाममोक्षाणां पारं यास्यथ येन वै।
मुनयस्तत्प्रवक्ष्यामि व्रतं पाशुपताभिधम्॥ ३६॥

पारं साकल्यं यास्यथ प्राप्स्यथ येन पाशुपतनामधेयकेन व्रतेन, हे मुनयः तत् पाशुपतभिधं व्रतं प्रवक्ष्यामि साङ्गोपाङ्गं वक्ष्यामीत्यर्थः॥ ३६॥

संक्षेपेण पाशुपतव्रतप्रकारमाह—

कृत्वा तु विरजां दीक्षां भूतिरुद्राक्षधारिणः।
जपन्तो वेदसाराख्यं शिवनाम सहस्रकम्॥ ३७॥

विरजां विगतं रजः रागद्वेषादिलक्षणो यस्यास्तां विरजां अयमर्थो नारायणोपनिषद्भाष्ये विरजाहोमप्रकारणे द्रष्टव्यः। अकारान्तोऽपि विरज शब्दोस्ति—"तथा रजोयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिष्वि"ति अजयकोशात्। अर्थाः पादरजोपमाः इत्यादि प्रयोगाच्च, भूतिः भस्म, रुद्राक्षधारिणः वेदसाराख्यं वेदसार इत्याख्या अभिधायस्य तत्, 'नमः पराय देवाय शङ्कराय महात्मने' इत्यादि शिवनामसहस्रकं जपन्तः, अत्र जपः उच्चैरुपांशुर्मानस इति त्रिप्रकारोऽपि बोध्यः॥ ३७॥

सन्त्यज्य तेन मर्त्यत्वं शैवीं तनुमवाप्स्यथ।
ततः प्रसन्नो भगवाञ्छङ्करो लोकशङ्करः॥ ३८॥
भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यति॥ ३९॥

एतादृशा यूयं तेन पाशुपतव्रतेन मर्त्यत्वं मनुष्यशरीरत्वं सन्त्यज्य शैवीं शिवप्रसादार्हां तनुं अवाप्स्यथ प्राप्स्यथ। ततः पाशुपतव्रताचरणात् भगवान् लोकशङ्करः लोकानां शं सुखं करोतीत्येवंरूपः शंकरः प्रसन्नः फलदानोन्मुखस्सन् दृश्यतां दर्शनविषयतां प्राप्य वः युष्माकं कैवल्यं प्रदास्यति। अत्र पाशुपतव्रतस्य चतुर्वर्गफलकत्वमुक्तम्। तत्र यत्काम-नया येन पाशुपतव्रतं क्रियते तस्य तादृशं फलं भवति। प्रकृते च मुनयो मोक्षार्थिनः, अतस्तान्प्रति कैवल्यं-प्रदास्यतीत्यनेन मोक्षरूपं फलमुपसंहरति।

एवमग्रेऽपि रावणवधार्थं रामाय अगस्त्येनोपदिष्टं व्रतमिदमिति ध्येयम्। वक्तृश्रोतृगौरवेण प्रामाण्यं द्योतयन्नाह—

रामाय दण्डकारण्ये यत्प्रादात्कुम्भसंभवः।
तत्सर्वं वः प्रवक्ष्यामि शृणुध्वं भक्तियोगिनः॥ ४०॥

कुम्भवसंभवोऽगस्त्यः यद्व्रतं प्रादात् उपदिष्टवान्। तत्सर्वं साङ्गोपाङ्गं वः युष्मभ्यं प्रवक्ष्यामि भक्तियोगिनः भक्तिरूपोपायवन्तः। भक्तियोगत इति पाठे भक्ति रूपोपायतः। तथा चाऽमरः—"योगः सन्नहनोपाय ध्यानसङ्गतियुक्तिष्विति"।

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु प्रथमोध्यायः॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाणपारा-
वारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरन्धर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमण्डन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ शिवगीताभाष्ये
प्रथमोऽध्यायः

श्रीरस्तु

## द्वितीयोऽध्यायः

श्री गणाधिपतये नमः। निर्विघ्नमस्तु। अत्र 'रामाय दण्डकारण्ये यत्प्रादात् कुम्भसम्भवः'—इत्युक्त्वा रामोद्देश्यकः अगस्त्योपदेशः श्रूयते, स चोभयोः सान्निध्यमन्तरेणानुपपन्नः। अतस्तत्रागस्त्यागमनमेवेति निश्चित्य ऋषय स्तदागमनस्य प्रयोजनमुपदेशस्य प्रकारं तस्य फलञ्च पृच्छन्ति।

ऋषय ऊचुः—

किमर्थमागतोऽगस्त्यो रामचन्द्रस्य सन्निधिम्।
कथं वा विरजां दीक्षां कारयामास राघवम्॥ १॥

अगस्त्यः—अगं विंध्यगिरिं स्त्यायति स्तभ्नातीत्यगस्त्यः इति क्षीरस्वामिप्रभृतयः। रामचन्द्रस्य सन्निधिं समीपं किमर्थमागतः, किं प्रयोजनकागमनवानित्येकः प्रश्नः। विरजां दीक्षां कथं वा कारयामासेति द्वितीयः। ततो दीक्षातो रामः किं फलमवाप्तवानिति तृतीयः। एतत्प्रश्न-त्रयस्योत्तरं वक्तुमर्हसीत्यर्थः॥ १॥

सूतः क्रमेण प्रश्नत्रयस्योत्तरं वक्तुं भूमिकामारचयति—

रावणेन यदा सीता प्रहृता जनकात्मजा।
तदा वियोगदुःखेन विलपन्नास राघवः॥ २॥

रावणेन जनकात्मजा सीता यदा प्रहृता तदा राघवः वियोगदुःखेन तद्वियोगजनित दुःखेन विलपन्नास। यद्यप्यार्धधातुके अस्तेर्बभूवेत्येव रूपं, न त्वासेति, तथापि असगतिदीप्त्यादानेष्विति धातोः लिटि आसेतिरूपं, तथा च विलपन् सन् न आस = न शोभत इत्यर्थः। अथवा विलपन्नासे-त्यत्र विलपन् नासेति छेदः। नेति निषेधार्थे। तथामरः—'अभावे नह्यनो नापि' इति नेत्यस्य ऐच्छदित्यनेनान्वयः। तथा च सः प्रसिद्धो रामः विलपन् प्राणान् मोक्तुं नैच्छत्-अपित्वैच्छदेवेत्यर्थः काक्वा व्यज्यते। 'यथा—मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबा-

म्युरस्तः' संचूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेने-ति काक्वर्थे काव्यप्रकाशकेन लिखितमिति॥ अथवा आसेति तिङन्त प्रतिरूपकोऽयं निपातः। 'चक्रे सुबन्धुः सुजनैक बन्धु'रित्यादि-वत्। यदा यस्मिन् काले तदा तस्मिन् काले। यद्यप्यत्र सीतापहरण-काले रामस्यासन्निधानात् दुःखस्य तत्कालीनत्वासंभवः। तथापि यदा तदेत्यनेन स्थूलकालमादाय समानकालीनत्वं द्रष्टव्यम्।

निर्निद्रो निरहंकारो निराहारो दिवानिशम्।
मोक्तुमैच्छत्ततः प्राणान् सानुजो रघुनन्दनः॥ ३॥

निर्निद्रः = निद्रारहितः, निरहङ्कारः = कार्यान्तरव्यापाररहितः, निराहारः = आहाररहितः श्वसन् दिवानिशं विलपन्नासेति संबंधः। अथवा दिवानिशमित्येतद्बोधयामासेत्यग्रेतनेन संबध्यते। ततस्तादृश-दुःखतोऽनुजेन लक्ष्मणेन सहवर्तमानो रघुनन्दनः प्राणान्मोक्तुमैच्छत्। अत्र यद्यपि रघुनाथस्यैव तादृशदुःखवत्वात् प्राणान् मोक्तुमैच्छदिति वक्तुमुचितं, न तु सानुज इति। तथापि भ्रातृदुःख-निबन्धनं तस्यापि तादृशं दुःखमिति विशिष्टोपादानमिति ध्येयम्॥ २॥

किमर्थमागतोऽगस्त्य इति प्रश्नस्योत्तरमाह—

लोपामुद्रापतिर्ज्ञात्वा तस्य सन्निधिमागमत्।
अथ तं बोधयामास संसारासारतां मुनिः॥ ४॥

लोपामुद्रपतिरगस्त्यः, मुनिः सर्वविषयकज्ञानफलोपधायकमनन-शीलः। अतो रामस्य दुःखं ज्ञात्वा तस्य संनिधिमागमत्। अथागमना-नन्तरं तं रामं संसारासारतां संसारस्य हेयतां बोधयामास। सीता-वियोगदुःखावृतज्ञानं राममुद्बोधयामास बोधनानुकूलव्यापारवांश्च बभूवेत्यर्थः॥ ४॥

उद्बोधनानुकूलव्यापारमेवाह—अगस्त्य उवाच—

किं विषीदसि राजेन्द्र कान्ता कस्य विचार्यताम्।
जडः किन्नु विजानाति देहोऽयं पाञ्चभौतिकः॥ ५॥

हे राजेन्द्र, किं विषीदसि ? दुःखे किं कारणमित्यर्थः। अत्र स्वकीय-कान्ताविरह एव दुःखे कारण मित्याशङ्कयाऽऽह कान्तेत्यादिना—कान्ता कमनीया, तथा च रूपलावण्यादि रूपकमनीयत्वादि ज्ञानजन्यदुःखविशेष-जनकविरहप्रयुक्तं दुःखं कस्य ? देहस्य वाऽऽत्मनो वेति विचार्यताम्। विचारिते सति दुःखं न भविष्यतीति भावः। न तावद् दुःखं देहस्येत्याह—'जड' इत्यादिना—जडः चैतन्यभिन्नो देहः किन्नु विजानाति ? अपि तु किमपि न जानातीत्यर्थः। तथा च देहस्य चैतन्यभिन्नत्वेन तादृशदुःख-जनकविरहप्रयुक्तदुःखमपि नास्तीति भावः। चैतन्यभित्वे हेतुगर्भं विशेषणमाह—पाञ्चभौतिक इति। पाञ्चभौतिक इत्यनेन नश्वरत्व-मुपलक्षितं, 'जडः किं न विजानातीति, पाठे जडः किमपि न विजानातीत्यर्थः। अन्यत् सर्वं पूर्वोक्तमेव ध्येयम् ॥ ५ ॥

इदानीं तादृशं दुःखमात्मनो भवत्वित्याशङ्कयोत्तरमाह—

निर्लेपः परिपूर्णश्च सच्चिदानन्दविग्रहः।
आत्मा न जायते नैव म्रियते न च दुःखभाक् ॥ ६ ॥

निर्लेपः असङ्गः, "असङ्गोह्ययं पुरुषः" "असङ्गो न हि सज्जत" इति श्रुतेः। सङ्गो धर्माधर्मादिसङ्गरूपः, तद्रहित इत्यर्थः। परिपूर्ण-श्चेत्यत्र चकारो हेत्वर्थकः। तदुक्तं गणव्याख्याने—"चेत्यन्वाचय समा-हारेतरेतरयोगतुल्ययोगितावधारणहेतुष्विति"। स च निर्लेप इत्यनेन संबध्यते। तथा च यतो निर्लेपः अतो न दुःखभागित्यर्थः। परिपूर्णो व्यापकः। एतेन आत्मनः आनन्दस्वरूपस्य स्वल्पत्वशङ्कानिबन्धनहेयता निरस्ता। सच्चिदानन्दविग्रहः, सत् अबाधितं, चित् ज्ञानस्वरूपं, आनन्दः सुखस्वरूपं, अत्र अज्ञातसुखमप्रयोजकमिति चिदित्युक्तम्। ज्ञातमपि सुखं बाधितं यदि स्यात् तर्हि अप्रयोजकमित्यत उक्तं सदिति विग्रहः। न चेत्यत्रचकारोऽपि हेत्वर्थः, सोऽपि सच्चिदानविग्रह इत्यनेनं संबध्यते। तथा च यतः सच्चिदानन्दविग्रहः, अतो न जायते न म्रियत इति॥ ननु —जायत इत्यत्र जनेरुत्पत्तिरर्थः, उत्पत्तिश्च नैय्यायिकानां मते आद्यक्षण-संबंधः, वेदान्तिनान्तु कारणात्मनावस्थितस्य अवस्थान्तरप्राप्तिः, उभयथापि तदभाव आत्मनि वक्तुं न शक्यः। तथाहि नैय्यायिकानां मते स्वकीयो य आद्यक्षणः, तत्संबंधविरहो वा, अथवा परिकीयो य

आद्यक्षण: तत्संबंधविरह:, नाद्य:, स्वकीयाद्यक्षणस्य अप्रसिद्धे:, नापि द्वितीय:, परकीयाद्यक्षणसंबंधस्य आत्मनि विद्यमानत्वात्, वेदान्तिनां मतेऽपि स्वकीय-कारणात्मनावस्थितस्य अवस्थांतरविरहो वा, परकीयकारणात्मनाव-स्थितस्य अवस्थान्तरविरहो वा? नाद्य:, अप्रसिद्धत्वात्, नापि द्वितीय:, प्रतियोग्यप्रसिद्धे:, घटादौ परकीय कारणात्मनावस्थितस्य अवस्थान्तरप्राप्ते-रसंभवात् इति चेत्—मैवम्—नैय्यायिकानां मते स्वाधिकरणसमयध्वंसान-धिकरणक्षणसंबंधरूपाणां घटपटाद्युत्पत्तिव्यक्तीनामभावकूटवत्वस्यात्मनि-विद्यमानत्वान्नदोष:। वेदान्तिनामपि स्वकीयकारणात्मनावस्थितस्यावस्था-न्तरवत्वं यद्यद्घटादौ प्रसिद्धं, तत्तदभावकूटवत्वस्याऽऽत्मनि विद्यमानत्वान्न-दोष:। न म्रियते न नश्यतीत्यर्थ:, तथा च घटादौ यद्यन्नाशप्रतियोगित्वं प्रसिद्धं, तदभावस्यात्मनि प्रसिद्धत्वादित्यर्थ:। एवं सति आत्मन्युत्पत्त्यभाव-वत्वं विनाशाभाववत्वञ्चात्मनित्यत्ववादिनां सर्वेषां मते सिद्धमिति ॥ ६ ॥

पूर्वोक्तनिर्लेपतां दृष्टान्तविधया द्रढयति—

सूर्योऽसौ सर्वलोकस्य चक्षुष्ट्वेन व्यवस्थित:।
तथापि चाक्षुषैर्दोषै: न कदाचिद्विलिप्यते ॥ ७ ॥
सर्वभूतान्तरात्मापि तद्वद्दु:खैर्नलिप्यते ॥ ८ ॥

सर्वलोकस्य सर्वस्य चक्षुष्मत: चक्षुष्ट्वेन व्यवस्थित: "आदित्य-श्चक्षुर्भूत्वाक्षिणी प्राविशत्" इति श्रुत्या चक्षूरूपत्वेन व्यवस्थितो निश्चित इत्यर्थ:, तथापि चक्षुष्ट्वेन व्यवस्थितोऽपीत्यर्थ:। चाक्षुषै:—चक्षुर्निष्ठै: दोषै: पित्तपीतिमादिदोषै: न लिप्यत इति पीतिमादिदोषभाङ् न भवतीत्यर्थ:। सर्वभूतान्तरात्मेति भूतानि प्राणिन:, तेषामन्तरात्मान्तर्याम्यपि तद्वत् सूर्यवत् दु:खैर्नलिप्यत इत्यर्थ: ॥ ८ ॥

पूर्वं कान्ता कस्य विचार्यतामित्यत्र कस्येत्यस्य शङ्काद्वयं परिहृत्य इदानीं पाञ्चभौतिकत्वप्रयुक्तमशाश्वतत्वं स्पष्टीकुर्वन् वैराग्यप्रदर्शन-मुखेन कान्तेत्यत्र कमनीयत्वं दूषयति—

देहोऽपि मलपिण्डोऽयं मुक्तजीवो जडात्मक:।
दह्यते वह्निना काष्ठै: शिवाद्यैर्भक्ष्यतेऽपि वा।
तथापि नैव जानाति विरहे तस्य का व्यथा ॥ ९ ॥

मलपिण्डोऽयमिति अयं प्रत्यक्षसिद्धः "वसाशुक्लमसृङ्मूत्रं विट्केशाः कर्णविण्नखाः। श्लेष्माश्रुदूषिका स्वेदा द्वादशैते नृणां मलाः।" इति मलानां पिण्डः सङ्घातो यत्र समलपिण्डः, तादृशोऽयं देह इत्यर्थः। मुक्तजीवः। जीवेन प्राणेन मुक्तो (जीवः) मुक्तजीवः राजदन्तादेराकृतिगणत्वात्, जीवपदस्यपरनिपातः जडो मूर्खः, इदञ्च न जानातीति अग्रेतनेन संबध्यते। काष्ठैरिति विशेषणे तृतीया, वह्निनेति करणे तृतीया। तथा च काष्ठविशिष्टवह्निकरणकदाहाश्रयो देह इत्यर्थः। अपि शब्दोऽनुक्तसमुच्चयार्थकः। तथा च शिवादिभक्षणाभावे दाहाभावेकृमिर्वाभवतीत्यर्थः। तथापि तादृग्गुणविशिष्टं देहमपि मूर्खो न जानतीत्यर्थः। तस्येत्युपसंहरति, तस्मात्तादृशदेहस्य शरीरस्य विरहे का व्यथा मे? व्यथा न कार्येत्यर्थः॥ ९॥

पूर्वोक्तं तादृशं देहं रूपादिविशिष्टमनुरज्यतीति रागिणं प्रत्युपहसन्नाह—

सुवर्णगौरी दूर्वाया दलवच्छ्यामलापि वा।
पीनोत्तुङ्गस्तानाभोगभुग्नसूक्ष्मावलग्नका॥ १०॥

बृहन्नितम्बजघना रक्तपादसरोरुहा॥ ११॥

राकाचन्द्रमुखी बिम्बप्रतिबिम्बरदच्छदा।
नीलेन्दीवरनीकाशनयनद्वयशोभिता॥ १२॥

मत्त कोकिलसँलापा मत्तद्विरदगामिनी।
कटाक्षैरनुगृह्णाति मां पञ्चेषुशरोत्तमैः॥ १३॥

इति यो मन्यते मूर्खः स च पञ्चेषुशासितः।
तस्याविवेकं वक्ष्यामि शृणुष्वावहितो (भव) नृप!॥ १४॥

अत एव एतदग्रे उपसंहरन्नाह—'इति यो मन्यत इति—सुवर्णगौरी दूर्वायादलवत् श्यामला श्यामा, तथाचोक्तम्—शीतकाले भवेदुष्णा ग्रीष्मकालेतु शीतला। पद्मगन्धिमुखं यस्याः सा श्यामा परिकीर्तितेति। अथवा सुवर्णगौरी दूर्वायादलवत् श्यामलावेति। अनेन रूपविशेषादिना पद्मिनीजातिरूपं लक्ष्यत इति। तथा च सुवर्णगौरीत्यादिना रूपं, पाद-

सरोरुहेत्यादिना गन्धः, बिंबप्रतिबिंबरदच्छदेत्यनेन रसः, पीनोत्तुङ्गे-त्यादिना स्पर्शः, मत्तकोकिलेत्यनेन शब्दः—एते विषया स्तत्तच्छब्दै र्व्यञ्जिताः। पञ्चेषुणा—मन्मथेन शासितः शिक्षितः, तथा च पञ्चेषु शासितः सन् तादृशैः पञ्चभिः विषयैः विशिष्टा यां मन्यते यः पुरुषः स मूढः मूर्खः। स तादृशैः पञ्चभिः विषयैः हन्यतइत्यर्थः। तथाचोक्तं वासिष्ठरामायणे उपशमप्रकरणे उद्दालकोपाख्याने—"शब्दादिगाभि-रेताभिः किं मूर्ख हतवृत्तिभिः। यस्मात् किञ्चिदिवाप्नोषि यस्मिन् महसि निर्वृतिम्। तस्मिंश्चित्तशमे मूर्ख नानुबध्नासि किं पदम्। आगत्य श्रोत्रतां मूर्ख व्यर्थोद्गानोपबृंहितां। धिया शब्दानुसारिण्या मृगवन् मा क्षयं व्रज। त्वक्तामागत्यदुःखायस्पर्शोन्मुखतया तया। मूर्ख मा बध्यता मेहि गजीलुब्धगजेन्द्रवत्। रसनाभावमागत्य गन्धेनान्ध धुरन्धराम्। मा नाशमेहि बडिशपिण्डीलम्पटमत्स्यवत्। चाक्षुषीं-वृत्तिमाश्रित्य प्रभारूपचयोन्मुखीम्। मा गच्छ दग्धतां मुग्ध कान्ति लुब्धपतङ्गवत्। घ्राणमार्गमुपाश्रित्य शरीराम्भोजकोटरे। गन्धोन्मुख-तया बन्धं मा समाश्रय भृङ्गवत्। कुरङ्गालिपतङ्गेभमीनास्त्वेकैकशो हताः। सर्वैरेतैरनर्थैस्तु व्याप्तस्याह कुतः सुखमिति॥" पूर्वोक्तस्य मौढ्यमेव प्रकारान्तरेणदर्शयन्नाह 'तस्येत्यादिना। तस्य अविवेकं विवेकराहित्यं विशेषज्ञानाभाववत्व'मिति यावत्॥ १४॥

न च स्त्री न पुमानेष न चैवायं नपुंसकः।
अमूर्तः पुरुषः पूर्णो द्रष्टादेही स जीविनः॥ १५॥

एषः श्रुतिप्रसिद्धः स्वप्रकाशः पुरुषः आत्मा, तथा च श्रुतिः "पूर्वमेवाह-मिहासमिति? तत्पुरुषस्य पुरुषत्व"मिति, तथाचात्मा नस्त्री न स्त्रीत्वाश्रय-व्यक्तिस्वरूपः। न पुमान्—न पुरुषत्वाश्रयव्यक्तिरूपः न, नपुंसकः नपुंसक-त्वाश्रयव्यक्तिस्वरूपः। चकारोऽनुक्तसमुच्चयार्थः। तथा सति मनुष्य-त्वाश्रयसकलस्वरूपाद् भिन्न इत्यर्थः। निर्धर्मकत्वे हेतुमाह—अमूर्त इति अमूर्तः मूर्तः परिच्छिन्नपरिमाणं—तद्रहित इत्यर्थः। पूर्णोव्यापकः, जीविनः=प्राणिनः, द्रष्टा तद्विषयकज्ञानवान्। तन्नियामकः अन्तर्यामीति-यावत्। स-अदेही देहरहितोऽपि तत्र तद्धृदयदेशे स्थित्वा सर्वं नियम-

यतीत्यर्थः। तथा चात्मस्वरूपदर्शनरूपविशेषदर्शनविरहात् पूर्वोक्तरूपादि-मत्यनुरज्यतीति॥ १५॥

ननु स्त्रीत्वादिकमात्मनो मास्तु, पूर्वोक्तरूपादि गुणविशेषत्वेन मोक्षजनकत्वेन शरीरस्य स्यादित्याशङ्क्य निराकरोति—

या तन्वङ्गी मृदुर्बाला मलपिण्डात्मिका जडा।
सा न पश्यति यत्किंचित् न शृगोति न जिघ्रति॥ १६॥

तथा च तन्वङ्गी मृदुर्बाला इत्यादिना ये पञ्च विषया उक्ताः ते सर्वेऽनुपादेयाः। तत्र हेतुः मलपिण्डात्मिकेति। कटाक्षैरनुगृह्णातीत्यादि यदुक्तं तद्दूषयति सा न पश्यतीत्यादिना। तत्र हेतुमाह जडेति तथा च यतः सा जडात्मिका अतः सा न पश्यति न चाक्षुषज्ञानवती। न शृणोति न श्रोत्रज्ञानवती। न जिघ्रति न घ्राणजज्ञानवती। यत्किञ्चिदिति त्रिषु स्थलेषु संबध्यते॥ १६॥

ननु शरीरे रूपविशेषनिबन्धनमोहो भविष्यत्येवेत्याशङ्क्य निरा-करोति—

चर्ममात्रं तनु स्तस्या बुद्ध्वा त्यक्षस्व राघव।
या प्राणादधिका सैव हन्त ते स्याद् घृणास्पदम्॥ १७॥

तथा च रूपविशेषत्वेन या प्राणादधिका सा तनुः ते तव घृणास्पदं जुगुप्साविषय इत्यर्थः। यतः सा चर्ममात्रं चर्ममात्रेणाऽऽपाततो रमणीया। 'हे राघव' इति बुद्ध्वा त्यक्षस्व विषादं त्यजेत्यर्थः॥ १७॥

ननु पूर्वं देहस्यैवोत्पत्तिविनाशौ नत्वात्मन इति तदनुपपन्नं, 'प्राणी जायते, गच्छति, नश्यती'त्यादिप्रत्ययादुत्पत्तिविनाशादिकमात्मनोऽपि स्यादित्याशङ्क्य, निराकुर्वन्नाह—

जायन्ते यदि भूतेभ्यो देहिनः पाञ्चभौतिकाः।
आत्मा यदेकलस्तेषु परिपूर्णः सनातनः॥ १८॥

यद्यस्मादात्मा तेषु देहेषु एकलः एकः, अत एव परिपूर्णो व्यापक इत्यर्थः। सनातनः अनादिनिधनः, अतो भूतेभ्यः पाञ्चभौतिकदेहिनः

जायन्ते, न त्वात्मा जायते। तथा च देहिनो जायन्ते विनश्यन्तीत्यादि-प्रत्ययाः आत्मरूपे विशेष्ये बाधात् देहादिरूपविशेषणविषयका बोध्याः, 'सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रमतः सति विशेष्यबाधे'—इति न्यायात् 'अहं स्वर्गी स्यां कुण्डली जात' इत्यादिवत्। यदीति निश्चये, तथाचात्मनो नित्यत्वादेर्निश्चितत्वादित्यर्थः ॥ १८ ॥

पूर्वं कमनीयत्वादिज्ञानजन्यसुखविशेषसाधनविरहप्रयुक्तं दुःखं निराकृतम् इदानीं पतिपत्नीभावरूपसंबन्धविरहनिबन्धनं दुःखं निराकुर्वन्नाह—

**का कान्ता तस्य कः कान्तः सर्वं एव सहोदराः ॥ १९ ॥**

यतः सर्वे सहोदराः एकाविद्योपादानकाः, अतो लोके एकमातृ-प्रसूतानां यथा पतिपत्नीभावो नास्ति। एवमेकाविद्याप्रसूतानामपि पति-पत्नीभावसंबंधो नोपादेयः। ननु एकाविद्योपादानकत्वं चेत् सहोदरत्वं, तर्हि लोकव्यवहारोच्छेदापत्तिरिति चेन्न—अध्यात्मशास्त्र—पर्यालोचनया बन्धहेतुत्वात् पतिपत्नीभावरूपसंबंधो नादरणीयः। तथा च लोक-व्यवहारोऽप्युपपद्यत इति भावः ॥ १९ ॥

ननु देहेषु यद्यात्मा एक, स्तर्हि देहाद्यवच्छिन्नत्वे परिच्छिन्नत्वाद् आत्मनोप्युत्पत्तिविनाशौ स्यातामित्याशङ्क्याऽऽकाशदृष्टान्तेन परिहरति—

**निर्मितायां गृहावल्यां तदवच्छिन्नतां गतम्।**
**नभस्तस्यां तु दग्धायां न काञ्चित् क्षति मृच्छति ॥ २० ॥**

**तद्वदात्मापि देहेषु परिपूर्णः सनातनः।**
**हन्यमानेषु तेष्वेव स्वयं नैव विहन्यते ॥ २१ ॥**

निर्मितायां गृहावल्यां सत्यां तदवच्छिन्नतां गृहावच्छिन्नत्वं गतं प्राप्तं नभः, तस्यां गृहावल्यां दग्धायां सत्यां काञ्चित् क्षतिं यथोत्पत्ति-विनाशरूपां नर्च्छति न प्राप्नोति। तद्वदात्मापि देहेषु उत्पद्यमानेष्वपि परिपूर्णो नोत्पद्यत इत्यर्थः। हन्यमानेष्वपि देहेषु स्वयमात्मा न हन्यत एव, प्रतियोगितासंबंधेन नाशाश्रयो न भवत्येवेत्यर्थः, हि हेतौ यतः सनातनः अत उत्पत्ति विनाशरहित इत्यर्थः ॥ २१ ॥

ननु देहस्य हन्यमानात्ववत् 'देही हन्ता देही हन्यत' इत्यादि प्रत्ययाद्देहाद्युपहितात्मनोऽपि हननकर्तृत्वं हननकर्मत्वञ्च स्यादित्याशङ्क्य निराकरोति—

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
तावुभौ न विजानीतो नायं हन्ति न हन्यते॥ २२॥

चेदिति, यद्यर्थे यो हन्ता हननकर्तेति यदि मन्यते यो हन्तुं मन्यते हननेच्छावत्वप्रकारकज्ञानवान् यदि, एवं मयायं हत इति यदि मन्यते, यः आत्मानं हतं यदि मन्यते, अत्र हन्ता हन्तुमित्यनेन कर्तृत्वं हतो हतमित्यनेन कर्मत्वं प्राप्तं, तथा च तावुभावात्मनि कर्तृत्वकर्मत्वप्रकारकज्ञानवन्तौ न विजानीतः अविवेकिनावात्मस्वरूपानभिज्ञावित्यर्थः। तत्र हेतुमाह 'नायमि'त्यादिना। यस्मादयमात्मा न हन्ति न हननक्रियायाः कर्ता, न हन्यते न हननक्रियायाः कर्म, अविक्रियत्वात्॥ २२॥

उपसंहरन्नाह—

अस्मान्नृपातिदुःखेन किं खेदस्यास्ति कारणम्।
स्वस्वरूपं विदित्वैव दुःखं त्यक्त्वा सुखी भव॥ २३॥

तस्मादित्यपि क्वाचित्कः पाठः। हे नृप, अतिदुःखेन किं किं प्रयोजनं, खेदस्य किं कारणं न किमपीत्यर्थः। अस्मात् पूर्वोक्ताद्धेतोः स्वस्वरूपमात्मस्वरूपं विदित्वा दुःखं त्यक्त्वा सुखी भव। नन्वेतदसङ्गतं सच्चिदानन्दरूपस्य सुखदुःखयोरभावात् इति चेन्न—अयं सुखी अयं दुःखीति लौकिकव्यवहारमाश्रित्य तथोक्तमिति ध्येयम्॥ २३॥

अत्र देहस्य नो दुःखं परमात्मनोऽपि न दुःखमित्युक्तमर्थमाक्षिपति—

श्रीराम उवाच—

मुने! देहस्य नो दुःखं नैव चेत् परमात्मनः।
सीतावियोगदुःखाग्निर्मां भस्मीकुरुते कथम्॥ २४॥

मामात्मानं सीतावियोगदुःखाग्निः सीतावियोगरूपो दुःखाग्निः दुःखजनकोऽग्निः भस्मीकुरुते पुनः पुनः दुःखं जनयतीत्यर्थः॥ २४॥

आक्षेपे हेतुमाह—

सदानुभूयते योऽर्थः स नास्तीति त्वयेरितः।
जायतां तत्र विश्वासः कथं वा मुनिपुङ्गव!॥ २५॥

दुःखस्य पौनःपुन्यमेव सदेत्याह। तथाचानुभवविरोध इति भावः॥ २५॥

अनुभवविषयसिद्ध्यर्थं पृच्छति—

अन्योस्ति नास्ति को भोक्ता येन जन्तुः प्रतप्यते।
सुखस्य वाऽपि दुःखस्य तद् ब्रूहि मुनिसत्तम॥ २६॥

सुखस्यवेत्यत्र वा शब्दो भिन्नक्रमे। तथा च सुखस्यदुःखस्य भोक्ता शरीरपरमात्मभ्यामतिरिक्तः अन्योऽस्तिवेति प्रश्नार्थः। नास्ति चेर्त्तहि को भोक्तेति ब्रूहि, येन कारणेन जन्तुः शरीरी प्रतप्यते तत्कारणञ्च ब्रूहीति संबन्धः। हे मुनिसत्तम, यतस्त्वं मुनिश्रेष्ठः अतस्त्वमुत्तरं वक्तुमर्हसीति भावः॥ २६॥

अत्र येन कारणेन कस्य दुःखानुभव इति प्रश्नस्य सयुक्तिकमुत्तरमाहाऽगस्त्यः। अगस्त्य उवाच—

दुर्ज्ञेया शांभवी माया यया संमोह्यते जगत्।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्॥ २७॥

अयं भावः। शुद्धे आत्मनि अविद्योपाधिवशाद् दुःखादेरनुभवः। ननु असङ्गोदासीनस्य सुशुद्धस्यात्मनः कथं दुःखादेरनुभव इति चेन्मैवम्। यथा शुद्धे स्फटिके जपाकुसुमरूपोपाधिवशाल्लौहित्याध्यासः तथाऽविद्यापरिणामरूपान्तःकरणावच्छिन्ने अविद्याप्रतिबिम्बे वा शुद्धे आत्मनि दुःखाद्यध्यासः। ननु असङ्गे आत्मनि कथमुपाधिसंबंधाद् दुःखादेरनुभव इत्याशङ्कापरिहारार्थं हेतुगर्भं विशेषणं मायायाः दुर्ज्ञेयत्वम्। शांभवी माया शंभोरियं शांभवी, तस्येदमित्यण्। शं सुखं अस्माद्भवतीति शंभुः "एषोऽस्य परम आनन्दः", "एषह्येवाऽऽनन्दयाति" इति श्रुतेः।

संबंधश्च आश्रयाश्रयिभावो विषयविषयिभावश्च तस्याश्च अनन्तशक्ति-मत्वात् अनिर्वचनीयत्वाच्च दुर्ज्ञेयत्वम्। अतोऽसङ्गस्यात्मनः दुःखाद्य-ध्यासजनकत्वादघटनघटनापटीयस्त्वम्। ननु 'विष्णोर्माया भगवती यया संमोह्यते जगदि'त्यादिना वैष्णवमायाया अपि जगन्मोहकत्वं स्मर्यते। तथा च जगदुपादानत्वेन मायाया द्वैविध्यापत्तिरिति चेन्मैवम्। लाघवादेकस्या एव मायया: जगदुपादानत्वकल्पनाया एवोचितत्वात्। किञ्च 'अजा-मेकामि'त्यादिना मायाया एकत्वप्रतिपादनाच्च। नन्वाश्रययोः शंभु-विष्ण्वोर्भेदात्तदीययोर्माययोरेकत्वं न संभवतीति चेत्। न। शंभु-विष्णुपदयोः चित्स्वरूपमात्रपरतया आश्रयैक्यान्मायाया ऐक्यमिति न द्वैविध्यम्। विष्णोः सहस्रनाम्नि 'विश्वं विष्णुरि'ति 'स्वयंभूः शंभुरादित्य' इत्यादिस्मरणाच्छंभुविष्णुपदयोश्चिन्मात्रपरत्वेन पर्यायत्वात्॥

जगत्कर्तृत्वादिना सिद्धस्य परमात्मनो लाघवादेकत्वे सिद्धे तस्यैव शंभुविष्ण्वादिपदवाच्यत्वमिति। तथा च स्मर्यते शिवमाहात्म्यखण्डे— "ब्रह्मणो मूर्तयोऽनन्ता जायन्ते गुणभेदतः। तथा विष्णोस्तथेशस्य गुणभेदेन सुव्रत"—इति। वायुसंहितायां—"शिवतत्वादि भूम्यन्तं शरीरादिघटादि चा व्याप्याधितिष्ठति शिवः, ततो विष्णुरुदाहृत" इति। तथा बृहन्नारदीये—"यो देवो जगतामीशः कारणानाञ्च करणम्। युगान्ते जगदत्त्येतद्रुद्ररूपधरो हरिः। रुद्रो वै विष्णुरूपेण पालयत्यखिलं-जगत्। ब्रह्मरूपेण सृजति तदत्त्यन्ते स्वयं हरिः॥ शिव एव हरिः साक्षाद्धरिरेव शिवः स्वयम्। तयोरन्तरकृद्याति नरकान्कोटिकोटिशः" इति। तथा भागवतेऽपि—सत्वं रजस्तम इति प्रकृतेर्गुणास्तैः युक्तः परः पुरुष एक इह... ...स्थित्यादयो हरिविरिञ्चिहरेतिसंज्ञाः—इति॥ एवञ्च शिव-विष्ण्वोः भेदभ्रमो न कर्तव्यः। ननु श्रुतिरेवोत्कर्षापकर्षौ ब्रवीतीति— ते देवा रुद्रमपृच्छन् को भवानिति। सोऽब्रवीत् "अहमेकः प्रथममासं वर्तामि च भविष्यामि च।" "जनितेन्द्रस्य जनितोत विष्णोः" इत्यादौ रुद्रो-त्कर्षस्य विष्णोरपकर्षस्य च प्रतीतेः। तथा—"नारायण एक एवाग्र आसीत् न ब्रह्मा न शंकरः"—इत्यादौ प्रागुक्तविपरीतप्रतीतेरिति चेत्। न। नहिनिन्दान्यायेन श्रुतिद्वयस्यापि लीलाविग्रहविशेष-प्रशंसापरत्वात्। अन्यथा परस्परविरोधेन उभयोरप्रामाण्यापत्तेः। एतेन शैववैष्णवश्रुतिस्मृतिपुराणवचनान्यपि अद्वैतपरतया व्याख्याता-

नीति तु वेदान्तरहस्यम्। अनिर्वचनीयत्वादौ हेतुमाह—ययेति। यया मायया जगत् प्रपञ्चावच्छिन्नं चैतन्यं तत्तादात्म्यापन्नमिति यावत्। संमोह्यते कर्तृत्व-सुखित्वादिविशिष्टव्यवहारविषयीक्रियत इति। तादृश-मायासद्भावे प्रमाणोपन्यासपूर्वकं सांख्यमतं निराकरोति—मायामिति। मायांत्वित्यत्र तुरवधारणे। तथा च मायामेव प्रकृतिमुपादानं विद्धि, न तु मायातिरिक्ता स्वतन्त्रा काचन प्रकृतिरित्यर्थः। स्वयं विक्षेपशक्ति-प्रधानत्वेन मायेति, आवरणशक्तिप्रधानत्वेन अविद्येति, जगदुपादनत्वेन प्रकृतिरितिचोच्यते। ननु अविद्यासंबंधस्य मोहकत्वे ब्रह्मणोप्यविद्या-संबंधस्य विद्यमानत्वान्मोहापत्तिरित्याशङ्कां परिहरन्नाह—मायिनं तु महेश्वरमिति। मायिनं मायाप्रयोक्तारं महेश्वरं ब्रह्मस्वरूपं मोहरहितं विद्धि-माया स्वप्रयोक्तारं न व्यामोहयति, तथा दर्शनात्। तथाचोपाधि-संभिन्नस्यैव मोहः न तु ब्रह्मणः। उपाधेः प्रतिबिम्बपक्षपातित्वदर्शनात्। तथाचेयमेव श्रुतिः मायासद्भावे प्रमाणमिति ॥ २७ ॥

नन्वत्र लोके मायाविनः गजतुरगादिकार्यप्रदर्शकत्वं दृष्टं, प्रकृते तत्किमित्याशङ्कायां तद्दर्शयति—

तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत्।
सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः ॥ २८ ॥

तस्यैवांशो जीवलोके हृदये प्राणिनां स्थितः ॥

तस्य परमात्मनः अवयवः अंशः उपाधिरिति यावत्। निरवयव-स्यात्मनः उपाधिव्यतिरिक्तांशाभावात्। तेन उपाधिना इदं सर्वं जग-च्चेतनाचेतनात्मकं व्याप्तं तद्विशिष्टव्यवहारविषयीकृतम्। तथा चोपाधिनिबन्धन एव विशिष्टव्यवहार इति। तथा च—"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रतानित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभो-र्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य" इत्यागमादनन्तशक्तिमत्वेन विविध-प्रपञ्चजनकत्वमिति। यद्यपि अनन्तशक्तिमत्वं मायया:, नत्वात्मन इति, तथापि अनन्तशक्तिमन्मायारूपसहकारिवशादात्मनोऽपि अनन्तशक्ति-मत्वम्। तत्सहकारेण विविधप्रपञ्चजनकत्वमिति ध्येयम्। उपाधि-मुक्त्वा धर्मिस्वरूपमाह—सत्येत्यादि सत्यञ्च ज्ञानञ्च सत्यज्ञाने, तदात्मकः

तत्स्वरूप इत्यर्थः। सत्यं पारमार्थिकं अनन्तोऽनादिनिधनः विभुस्सर्वगतः महेश्वरः सर्वनियन्ता सर्वोपादानभूतः। तथा चात्मनः सत्यज्ञानात्मकोनन्त इत्यन्तेन स्वरूपलक्षणमुक्तं, विभुर्महेश्वर इत्यन्तेन तटस्थलक्षणमुक्तमिति ध्येयम्। तथा च श्रुतिः "सत्यं ज्ञानमनन्तं ब्रह्मे"ति। "यतो वा इमानि भूतानि जायन्ते"। "आकाशवत्सर्वगतश्चनित्यः"इति॥ २८॥

ननु सत्यज्ञानानन्दात्मकस्य परमात्मनः कर्तृत्वभोक्तृत्वसंसारित्वजीवत्वव्यवहारः कथं स्यादित्यत आह—

तस्येत्यादि—तस्यैव सत्यज्ञानादिरूपस्य आत्मन एव अंशः भागः जीवलोके संसारे, संसारावस्थायां प्राणिनां हृदये अन्तःकरणे स्थितः स्थितिमान् स एवांशः उपाध्यवच्छिन्नत्वेन कर्तृत्वभोक्तृत्वसंसारित्वजीवत्वादिव्यवहारभाग्भवतीत्यर्थः।

ननु परिपूर्णस्य सच्चिदानन्दरूपस्य कथमंशत्वं, कथं वा उपाध्यवच्छिन्नत्वनिबन्धनभेदवत्वं, तत्प्रयुक्तसंसारित्वादिव्यवहार इत्याशङ्कां दृष्टान्तमुखेन परिहरन्नाह—विस्फुलिङ्गा इत्यादिना।

विस्फुलिङ्गा यथा वह्नेर्जायन्ते काष्ठयोगतः॥ २९॥

अनादिकर्मसंबन्धाः तद्वदंशा महेशितुः।<br>
अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः॥ ३०॥

वह्नेर्विस्फुलिङ्गाः वह्नेरंशभूताः। अत्र षष्ठ्यर्थः संबंधः, तथा च वह्निसंबंधाः ये अंशाः काष्ठयोगतः काष्ठसंबंधात् यथा जायन्ते भेदवत्त्वेन व्यवह्रियन्ते इत्यर्थः। तद्वन्महेशितुः परमात्मनः अंशाः भेदवत्त्वेन प्रतीयमानाः अनादिकर्मसंबंधाः अनादीनि यानि कर्माणि प्राग्भवीयानि तैः संबंधाः तत्संबंधप्रयुक्तभेदादिमत्वव्यवहारविषया भवन्तीति न पूर्वोक्तदोषः। अत्र केचित्-जीवाः परमात्मनः पारमार्थिकांशाः, "ममैवांशो जीवलोके" इति स्मृतेः। न च निरवयवस्यांशत्वं विरुद्धं, औपाधिकस्य तस्याविरोधात्। अत एव—यथाग्नेर्विस्फुलिङ्गाः नानादिशोव्युच्चरन्ति।

"एवमेवैतस्मात्सर्वे आत्मान उत्पद्यन्त" इति श्रुत्या जीवानां परस्मादुत्पत्तिश्रवणमविरुद्धमित्याहुः। तन्न। स्वतो निरंशस्योपाधितोऽपि

वास्तवांशाभावात्। अन्यथा—"निष्कलं निष्क्रियं शान्त" मित्यादि श्रुतिसिद्धनिरंशत्वानुपपत्तेः। "ममैवांशो जीवलोक" इति स्मृतिरपि बिम्ब-प्रतिबिम्बभावमेव अंशांशिभावं कल्पितमाह। अत एवाग्निविस्फुलिङ्गश्रुति-रपि साधु संगच्छते। अग्निस्वरूपापरित्यागेन विस्फुलिङ्गानां पार्थक्येन व्यवहारविषयत्वात्। प्रकृतेऽपि चैतन्यस्वरूपापरित्यागेन उपाधिवशात्पार्थ-क्येन व्यवहारविषयत्वमात्रे उत्पत्तिबोधकश्रुतेस्तात्पर्यम्। अन्यथा आत्मान-मधिकृत्य 'न जायत' इति श्रुतेर्विरोधात्, कृतहान्यकृतागमप्रसङ्गाच्च। एतेन देहाद्यात्मवादोऽपि निरस्तः। ननु अनादिकर्मसंबंधा यथाजीवाः तथा अनादिवासनायुक्ताः क्षेत्रज्ञा इति तेषां भेदः स्यादित्याशङ्क्य परि-हरति—अनादीत्यादिना। तथा च त एवांशाः क्षेत्रज्ञत्वेन स्मर्यन्त इति न तेषां भेदः॥ ३०॥

ननु उपाधिरूपान्तःकरणस्य जडत्वात्तद्विशिष्टचैतन्यस्याप्यतिरिक्तत्वे तथात्वात्। उपाध्युपलक्षितस्य तस्य स्वरूपत्वेन सुखदुःखयोरसंभवात् सुखित्वदुःखित्वादि व्यवहारभाक्त्वं कस्येत्यत आह—

मनो बुद्धिरहङ्कारश्चित्तञ्चेति चतुष्टयम्।
अन्तःकरणमित्याहुः तत्र ते प्रतिबिम्बिताः॥ ३१॥

तथा चान्तःकरणरूपोपाधेः तद्विशिष्टस्यापि जडत्वेपि तत्प्रति-बिम्बितमादाय सुखित्वदुःखित्वादिव्यवहार इति भावः। ननु "कामः संकल्पो विचिकित्से"त्यादिना मनसः, "सधीः स्वप्नो भूत्वे"त्यादिना धीशब्दवाच्याया बुद्धेः शोकहर्षभयक्रोधलोभमोहस्पृहादयः। अहंकारस्य दृश्यन्ते जन्ममृत्युश्च नात्मन—इत्यादिना अहंकारस्य, 'सर्वश्चित्त-विलासोऽयमि'त्यादिना चित्तस्य चोपाधित्वं प्रतीयते। तथाचोपाधि-भेदात्तदुपहितस्य कर्तृत्वभोक्तृत्वव्यपदेशविषयस्यापि प्रतिशरीरं चतुर्धा-भेदापत्तिः। यद्यपि पूर्वोक्तमनआदीनां चतुर्णां संकल्पादिधर्मवत्त्वेन-प्रतीतिः, न तु जीवोपाधितयेति तत्कथं तत्कृतभेद इति। तथापि चैतन्ये मनआदेस्तादात्म्याध्यासात्संकल्पादिमत्वव्यवहार इति। मनआदीना-मुपाधित्वमिति पूर्वोक्तभेदापत्तिरित्यत उक्तम् इतिचतुष्टयमिति। अन्तःकरणमितिचतुष्टयमाहुरिति योजना। तथा च एकस्यैवान्तः-

करणस्य संशयनिश्चयगर्वस्मरणरूप—चतुर्विधवृत्तिभेदात् मनोबुद्धि-रहंकारश्चित्तमिति यथासंख्येन व्यवहारः। तदुक्तं—"मनोबुद्धिरहंकारः चित्तं करणमान्तरम्" संशयो निश्चयो गर्वः स्मरणं विषया इमे। इति। तथा च अन्तःकरणरूपोपाधेरैक्यान्न, तदुपहितभेदापत्तिरिति। तत्रान्तः-करणे प्रतिबिम्बितास्ते पूर्वोक्ताः अंशाः, तथा च प्रतिबिम्बितास्सन्तः अंशा इत्यर्थः। यद्यपि तत्रेत्यनेन उपाध्यवच्छिन्नत्वे लब्धे तेनैवोत्तर-निर्वाहात् प्रतिबिम्बिता इत्यस्य वैय्यार्थ्यापत्तिः। तथापि बिम्बप्रति-बिम्बभावेनैव जीवपरविभागः, न तु अवच्छिन्नानवच्छिन्नत्वेनेति प्रदर्शनार्थं तदुपादानमिति ध्येयम्। ननु अवच्छिन्नानवच्छिन्नत्वकृत एव जीवपरविभागो भवतु को दोष इति चेत्। सर्वज्ञत्वसर्वनियन्तृत्वाद्य-सिद्धचा तस्य दूषितत्वात्। ननु प्रतिबिम्बितास्सन्तो जीवत्वं प्राप्तवन्तो यदि तर्हि त एव फलभोक्तारः। तथा सति बिम्बापेक्षया तेषां धर्मिसमान सत्ताकभेदापत्तिः। लोके बिम्बप्रतिबिम्बयोः तथैव दर्शनात्। तथाहि-इमौ चैत्रतत्प्रतिबिम्बाविति बिम्बप्रतिबिम्बभेदस्य प्रत्यक्षसिद्धत्वात् प्राङ्-मुखत्वप्रत्यङ्मुखत्वादिविरुद्धधर्मं इति भेदानुमानाच्च। ननु ममेदं मुख-मिति ग्रीवास्थमुखाभेदानुभवान्न तयोर्भेद इति चेत्। मैवम्। दर्पणे मुख-च्छायांपश्यामीत्यनुभवेन प्रत्यङ्मुखत्वदर्पणस्थत्वभेदानामनेकेषामनुभवेन च मुखसंसर्गभेदानुभवद्वयस्यैव लाघवादप्रामाण्यकल्पनात्। अस्तु वा मुखान्तरं, न तदेव तदिति। तस्य दर्पणस्थत्वाभावात्। अत्रोच्यते—स्वस्वमुखदर्शनार्थं सर्वेषामादर्शदर्शनादौ प्रवृत्तिदर्शनात् तत्र स्वकीय-मुखसाधारणरेखोपरेखादिधर्मदर्शनाच्च न मुखान्तरं छायावेति धर्मि-कल्पनागौरवात्। लोके छायायां तथाऽदर्शनाच्च। दर्पणे ग्रीवास्थमेव मुखं पश्यामि नात्रमुखमिति मुखसंसर्गनिषेधप्रसिद्धमुखाभेदानुभवाच्च। न च प्रत्यङ्मुखत्वादिविरुद्धधर्माध्यासात्तयोर्भेद इति वाच्यम्। परावृत्त-नयनरश्मिभिरेव प्रत्यङ्मुखत्वादिप्रत्ययोपपत्तेरिति। तस्माद्बिम्बप्रति-बिम्बयोरैक्यमिति। तथा च श्रुतिस्मृती—"यथाह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा"। "एकधा बहुधाचैव दृश्यते जलचन्द्रवत्। रूपं रूपं प्रतिरूपो बभूव। स एष इह प्रविष्ट आनखाग्रेभ्य" इत्यादि ॥ ३१ ॥

पूर्वं "येन जन्तुः प्रतप्यत" इति रामप्रश्नस्य साक्षादुत्तरमाह—

जीवत्वं प्राप्नुयुः कर्मफलभोक्तार एव ते।
ततो वैषयिकं तेषां सुखं वा दुःखमेव वा॥ ३२॥

त एव भुञ्जते भोगायतनेऽस्मिञ्छरीरके॥

जीवत्वमिति। प्रश्ने जन्तुत्वं जीवत्वम्। तप्यते दुःखादिमत्व-व्यवहारविषयः। तथा च प्रतिबिम्बिता इत्यत्र हेतुगर्भविशेषणेन बिम्ब-प्रतिबिम्बभावरूपोपाधिना जीवत्वव्यवहारविषयाः सुखदुःखानुभव-विषया भवन्तीत्युत्तरस्य निष्कृष्टोऽर्थः। भोक्तार एवेत्यत्र एवकारस्य व्यत्ययेनान्वयः। त एव भोक्तारः तेनैव रूपेण भोक्तृत्वमित्यर्थः। अत्र पूर्वोक्तान्तःकरणरूपोपाधिवशात्तेषामन्तःकरणप्रतिबिम्बितानां वैषयिकं सुखं दुःखं वा अन्वयव्यतिरेकाभ्यां भोगायतने शरीर एवान्तःकरण प्रतिबिम्बिताः त एव भुञ्जते नान्यत्रेत्याह—तत इत्यादिना। ततःपूर्वोक्तो-पाधितः वैषयिकं स्रक्चन्दनकण्टकादिविषयादिजन्यं अस्मिन् अनिर्वचनीया-हंकारतादात्म्यरूपाध्यस्तसंबंधके, शरीरक इत्यत्र शीर्यत इति शरीरमिति व्युत्पत्त्या शरीरशब्दादेव कुत्सितत्वस्य लब्धत्वात् स्वार्थे कप्रत्ययः।

ननु भोगायतने शरीर एव भुञ्जते यदि, तर्हि चैत्रीयशरीरावच्छेदेन मैत्रस्य भोगापत्तिरिति चेन्न। अनिर्वचनीयाहंकारतादात्म्यरूपसंबंध-विशेषादेव नातिप्रसङ्गः। अत एव सुहृच्छरीरादौ तादृशाध्यासाभावान्न भोग इति अन्तःकरणस्य प्रतिशरीरं भिन्नत्वाच्च नातिप्रसङ्गः॥ ३२॥

तत्र भोगायतनं शरीरं द्विविधं भवतीत्याह—

स्थावरं जङ्गमच्चेति द्विविधं वपुरुच्यते॥ ३३॥

स्थावरास्तत्र देहाः स्युः सूक्ष्मा गुल्मलतादयः।
अण्डजाः स्वेदजा स्तद्वदुद्भिज्जा इति जङ्गमाः॥ ३४॥

अवान्तरभेदमाह स्थावरा इति जङ्गमा इति च, तत्र स्थावरा देहाः, सूक्ष्मा गुल्मलतादयः, सूक्ष्माः सूक्ष्मपरिमाणाः, आदिपदात् सूक्ष्मोप-सूक्ष्म तृणादयो बोध्याः। स्थावराः सूक्ष्मा इत्युपलक्षणं, स्थूलाः पर्वता-

दयोऽपि बोध्याः। जङ्गमभेदमाह—अण्डजा इत्यादि। अण्डजाः पक्षिसरीसृपादयः, स्वेदजाः क्रिमिदंशाद्याः। एवं जरायुजाः नृगवाद्या अपि द्रष्टव्याः। एवमयोनिजदेवसृष्टिरपि। उद्भिज्जा इति तु स्थावरा इत्यनेन संबध्यते, उद्भेदनमुद्भित् संपदादित्वाद् भावे क्विप्। ततो जाता इत्युद्भिज्जाः। भूमिं भित्वा जाता इति पर्यवसितोऽर्थः। तथाचोद्भिज्जास्तरूगुल्माद्याः। तथा चामरः—'दिव्योपपादुका देवा नृगवाद्या जरायुजाः स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः। उद्भिदस्तरुगुल्माद्या' उद्भिदुद्भिज्जमद्भिदमिति ।। ३४ ।।

पूर्वं भोगायतनं शरीरं नानाविधमुक्तम्, इदानीं तत्तच्छरीरप्राप्तौ नियामकमाह—

योनिमन्ये प्रपद्यन्ते शरीरित्वाय देहिनः।
स्थाणुमन्येऽनुमीयन्ते यथाकर्म यथाश्रुतम् ।। ३५ ।।

यथाकर्म यथाऽदृष्टं, यथाश्रुतं श्रुतमवधृतम् अवधारणजन्यवासना विशेष इति यावत्। तथाच प्राक्कालीनशरीरत्यागसमयवर्तिवासनाजन्य स्मृतिनिबन्धनायोनिविशेषप्राप्तिरिति तु पर्यवसितोऽर्थः। तथा च भगवद्गीतायां "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्। तं तमेवैति कौन्तेय सदा तद्भावभावित" इति। अन्ये स्थावरापेक्षया अन्ये देहिनः जीवाः शरीरित्वाय शरीरमस्यास्तीति शरीरी, तस्य भावः, तद्वृत्यसाधारणो धर्मः—शरीरसंबंधविशेष इति यावत्। शरीरसंबंधार्थं योनिमुत्पत्तिस्थानं प्रपद्यन्ते प्राप्नुवन्ति। अन्ये पूर्वापेक्षया अन्ये स्थाणुत्वं स्थाणुशरीरं अनुमीयन्ते—माङ्मान इति धातोः दिवादावपि पाठात् कर्तरिश्यन्, उपसर्गवशात् प्राप्त्यर्थकः। तथा च स्थाणुशरीरं प्राप्नुवन्तीत्यर्थः। अनुसंयन्तीति पाठे उपसर्गवशात् प्राप्नुवन्तीत्यर्थः। शरीरत्वायेति पाठे शरीरत्वं शरीरवृत्यसाधारणो धर्मः शरीरसंबंधविशेष इति यावत्, तथा च पूर्वोक्त एवार्थः।। ३५।।

सुख्यहं दुःख्यहं चेति जीव एवाभिमन्यते।
निर्लेपोऽपि परंज्योतिर्मोहितः शंभुमायया।। ३६ ।।

तथा च परंज्योतिः स्वप्रकाशः निर्लेपः असङ्गोऽपि शंभुमायया अघटितघटनपटीयस्या मायया मोहितः आवृतस्सन् "अहं सुखी अहं दुःखीत्यभिमन्यते अभिमानविषयो भवतीत्यर्थः। चकारात् तत्कर्तृत्व-मित्यादिपरिग्रहः। अत्र एवकारः अन्ययोगव्यवच्छेदार्थकः। तथा च मायिनो लीलाविग्रहवतो बिम्बभूतस्य मोहाभावात् न सुखित्व दुःखित्वादि व्यवहारविषयत्वमिति ।। ३६ ।।

ननु जीवस्य सुखित्वादिकं स्वाभाविकमेव भवतु, अभिमानविषयत्वं किमर्थमित्यत आह—

**कामः क्रोधस्तथा लोभो मदो मात्सर्यमेव च।**
**मोहश्चेत्यरिषड्वर्गमहंकारगतं विदुः ।। ३७ ।।**

इति।

कामोऽभिलाषः, क्रोधो द्वेषः, लोभोऽभिकांक्षा, इच्छाविशेषः, मदो गर्वः, मात्सर्यपरगुणासहिष्णुता, मोहः कार्याकार्यविवेकाभावः। इत्यरिषड्वर्गं अरिरूपषड्वर्गं अनर्थकरत्वादरित्वमिति ध्येयम्। चकारात् शोकादयो गृह्यन्ते। तथाचासङ्गस्यादृष्टाद्यभावात् तत्प्रयुक्त-वास्तवसुखदुःखाद्यभावात्। "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा-धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे"ति श्रवणाच्चाहंकाराध्यासात् तद्वृत्तिधर्माध्यासः न तु वास्तवधर्मवत्वमिति। तथा स्मृतिरपि "शोक-हर्षभयक्रोधलोभमोहस्पृहादयः। अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः।" इति ।। ३७ ।।

अन्वयव्यतिरेकाभ्यां महंकाराध्यासस्य कर्तृत्वाद्यभ्यभिमानहेतुत्वं दर्शयति—

**स एव बध्यते (जन्तुः) जीवः स्वप्नजाग्रदवस्थयोः।**
**सुषुप्तौ तदभावाच्च जीवः शंकरतां गतः ।। ३८ ।।**

सः प्रतिबिम्बितो जीवः स्वप्नजाग्रदवस्थयोः स्वप्नसमये जागरण-समय इत्यर्थः। स्वप्नश्च निद्राप्रयुक्तोऽध्यासविशेषः स च साक्षान् मायापरिणामो वा अन्तःकरणद्वारा तत्परिणामो वेत्यन्यदेतत्।

जागरणञ्च बहिरिन्द्रियव्यापारविशेषवत्वम् ॥ अथवा जाग्रद्दशानाम इन्द्रियजन्यज्ञानावस्था। अवस्थान्तरे इन्द्रियाभावान्नातिव्याप्तिः। इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्यवस्था स्वप्नावस्था। जाग्रद्दशाव्यावृत्त्यर्थमिन्द्रियाजन्येति, अविद्यावृत्तिमत्यां सुषुप्तावतिव्याप्तिवारणायान्तःकरणवृत्तीति। कामादिभिः करणभूतैः अहंकारेणैव बध्यते। बन्धनं कर्तृत्वाद्यध्यासप्रयोजकान्तःकरणतादात्म्यरूपसंबंधविशेषः, तद्वान् क्रियत इत्यर्थः। अत्र 'स एव बोध्यते जीव' इति पाठे अहंकारेण जीवः 'अहं सुखी अहंदुःखी'ति बोधविषयीक्रियते। 'बाध्यत' इति पाठे जीवो बाध्यते पीड्यते, 'बाधते जीव'मिति पाठे सः अहंकारः जीवं बाधते = तन्निष्ठदुःखं सम्पादयतीत्यर्थः। पूर्वमहंकाराध्यासस्य कर्त्तृत्वाद्यभिमानहेतुत्वेऽन्वयं प्रदर्श्य इदानीं तद्व्यतिरेकप्रयुक्तकार्यव्यतिरेकं दर्शयति 'सुषुप्तावि'त्यादिना। तदभावात् अहंकाराध्यासाभावात् सुषुप्तौ। सूक्ष्मान्तःकरणविशिष्टसकलेन्द्रियव्यापारविगमदशायां। अथवा सुषुप्तिर्नाम-अविद्यागोचराविद्यावस्था। जाग्रत्स्वप्नयोरविद्यावृत्तेरन्तःकरणवृत्तित्वात् न तत्रातिव्याप्तिः। जीवः शंकरतां बिम्बाभेदं गतः प्राप्तः। तथा च श्रुतिः "सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति"।

ननु "सति संपद्य न विदुः सति संपद्यामह" इति श्रुत्या सर्वेषामेव सुषुप्तिप्रलययोः बीजरूपप्राप्तिरस्तीति को नाम संसारी स्यात् इति चेत् सत्यम्—यद्यपि जीवस्य बिम्बाभेदप्राप्तिः सुषुप्तिप्रलययोः तिष्ठत्येव। तथाप्यावरणशक्त्यवच्छिन्नमायाविशिष्टे बिम्बाभेदप्राप्तिः, नत्वावरणशक्त्यवच्छिन्नमायानवच्छिन्ने, अतस्तदा न संसारित्वहानिरिति॥ ३८॥

पूर्वं करणप्रतिबिम्बितो जीव इत्युक्तम्, इदानीमविद्याप्रतिबिम्बितो जीवः सुखकारणमित्याह—

स एव मायया स्पृष्टः कारणं सुखदुःखयोः।
शुक्तौ रजतवद्विश्वं मायया कल्प्यते शिवे॥ ३९॥

मायया स्पृष्टः मायाप्रतिबिम्बितः सन्नेव सः जीवः सुखदुःखयोः कारणमित्यर्थः। अत्र यद्यपि सुखदुःखादीनामन्तःकरणधर्मत्वेनाविद्या-

प्रतिबिम्बितजीवस्य न कारणत्वं। तथापि अविद्यापरिणाम्यन्त:करण-तादात्म्यापन्नस्यैव सुखदु:खादिमत्वप्रतीते: तेनैव रूपेण तत्कारणत्वमिति न कोऽपि दोष इति ध्येयम्। नन्वसङ्गे परमात्मनि पारमार्थिक संबंधाभावात् काल्पनिकसंबंधो वक्तव्य:, तत्सद्भावे किं मानमित्याशंकय मायासंबंधकल्पनं विना ब्रह्मणि विश्वकल्पनं न संभवतीत्यन्यथानुपपत्या स संबंध: कल्पनीय इत्याह 'शुक्तौ रजतवदि'त्यादिना। यथाशुक्तौ मायामयं रजतं कल्प्यते, तद्वच्छिवे ब्रह्मणि विवर्ताधिष्ठानतया विश्वं मायासंबंधनिबंधनं कल्प्यत इत्यन्यथानुपपत्त्या मायासंबंध: कल्पनीय एवेति ॥३९॥

पूर्वोक्तदु:खाभावमेवोपसंहरति—

ततो विवेकज्ञानेन न कोऽप्यत्रास्ति दु:खभाक्।
ततो विरम दु:खात्त्वं किं मुधा परितप्यसे॥ ४०॥

तत: तस्मात् विवेकज्ञानेन इदमित्थमिति विवेचनपूर्वक स्वरूपज्ञानेन कोऽपि दु:खभाङ् नास्तीत्यर्थ:, तथा च स्वस्वरूपज्ञानेनमविद्यानिवृत्तौ सत्यां न कस्यापि दु:खमस्तीति भाव:। पूर्वं लोकरीत्या सामान्यत उपसंहृत्य इदानीं पूर्वोक्तं रामं प्रत्युपसंहरति ' ततो विरमेति, तत: स्वरूपज्ञानाद्दु:खाद्विरम, स्वस्वरूपज्ञाने सति दु:खं न भविष्यती'ति भाव:। पूर्वार्धे विद्यमान-मत्रेत्येतत् अत्र संबध्यते। तथा चात्र सीताविरहविषये मुधा व्यर्थं किं कारणं परितप्यसे खिद्यस इत्यर्थ:॥ ४०॥

अत्र स्वस्वरूपं विदित्वा दु:खं त्यक्त्वा सुखी भवेति किं मुधापरि-तप्य स इत्यादि यदुक्तं तत् सत्यं, भवदुपदेशवशात् सर्वं तत्त्वतो ज्ञातं, परं तूल्बणप्रारब्धवशात् दु:खमनुभूयते तच्चानिवार्यमित्यभिप्रेत्य रामोऽगस्त्यं प्रत्याह—

मुने! सर्वमिदं सत्यं यन्मदग्रे त्वयोदितम्।
तथापि न जहात्येतत् प्रारब्धादृष्टमुल्बणम्॥ ४१॥

उल्बणं बलवत्तरं भोगैकनाश्यमिति यावत्। प्रारब्धं फलोन्मुखं यददृष्टं तन्मां न जहाति, मां दुःखेन बध्नाति मां दुःखिनं करोतीत्यर्थः ॥ ४१ ॥

उक्तमर्थं दृष्टान्तमुखेन द्रढयति—

मत्तं कुर्याद्यथा मद्यं नष्टाविद्यमपि द्विजम्।
तद्वत्प्रारब्धभोगोऽपि न जहाति विवेकिनम् ॥ ४२ ॥

नष्टाविद्यं नष्टा अविद्या यस्य तमपि द्विजं यथा मद्यं मत्तं कुर्यात्, तद्वत् विवेकिनं तत्वज्ञाननिनमपि मां प्रारब्धभोगो न जहाति। प्रारब्धभोगः प्रारब्धं फलोन्मुखमदृष्टं तज्जन्यो भोगः सुखदुःखसाक्षात्कारः इत्यर्थः ॥ ४२ ॥

पूर्वोक्तमर्थमुपासंहरति—

ततः किं बहुनोक्तेन प्रारब्धं स शिवः स्मृतः।
बाधते मां दिवारात्रमहंकारोऽपि तादृशः ॥ ४३ ॥

बहुनोक्तेनेत्यत्र बहु न उक्तेन इति छेदः। तथा च स्मृतः ध्यातोऽपि सः परमात्मा शिवः प्रारब्धं कर्म न बाधते भोगं विना न नाशयति, भोगमवश्यं प्रयच्छतीत्यर्थः। एवमहंकारोपि तादृशः स्वभार्याहिरणत्वेनोल्बणः मां दिवारात्रं न बाधत इति न, अपि तु बाधत एवेत्यर्थः। तत् तस्मात् प्रारब्धस्य दुष्परिहरत्वात् त्वया उक्ते सत्यपि किं किं प्रयोजनं ? न किमपीत्यर्थः ॥ ४३ ॥

ननु बहुबाधादिकं भवतु, ततः किमित्यत आह—

अत्यन्तपीडितो जीवः स्थूलदेहं विमुंचति।
तस्माज्जीवाप्तये मह्यं उपायः क्रियतां द्विज ॥ ४४ ॥

इतिश्री पद्मपुराणे शिवगीतासूपनिषत्सु अगस्त्यराघवसंवादो नाम द्वितीयोऽध्यायः

तथा च जीवः अत्यन्तपीडितः सन् स्थूलदेहं विमुंचति, लिङ्ग-शरीरस्य आमोक्षमनुवृत्तेः देहे स्थौल्यमिति विशेषणं ध्येयम्। तस्मात् जीवाप्तये स्थूलशरीरे जीवस्थित्यर्थं हे द्विज मह्यंमदर्थं उपायः क्रियता-मिति ॥ ४४ ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाणपारा-
वारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमण्डन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्रीशिवगीताभाष्ये
द्वितीयोध्यायः

श्री लक्ष्मीनृसिंहाय नमः

# तृतीयोऽध्यायः

अत्र मनुष्यातिरिक्तैर्देवादिभिः रावणेन स्वस्यावध्यत्वं ब्रह्मणं प्रति याचितं। तेन तथैवास्त्विति वरो दत्तः। **तथारामायणे उत्तरकाण्डे रावणवरयाच्नासमये** 'भगवन्प्राणिनां नित्यं नान्यत्र मरणाद्भयं। नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे। सुपर्णनागयक्षाणां दैत्यदानवरक्षसां। अवध्योऽहं प्रजाध्यक्ष ! देवतानां च शाश्वतं। नहि चिन्तामनुष्येषु प्राणिष्वमरपूजित ! तृणभूताहि मे सर्वे प्राणिनो मानुषादय' इत्यादि। एवं पुराणादिषु शापवशादज्ञानं स्त्रीवियोगश्चेति द्वयमपि मम रामावतारे भवत्विति विष्णुना स्वीकृतम्। **एवं रामायणे युद्धकाण्डे वायुवचनं** 'राम राम महाबाहो स्मरात्मानं हृदागतम्। नारायणस्तु भगवान् राक्षसार्थेऽवतारितः। स्मर सर्पभुजं देवं वैनतेयं महावलम्। स सर्पबंधनाद्घोराद्युवां संमोचयिष्यति।।' तत्रैव नागपाशविमोचनानन्तरं को भवानिति रामप्रश्नानन्तरं गरुडवचनं 'न च कौतूहलं कार्यं सखित्वं प्रति राघव। कृतकर्मा रणे वीर सखित्वमनुवेत्स्यसि' इति। **तथा बालकाण्डे देवप्रार्थनायां-** 'एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युतिः। शंखदापक्रचगाणिः पीतवासामहाद्युतिः। ब्रह्मणा च समागम्य तत्र तस्थौ समाहितः। तमब्रुवन्सुरास्सर्वे समभिष्टूय सन्नताः। त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया। राज्ञो दशरथस्य त्वमयोध्याधिपतेर्विभोः। धर्मज्ञस्य वदान्यस्य महर्षि समतेजसः। तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च। विष्णो पुत्रत्वमागच्छ कृत्वात्मानंचतुर्विधम्।' इत्यादि। **तत्रैव देवान् प्रति विष्णोर्जानतोऽपि प्रश्नानन्तरं देववचनं।** 'एवमुक्तास्सुरास्सर्वे प्रत्यूचुर्विष्णुमव्ययं। मानुषीं तनुमास्थाय रावणं जहि संयुगे। सहितेपे तपस्तीव्रं दीर्घकालमरिन्दम। येन तुष्टो भवद्ब्रह्मा लोककृल्लोकपूजितः। स तुष्टः प्रददौ तस्मै राक्षसाय वरं प्रभुः। नानाविधेभ्यो भूतेभ्योऽभयं नान्यत्रमानुषात्। अवज्ञाताः पुरा तेन वरदाने हि मानवा' इत्यादि। 'इत्येनद्वचनं श्रुत्वा सुराणां विष्णुरात्मवान्। पितरं रोचया-

मास तदा दशरथं नृप 'मिति, तथा भागवते—'मर्त्यावतारस्त्विहमर्थ-शिक्षणं रक्षोवधायैव न केवलं विभोः। कुतोन्यथास्यू रमतः स्व आत्मनः सीताकृतानि व्यसनानीश्वरस्ये 'ति। तथा 'रक्षोधमेन वृकवद्विपिने समक्षं वैदेहराजदुहितर्यपयाचितायां। भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसंगिनां गतिरिति प्रथयंश्चकारेति' एतत्सर्वमभि-सन्धायापि मुनिः रामस्य कार्यार्थं विष्णुत्वमप्रकटयन्प्राकृतमिव रामं प्रत्याहागस्त्यः—अगस्त्य उवाच—

न गृह्णाति वचः पथ्यं कामक्रोधादिपीडितः।
हितं नरोचते तस्य मुमूर्षोरिव भेषजम्॥ १॥

संसारासारताप्रतिपादकं पथ्यं वाक्यं कामक्रोधादिपीडितः सन्न-गृह्णाति। प्रारब्धाभिमाननिबन्धनं नानुतिष्ठतीत्यर्थः। यतः काम-क्रोधादिपीडितः, अतस्तस्य हितं हितसाधनं नरोचते नेच्छाविषयीभूतं भवतीत्यर्थः, अत्रदृष्टांतमाह मुमूर्षोरिवेति॥ १॥

मयोक्तं मोक्षसाधनं वाक्यमनादृत्य अहंकारेण दुर्लभमेव प्रार्थयसी-त्यभिप्रेत्य दुर्लभत्वं प्रदर्शयन्नाह—

मध्येसमुद्रं यानीता सीता दैत्येनमायिना।
आयास्यति नरश्रेष्ठ! सा कथं तव सन्निधिं॥ २॥

मध्येसमुद्रं समुद्रस्य मध्ये दैत्येन मायिना दैत्याः दितेः पुत्राः तेषां इनः प्रभुः तस्यया माया सास्यास्तीति दैत्यैनमायी तेनदैत्येन मायिना व्रीह्यादित्वादिनिः तथाच तादृशमायाविना प्रहृतत्वेन दुर्लभेत्यर्थः॥ २॥

न केवलं स मायावी अपि तु शौर्यैश्वर्यादिना दुर्जय इत्याह—बध्यन्त-इत्यादिना—

बध्यंते देवतास्सर्वाः द्वारि मर्कटयूथवत्।
किंच चामरधारिण्यो यस्य सन्ति सुरांगनाः॥ ३॥

ऐश्वर्यमाह किंचेत्यादिना॥ ३॥

न केवलं शौर्यैश्वर्यादि अपि तु महादेववरदर्पोऽपीत्याह—

भुङ्क्ते त्रिलोकीमखिलां यः शम्भुवरदर्पितः ।
निष्कंटकं तस्य जयः कथं तव भविष्यति ॥ ४ ॥

अखिलामखिलभोगोपयोगिनीं त्रिलोकीं निष्कंटकं निस्सपत्नं भुङ्क्ते । तवेति संबंधसामान्ये षष्ठी –॥ ४ ॥

इन्द्रजिन्नाम पुत्रो यस्तस्यास्तीशवरोद्यतः ।
तस्याग्रे संगरे देवा बहुवारं पलायिताः ॥ ५ ॥

कुंभकर्णाह्वयो भ्राता यस्यास्ति सुरसूदनः ।
अन्यो दिव्यास्त्रसंपन्नश्चिरंजीवी विभीषणः ॥ ६ ॥

दुर्गं यस्यास्ति लंकाख्यं दुर्जयं देवदानवैः ।
चतुरंगबलं यस्य वर्तते कोटिसंख्यया ॥ ७ ॥

चतुरंगबलमिति । हस्त्यश्वरथपादातं सेनांगं स्याच्चतुर्विध-मित्यमरः । कोटिसंख्यया अपरिमितमित्यर्थः ॥ ७ ॥

एकाकिना त्वया जेयः स कथं नृपनन्दन !
आकांक्षते करे धर्तुं बालश्चंद्रमसं यथा ॥ ८ ॥
तथा त्वं काममोहेन जयं तस्याभिवांछसि ।

एकाकिनेति । यद्यपि लक्ष्मणसहायस्य विद्यमानत्वस्य "एकादाकि-निच्चासहाय" इत्यनेनासहायार्थे विहितस्याकिनिच्प्रत्ययस्यानुपपत्तिः । तथापि रावणवधे रामस्यैव सामर्थ्यात् सत्यपि लक्ष्मणे तस्यासहायत्वात् आकिनिच्प्रत्ययो नानुपपन्न इति भावः । रावणवधः अत्यंतासंभावित इति दृष्टान्तमुखेनाप्याह आकांक्षत इत्यादि बालस्तनंधयः ॥ ८ ॥

हे मुने रावणो दुर्जय इति त्वयोक्तं तथापि स हन्तव्य एव यतोऽहं क्षत्रिय इत्यभिमानपूर्वकं राम आह—

श्रीराम उवाच—

क्षत्रियोऽहं मुनिश्रेष्ठ भार्या मे रक्षसा हृता ॥ ९ ॥

यदि तन्न निहन्म्याशु जीवने मेऽस्ति किं फलम्।
अतस्ते तत्प्रबोधेन न मे किंचित्प्रयोजनं ॥ १० ॥

तत् रक्षः तमिति पाठे तं भार्याहृतारं। अत्र न केवलं आततायित्व निबंधनं स वध्यः अपि तु "अराजके हि लोकेस्मिन् सर्वतो विधृते भयात्। रक्षार्थमस्य सर्वस्य राजानमसृजन्प्रभुः। क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रदंडवान्। निर्जित्यपर सैन्यानि क्षितिं धर्मेण पालयेत्। धर्म्याद्धि युद्धाच्छ्रेयोन्यत्क्षत्रियस्य न विद्यते।" इत्यसाधारणराजधर्मादपि सः अवश्यं वध्य इत्यर्थः क्षत्रियोहमित्यनेन सूचितः। जीवने मेऽस्ति किं फलमिति तादृशदुष्टशिक्षणं विना मे मम जीवने सति किं प्रयोजनं एतद्व्यातिरिक्तं असाधारणं प्रयोजनं न पश्यामीत्यर्थः, तथा च यदि तं आशु शीघ्रं न निहन्मि, तर्हि मे जीवनं निष्फलमित्यर्थः ॥ १० ॥

ननु शाश्वते परमपुरुषार्थ एव मनोदेयं, नत्वशाश्वते रावणवधादौ कर्मणि महतां तस्यैवोपादेयत्वादित्यत आह—

कामक्रोधादयस्सर्वे दह्यते तैस्तनुर्मम।
अहंकारोऽपि मेनित्यं जीवनं हन्तुमुद्यतः ॥ ११ ॥

सर्वे ये कामक्रोधादयः तैर्मे तनुर्दह्यते तनुंममेति पाठे एते सर्वे मे तनुं दहंतीत्यन्वयः एवं अहंकारोऽपि मे जीवनं नित्यं हन्तुमुद्यतः, तथा चारि-षड्वर्गाहंकारादिप्रबलप्रतिबंधकस्य विद्यमानत्वात् परमपुरुषार्थे तस्य वधोपायं विना मनो न रमत इति भावः ॥ ११ ॥

अत्र कामक्रोधादीनां प्रतिबन्धकत्वेऽपि विवेकवैराग्यादिना तत्सर्वं परिहृत्य परमपुरुषार्थं एव यदि यत्नः क्रियेत तर्हि मम कापुरुषत्वमेव स्यादित्याह—

हृतायां निजकान्तायां शत्रुणाऽवमतस्यवा।
यस्य तत्वबुभुत्सा स्यात्सलोके पुरुषाधमः ॥ १२ ॥

निजकान्तायां हृतायां सत्यां शत्रुणा अवम तस्य यस्य तत्वबुभुत्सा-स्यात् लोके पुरुषाधम एव, वा शब्दो भिन्नक्रमेऽवधारणार्थकः। तथा च

स्वकीयभार्याहरणप्रयुक्त शत्रोरवमानविषयस्य यस्य पुरुषस्य शत्रुवधोपाय-मकुर्वतः अवमाननाप्रयुक्तवैराग्यादिभाजः कापुरुषत्वमेवेति भावः ॥ १२ ॥

तस्मात्तस्यवधोपायं लंघयित्वाम्बुधिं रणे।
ब्रूहि मे मुनिशार्दूल ! त्वत्तोनान्योऽस्ति मे गुरुः ॥ १३ ॥

तस्मात् शत्रुवधस्यावश्यकत्वात् अंबुधिं लंघयित्वा रणे तस्य वधो-पायं हे मुनिशार्दूल मुनिश्रेष्ठ 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थ गोचरा' इत्यमरः। मे मह्यं ब्रूहि। अत्र यद्यपि 'समान कर्तृकयोः पूर्वकाल' इत्यनेन समानकर्तृकस्थल एव क्त्वाप्रत्ययस्य विधानात् लंघयित्वा ब्रूहि-त्येतदसंगतं, समानकर्तृकत्वाभावात्, तथापि अंबुधिं लंघयित्वा यथा तं रणे हनिष्यामि तथा तस्य वधोपायं हे मुनिश्रेष्ठ, मे मह्यं ब्रूहीति अध्या-हृत्य व्याख्येयमिति न दोषः। अत्र समुद्रलंघनपूर्वकरावणवधोपायोप-देशे, त्वमेव गुरुर्नान्यः, अतस्त्वं ब्रूहीत्यभिप्रेत्याहत्वतोनेति ॥ १३ ॥

अगस्त्य उवाच—

एवं चेच्छरणं याहि पार्वतीपतिमव्ययम्।
स चेत्प्रसन्नो भगवान्वांछितार्थं प्रदास्यति ॥ १४ ॥

एवं चेत् रावणवधोपायमेव पृच्छसि चेत् तर्हि अव्ययं अनादिनिधनं पार्वतीपतिं शरणं रक्षितारं इष्टप्रदातारं अनिष्टनिवारकमिति यावत्। याहि प्राप्नुहि। ननु तत्र शरणं गतस्य मम किं प्रयोजनं भविष्यतीत्यत आह—स इति। सः प्रसिद्धः परमेश्वरः चेदिति यद्यर्थे अत्र भगवानिति हेतुगर्भविशेषणं। यदि प्रसन्नो भवति तर्हि वांछितार्थं मनोभीष्टं प्रदस्यति ॥ १४ ॥

ननु पार्वतीपतिशरणं किमर्थं गन्तव्यमुपायान्तरमेवानुसन्धेय-मित्यत आह—

देवैरजेयः शक्राद्यैर्हरिणा ब्रह्मणापि वा।
स ते वध्यः कथं वास्तु शंकरानुग्रहं विना ॥ १५ ॥

शक्राद्यैर्देवैः देवेन्द्रप्रभृतिभिः देवैः अजेयः शंकरानुग्रहं विना स ते वध्यः हिंसाविषयः कथं वास्तु कथं वा भवतु। तथा चाजेयोऽवध्योपि सः शंकरानुग्रहे सति ते जेयो वध्यश्च भविष्यतीति भावः। एवं च पूर्वोक्ताजेयत्वोक्त्या न विरोधः॥ १५॥

अतस्त्वां दीक्षयिष्यामि विरजागममाश्रितः।
तेन मार्गेण मर्त्यत्वं हित्वा तेजोमयो भव॥ १६॥

यतः ईश्वरप्रसाद एव अन्वयव्यतिरेकाभ्यां तद्वधादौ हेतुः, अत स्तदुपायं विरजागमं विरजाप्रतिपादकशास्त्रमाश्रितः तदनुसृत्य प्रवर्त-कोहं त्वां दीक्षयिष्यामि। अत्र दीक्षा शब्दार्थः 'दद्याच्च दिव्यभावं क्षिणुयाद् दुरितान्यतो भवेद्दीक्षेति।' आचार्यचरणैः प्रपंचसारे उक्तोर्थो बोध्यः। सांगोपांगं वक्ष्यमाणं उपदेक्ष्यामीति पर्यवसितोऽर्थः। अत्र 'संक्षिप्यास्य प्रवक्तारश्चत्वारः परमर्षयः। रुरुर्दधीचोऽगस्त्यश्च उपमन्युर्महायशा' इति वायुसंहितायां चतुर्णां तेषां विरजामार्गं प्रवर्तकत्वेन स्मृतत्वात्। तथा च विरजामार्गमाश्रित इत्यनेन सत्संप्रदाय-शुद्धिः, स्ववचनस्य विश्वसनीयत्वं चेति द्वयमपि सूचितं भवतीति ध्येयम्। तेन मार्गेण विरजादीक्षोक्तमार्गेण मर्त्यत्वं मर्त्यधर्मं विहाय तेजोमयो भव, दिव्यशरीरवान्भवेत्यर्थः॥ १६॥

पूर्वोक्तमार्गसंपादितदिव्यशरीरस्येश्वरप्रसादद्वारा अनेकप्रयोजना-न्याह—

येन हत्वा रणे शत्रून्सर्वान्कामानवाप्स्यसि।
भुक्त्वा भूमंडलं चान्ते शिवसायुज्यमाप्स्यसि॥ १७॥

येन दिव्यशरीरेण शत्रून्हत्वा भूमंडलं भुक्त्वा भूमंडलं परिपाल्य सार्वभौमपदवीं प्राप्य, मानुषानन्दपदवीं प्राप्येति यावत्। तथा तैत्तरीयक श्रुतिः—"युवास्यात्साधु युवाध्यायकः। आशिष्ठोद्दृढिष्ठोबलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णास्यात्। स एको मानुष आनन्द" इति। सर्वान्कामानवाप्स्यसीति मनुष्यगन्धर्वपदवीमारभ्य प्राजापत्यानन्दपदवी

पर्यन्तान्कामानवाप्स्यसीति। अन्ते सर्वकामभोगान्ते शिवसायुज्यं शिवस्वरूपमवाप्स्यसि ॥ १७ ॥

रामागस्त्ययोः संवादानन्तरं किं वृत्तमिति ऋषीणां प्रश्ने सूत आह—

सूत उवाच—

अथ प्रणम्य रामस्तं दण्डवन्मुनिसत्तमम्।
उवाच दुःखनिर्मुक्तः प्रहृष्टेनान्तरात्मना ॥ १८ ॥

अथागस्त्योक्तोपायश्रवणानन्तरं रामः प्रहृष्टेनान्तरात्मना संतुष्टेन मनसा उपलक्षितः दुःखनिर्मुक्तः दुःखरहितश्चसन् कृतार्थोऽहमित्याद्युवाच ॥ १८ ॥

कृतार्थोऽहं मुने ! जातो वांछितार्थो ममागतः।
पीतांबुधिः प्रसन्नस्त्वं यदि मे किमु दुर्लभम् ॥ १९ ॥

हे मुने अहं कृतार्थो जातः, वांछितार्थः अभिलाषितार्थः मम आगतः आगतप्राय इत्यर्थः। पीतांबुधिस्त्वं प्रसन्नस्तर्हि मे किमपि दुर्लभंनास्तीत्यर्थः। पीतांबुधिरित्यनेन तपःप्रभावातिशयः सूचितः।

अतस्त्वं विरजां दीक्षां ब्रूहि मे मुनिसत्तम। यतस्त्वं प्रसन्नः अतः कारणाद्धे मुनिसत्तम मे मह्यं विरजां दीक्षां विगतं रजः रागद्वेषादिलक्षणो यस्यास्तां विरजां दीक्षां ब्रूहि ॥ १९ ॥

अत्र "संक्षिप्यास्य प्रवक्तारः चत्वारः परमर्षयः। रुरुर्दधीचोऽगस्त्यश्च उपमन्युर्महायशा" इति वायवीयसंहितावचनात् चतुर्णां संक्षेपेण शैवागमप्रवर्तकत्वात्, तत्रागस्त्यः स्वमतानुसारेण विरजादीक्षाप्रकारमाह—

अगस्त्य उवाच—

शुक्लपक्षे चतुर्दश्यामष्टम्यां वा समासतः।
एकादश्यां सोमवारे आर्द्रायां वा समारभेत् ॥ २० ॥

अत्र शुक्लपक्ष इति प्रत्येकं संबध्यते, तथा च शुक्लपक्षे चतुर्दश्यां अष्टम्यां एकादश्यां वा विशेषतः तिथेर्मुख्यत्वादित्यर्थः। एतदलाभे पक्षान्तरमाह आर्द्रायामिति सोमवारयुक्तार्द्रान्वितायां यस्यां कस्यां तिथौ वा समारभेत् समारभेत। चक्षिङो ङित्करणेन अनुदात्तङित इत्यस्या नित्यत्वज्ञापनात्परस्मैपदं। अत्र तिथित्वरूपेणेकोविधिः तत्रैको वाशब्दः, सोमवारयुक्तार्द्रात्वेनापरोविधिः अत्रापरो वाशब्दः। अत्रेदमुपलक्षणं। एवं मासविशेषोऽपि द्रष्टव्यः तदुक्तं मन्त्रशास्त्रे "असिद्धि र्भूमिसंपत्ति-र्मरणं बन्धुनाशनं। आयुर्वृद्धिः प्रजानाशः संपत्तीरत्नसंभवः। शुभप्राप्तिः स्थाननाशोह्यमोघार्थो वशीकृतिः। एवं चैत्रादिमासानां फलान्याहु-र्मनीषिण". इति॥ २०॥

अत्र व्रतप्रारंभसमयमुक्त्वा तत्तन्नामप्रतिपाद्यासाधारणतत्तद्गुण-विशिष्टत्वेन परमेश्वरस्य ध्यानप्रकारमाह—

यं वाममाहुर्यं रुद्रं शाश्वतं परमेश्वरम्॥ २१॥

परात्परतरं चाहुः परात्परतरं शिवम्।
ब्रह्मणो जनकं विष्णोर्वायोर्वह्नेस्सदाशिवम्॥ २२॥

यं परमात्मानं वाममाहुः वामं मनोरमं सर्वप्रियतमं आनंदात्मानं आहुरिति सर्वत्रनाम्नि प्रत्येकमभिसंबध्यते। रुद्रमिति। रोदयति सर्वं अन्तकाल इति रुद्रः। रुजं संसारदुःखं द्रावयतीति वा रुद्रः। रोरूय-माणो द्रवति प्रविशति मर्त्यानिति वा रुद्रः। "त्रिधाबद्धो वृषभो रोरवीति महोदेवोमर्त्यां आविवेशेत्यपरे। रुदिति तेजः, भूम्नि नित्ययोगे वा र-प्रत्ययः, वर्णव्युत्पत्या रुद्रः महातेजस्वीति वा। रुदिति शब्दं वेदात्मानं ब्रह्मणे राति ददाति कल्पादावित्यपरे।" तथा श्रुतिः—'यो ब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै' इति शाश्वतं शश्वद्भवः शाश्वतः तं शाश्वतं अविनाशिनमित्यर्थः। परमेश्वरं परश्चासावीश्वरश्च पर-मेश्वरः तं, परमत्वं चोत्कृष्टत्वं उत्कर्षश्च जगत्कर्तृत्वादिरूपः, ईश्वरत्वं च ब्रह्मादिनियंतृत्वं उत्कृष्टं ब्रह्मादिनियन्तारमित्यर्थः। परात्परतरमिति। परः उत्कृष्टः तस्मादुत्कृष्टः ततोप्युत्कृष्टमित्यर्थः। तथा च परो देवेन्द्रादिः तस्मात्परः हिरण्यगर्भः ततोपि परं परंब्रह्म। एतेन ब्रह्मणो निरतिशयानन्द-

रूपत्वं सूचितमिति। यं परमात्मानमेतादृशमाहुरिति संबंधः। परात्परतरं शिवमिति परं मंगलं तस्मान्मंगलं ततोपि मंगलरूपमित्यर्थः। तथा च परं मंगलं इन्द्रादिस्मरणरूपं तस्मान्मंगलं हिरण्यगर्भस्मरणं तस्मान्मंगलं परब्रह्मस्वरूपस्मरणमिति। तथाचोक्तं महिम्नःस्तुतौ—स्मर्तॄणां वरद परमं मंगलमिति। मंगलानां च मंगळमिति विष्णुसहस्रनाम्नि च। तथा च नार्थपौनरुक्त्यमिति ध्येयं। ब्रह्मणो जनकमिति। अत्र जनकत्वं विंबत्वं। तथा च रजोगुणप्रधानायां मायायां प्रतिबिम्बितं चैतन्यं ब्रह्मेत्युच्यते, एवं सत्वगुणप्रधानायां मायायां प्रतिबिम्बितं चैतन्यं विष्णुरित्युच्यते। इदमुपलक्षणं। तमोगुणप्रधानायां मायायां प्रतिबिम्बितं चैतन्यं रुद्र इति निगद्यते। तदुक्तं विवरणाचार्यैः—"पालने विमलसत्ववृत्तये जन्मकर्मणि रजोजुषे लये। तामसाय जगतः पराकृतद्वैतजालवपुषे नमः सते" इति। अत्र सृष्ट्यादिकार्यानुरोधेन रजोगुणादिप्राधान्यनिबन्धनं मायिकं प्रतिबिम्बमुक्त्वा भौतिकमुत्कृष्टं प्रतिबिम्बमाह वह्नेर्वायोर्जनकमिति। वह्नेर्वायोरित्युपलक्षणं। अन्या अपि षण्मूर्तयो ग्राह्या इति। एतेन सदाशिवं कैवल्यात्मानं नित्यकल्याणरूपं बिम्बभूतं तुरीयं ब्रह्म यं परमात्मानमाहुरिति पर्यवसितार्थः। तदुक्तं आचार्यचरणैः। एकं तुरीयं परं ब्रह्म यं वेद तस्मै नमस्त इति॥ २२॥

ध्यात्वाग्निनावसथ्याग्निं विशोध्य च पृथक् पृथक्।
पञ्च भूतानि संयम्य ध्यात्वा गुणविधिं क्रमात्॥ २३॥

ध्यात्वा पूर्वोक्तप्रकारेण सदाशिवं ध्यात्वा, भूतशुध्यादिकं विधाय पाशुपतव्रतं चरेदिति संबंधः। तत्र भूतशुद्धिप्रकारमाह—अग्निनेत्यात्यादिना, पंचभूतानि स्वकीयदेहारंभकाणि पृथिव्यादीनि पृथक् पृथक् प्रत्येकं, ध्यात्वा तत्तद्वर्णतत्तद्बीजयुक्तं तत्तन्मंडलं ध्यात्वा संयस्म्य, पृथिवीतत्वादिकं क्रमेण परमात्मनि विलाप्य, अग्निना अग्निबीजेन आवसथ्याग्निं दक्षिणपार्श्वस्थितमावसथ्याख्यमग्निं ध्यात्वा—इदमुपलक्षणं। वायुबीजादिना वाय्वादिकमपि ध्यात्वेति बोध्यम्। विशोध्य शोषणादिकं कृत्वेत्यर्थः। गुणविधिंक्रमादिति। गुणाः शब्दादयः तेषां विधिः विधानं तत्तद्गुणविशिष्टत्वेन पृथिव्यादिज्ञानक्रमेण ध्यात्वेत्यर्थः॥ २३॥

मात्राः पञ्चचतस्रश्च त्रिमात्राः द्विस्ततः परम् ।
एकमात्र ममात्रं हि द्वादशान्ते व्यवस्थितम् ॥ २४ ॥
स्थित्यां स्थाप्यामृतो भूत्वा व्रतं पाशुपतं चरेत् ॥ २५ ॥

तत्र पृथिव्यां पञ्चमात्राः, गन्धरसरूपस्पर्शशब्दा इति पञ्चगुणाः अपां चतस्रो मात्राः, रसरूपस्पर्शशब्दा इति चत्वारो गुणाः। तेजसस्तिस्रो मात्राः, रूपस्पर्शशब्दा इति त्रयो गुणाः। वायोः द्विः। द्वेमात्रे स्पर्शशब्दौ गुणाविति। एकमात्रमिति एकामात्राशब्दो गुणो यस्य तदेकमात्रमाकाशं। द्वादशान्त इति। द्वादशान्ते ब्रह्मरन्ध्रे सहस्रदळकमले व्यवस्थितं। हंस-मनुना मूलाधारचक्रात् सुषुम्नामार्गेण नीत्वा सहस्रदळकमले पर-मात्मनि संयोजितं अमृतं ध्यात्वेत्यर्थः। अमात्रं न विद्यन्ते मात्रा गन्धा-दयो यस्य तं जीवात्मानमित्यर्थः। इदं च पंचभूत संयमनात्प्रागेव बोद्धव्यं। ततः परं प्लावन-पिंडीकरण-सुषिरीकरणानन्तरं स्थित्यां यथा स्थाने जीवात्मानं स्थाप्य स्थापयित्वा। आर्षोयं प्रयोगः। अमृतो भूत्वा अमृत-मयं शरीरं ध्यात्वा पाशुपतव्रतं चरेदिति संबंधः। अत्रायं भूतशुद्धिक्रमः— आदावासनशुद्धिः। ततो गुरुवंदनं। ततो गणपतिवन्दनं। ततः कर-शुद्धिः। ततस्तालत्रयं। ततो दिग्बंधनं कृत्वा। ततो वह्निप्राकारत्रयं ध्यात्वा भूतशुद्धिं कुर्यात्। तद्यथा—पादादिजानुपर्यंतं ऊरुपर्यंतं वा पृथिवीस्थानं। तच्चतुरस्रं पीतवर्णं वज्रादिलांछितं लंबीजयुक्तं ध्यायेत्। जान्वादिनाभिपर्यन्तमपां स्थानं। तच्चार्धचन्द्राकारं शुक्लवर्णं पद्म-लांछितं वमितिबीजयुक्तं ध्यायेत्। नाभेरूर्ध्वं कण्ठपर्यंतं तेजःस्थानं, तच्च त्रिकोणाकारं रक्तवर्णं स्वस्तिकलांछितं रमिति बीजयुक्तं ध्यायेत्। कण्ठादूर्ध्वं भ्रूमध्यपर्यन्तं वायुस्थानं, तच्चषट्कोणाकारं षड्बिंदुलांछितं कृष्णवर्णं यमिति बीजयुक्तं ध्यायेत्। भ्रूमध्यादि ब्रह्मरन्ध्रपर्यन्तम् आकाश-स्थानं, तच्च वृत्ताकारं धूम्रवर्णं हमिति बीजयुक्तं ध्यायेत्। एवं स्वशरीरे पञ्चभूतानि ध्यात्वा धर्मकन्दज्ञाननाळैश्वर्याष्टदळं वैराग्यकर्णिक-हृदयांबुजं मुकुळितत्वेन ध्यात्वा तच्च प्रणवेन विकसितं कृत्वा तत्कर्णि-कास्थं चैतन्यात्मकं जीवं प्लुतप्रणवोच्चारणेन सुषुम्नानाडीमार्गतो निर्गमय्य, तं जीवं द्वादशान्तस्थितसहस्त्रदळकमलनिष्ठ परमात्मना सहैकीकृत्य, स्वशरीरारंभकपञ्चभूतानां पृथिव्यादिक्रमेण प्रविलापनं

कुर्यात्। तद्यथा—तत्तद्बीजादिकमुच्चार्यं पृथिवीं अप्सु प्रविलापयामि। अपः अग्नौ प्रविलापयामि। अग्निं वायौ प्रविलापयामि। वायुं आकाशे प्रविलापयामि। आकाशं नित्यशुद्धबुद्धमुक्तस्वभावे सत्यज्ञानानन्द-लक्षणे प्रणवाकारे प्रणवार्थभूते ब्रह्मणि प्रविलापयामीति प्रविलापयेत्। तदनन्तरं वामकुक्षिस्थं पापपुरुषं स्थूलदेहसंबंधिनं कृष्णवर्णं स्वकीयं भूतमयं शरीरं च शोषयामीत्यनुस्मरन्, वामनासापुटे वायुमण्डलस्थ-वायुं ध्यात्वा, तं वामनासया आकृष्य, वायुबीजोच्चारणेन शरीरस्थदोष-जातं संशोष्य, दक्षिणनासया निर्गमय्य, दक्षिणनासापुटे अग्निमंडलस्थित-मावसथ्याख्यमग्निं ध्यात्वा। तथा च श्रूयते—मुखेचाहवनीयं, हृदये गार्हपत्यं, नाभौ दक्षिणाग्निं, दक्षिणे चावसथ्यं, उत्तरे च सभ्यंचेति ध्यात्वा तमग्निं दक्षिणनासयाकृष्य अग्निबीजोच्चारणेन शरीरस्थदोषजातं स्वशरीरारंभकभूतजातं च दाहयित्वा तद्भस्म, वामनासया निर्गमय्य ब्रह्मरन्ध्रस्थितपूर्णचन्द्रमंडलस्थामृतं ध्यात्वा तदमृतं धाराकारेण सुषुम्ना-मार्गात् शरीरान्तःप्रवेश्यामृतबीजमुच्चार्य प्लावयेत्। तदनन्तरं लंबीजेन काठिन्यं परिभाव्य हंबीजेन सुषिरं परिभाव्य तत्र यथास्थाने जीवात्मानं सोहमित्यनेन संस्थाप्य, ततः सृष्ट्यादिविधिं विदध्यात्। तद्यथा 'आत्मन आकाशः संभूतः, आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी समजायतेति ध्यात्वा, तेभ्यो भूतेभ्यस्सकाशात्स्वशरीरं तेजोमयं सर्व-पुरुषार्थसाधनं देवताराधनयोग्यं अमृतमुत्पन्नमिति ध्यात्वा तत्कर्म-समाचरेदिति, अन्यच्च मन्त्रशास्त्रस्यातिरहस्यत्वाद्विस्तरभयाच्च नेह प्रतन्यत इति॥ २५॥

इदं व्रतं पाशुपतं करिष्यामि समासतः।
प्रातरेवं तु संकल्प्य निधायाग्निं स्वशाखया॥ २६॥

इदं पाशुपतव्रतं समासतः संक्षेपेण यथाशक्ति यथाज्ञानमहं करिष्यामि, एवं संकल्प्य स्वशाखया स्वशाखोक्तरीत्या अग्निं निधाय प्रतिष्ठाप्य अग्निमुखान्तं कृत्वा विरजामन्त्रैर्जुहुयादित्यन्वयः। पाशुपतव्रतं नाम पशून् अज्ञानिनः संसारिणः पाति रक्षतीति पशुपतिः आनन्दात्मा, सः देवता अस्य व्रतस्येति पाशुपतं व्रतं, पशुपतिना स्वप्राप्त्यर्थं प्रोक्तमिति वा पाशुपतं व्रतं॥ २६॥

उपोषितः शुचिः स्नातः शुक्लांबरधरः स्वयम् ।
शुक्लयज्ञोपवीतश्च शुक्लमाल्यानुलेपनः ॥ २७ ॥

पूर्वस्मिन्दिने कृतोपवासः शुचिरान्तरशौचवान्ल्यस्नातो बाह्यशौचवान् स्वयमिति सर्वत्र संबध्यते, शुक्ले माल्यानुलेपने यस्य सः शुक्लमाल्यानुलेपनः। अत्र शब्दक्रमादर्थक्रमो बलीयानित्ययमर्थः 'अर्थाच्चेत्यस्मिन्सूत्रे अग्निहोत्रं जुहोति, यवागूं पचति, इत्यत्र स्पष्टः। तथा चात्रापि पूर्वेद्युरुपोषणं, परेद्युः प्रातःस्नानं, तदनन्तरं शुक्लवस्त्रानुलेपनादिधारणं, तदनन्तरं भूतशुद्धिः, तदनन्तरं संकल्पः, तदनन्तरमग्निप्रतिष्ठापनं, तदनन्तरं विरजाहोमादिरित्ययं क्रमो द्रष्टव्यः' ॥ २७ ॥

जुहुयाद्विरजामन्त्रैः प्राणापानादिभिस्ततः ।
अनुवाकान्तमेकाग्रः समिधाज्यचरून् पृथक् ॥ २८ ॥

एकाग्रस्सन् "प्राणापानादिभिः प्राणापानव्यानोदानसमाना मे शुद्ध्यंतां ज्योतिरहं विरजाविपाप्मा भूयासं" स्वाहेत्यादिभिः, 'अन्नमय-प्राणमय-मनोमय-विज्ञानमयमानन्दमयमात्मा मे शुध्यन्तां ज्योतिरहं-विरजा-विपाप्मा भूयासं स्वाहे'त्येदन्तैः-विरजामन्त्रैः।

समिधाज्य चरून् समिधः आज्यं चरुं च पृथक् पृथक् द्रव्यं पृथक् पृथक् जुहुयादित्यर्थः। अनुवाकान्तमिति अनुवाकयोरन्तः अनुवाकान्तः अनुवाकान्तमिति क्रियाविशेषणं। तथ चाग्नयेस्वाहेत्येतस्य प्राक्तनैः प्राणापानादिभिः अन्नमयप्राणमयेत्येतदन्तैः मन्त्रैर्जुहुयादित्यर्थः। नारायणोपनिषद्भाष्ये–आचार्यचरणैः–प्राणापानाद्यनुवाकद्वयसमाप्तिपर्यंतस्य विरजामन्त्रत्वप्रतिपादनात् अयमर्थो बोध्यः ॥ २८ ॥

आत्मन्यग्निं समारोप्य याते अग्नेति मन्त्रतः ।
भस्मादायाग्निरित्याद्यैर्विमृज्यांगानि संस्पृशेत् ॥ २९ ॥

प्राणापानादिभिस्तत इत्यत्र ततःपदमत्र संबध्यते। तथा च ततो होमानन्तरं आत्मनि हृदयेऽग्निं विरजाहोमाग्निं "याते अग्नेति" मन्त्रतः मंत्रेण, अत्र हे कृष्ण हे यादव हे सखेतिवत्संधिरार्षः। याते अग्ने यज्ञिया-तनूरिति मन्त्रेण समारोप्य निधाय। अग्निरित्याद्यैरिति। अत्र आद्य-

पदेन भस्मनः आदाने अभिमन्त्रणे धारणे च ये उपयुक्ताः मन्त्राः ते संगृह्यन्ते। तथा च हृदये अग्निनिधानानन्तरं सद्योजातादिभिः पञ्चभिर्ब्रह्ममन्त्रैर्भस्मादाय गृहीत्वा। अस्य श्री भस्माभिमन्त्रणमन्त्रस्य पिप्पलादऋषिः, गायत्रीच्छन्दः, श्री सदाशिवो देवता, भस्म शुध्यर्थे जपे विनियोगः- अग्निरिति भस्म। वायुरिति भस्म। जलमिति भस्म। स्थलमिति भस्म। व्योमेति भस्म। सर्वं हवा इदं भस्म। मनः एतानि चक्षूंषि भस्मानि। इत्येतैर्मन्त्रैः विमृज्य संशोध्याभिमन्त्र्येति यावत्। तेन भस्मना अङ्गानि शिरोललाटादीनि संस्पृशेत्। तथा च भस्मांगोभयनिष्ठसंयोगानुकूलव्यापारवान्भवेदित्यर्थः। अत्र भस्मांगस्पर्शनमन्त्राः। शिरसि गुरुभ्यो नमः। ललाटे ब्रह्मणे नमः। हृदये हव्यवाहनाय नमः। नाभौ स्कंदाय नमः। गले पूष्णे नमः। दक्षिणबाहुमूले रुद्राय नमः। मध्ये आदित्याय नमः। मणिबन्धे सोमाय नमः। वामबाहुमूले वामदेवाय नमः। मध्ये प्रभंजनाय नमः। मणिबन्धे वसुभ्यो नमः। पृष्ठे हराय नमः। अपरगळे पिनाकिने नमः। कर्णमूले रुद्राय नमः। सर्वांगे सदाशिवाय नमः। एतैर्मन्त्रैस्तत्तत्स्थानेषु भस्म धारयेदित्ययमर्थः जाबालोपनिषदादौ द्रष्टव्यः। अग्निरित्यादि मन्त्राणामयमर्थः, अग्निरिति भस्म। अग्निः प्रसिद्धो लौकिकः शास्त्रीयश्च इन्धनसंयोगात् सर्वाभावविधायको ज्वालावलीढः दाह्याभावात्प्रसरमलभमानः उपरत इत्यनेन प्रकारेण परित्यज्य स्वं-नामरूपं कर्म च भस्म भसितमात्रं। वायुरिति भस्म। वायुः पवनः विश्वविनाशार्थं प्रवृत्ते कुण्डलीकृत ज्वालामण्डले वायुसखे सख्युर्वृद्ध्यर्थं विविधः शब्दैः सर्वकर्णरन्ध्राणि पूरयन् स्वनीतैः रजोभिः सर्वचक्षूंषि मुष्णन् अति प्रबलानि शिखरिशिखराणि सशाखीन्यपि पातयन् इन्धनाभावादुपरते स्वसखे स्वयमपि स्वसखिवत् पश्चात् अनुपलभ्यमान इत्यनेन प्रकारेण भस्म भसितमात्रं। जलमिति भस्म। जलं पय आदिरूपमग्नौ प्रक्षिप्तं नीरं स्वेनरूपेण स्वस्मादभ्यधिक इत्यनेन प्रकारेण भस्म भसितमात्रं। स्थळमिति भस्म। स्थलं पृथिवी स्वरूपं अग्निसंयुक्तमित्यनेन प्रकारेण भस्म भसितमात्रं। किं बहुना सर्वं निखिलं ह प्रसिद्धंव स्मर्यमाणमिदं विविध प्रत्ययगम्यं जगत् भस्म भसितमात्रं। मनः मनोगम्यं समनस्कं चेदं भस्मेत्यन्वयः। एतानि

प्रसिद्धानि चक्षूंषि चक्षुःप्रधानानीन्द्रियाणि भस्मानि भसितमात्राणि इत्यथर्वशिरउपनिषद्भाष्ये स्पष्टं ॥ २९ ॥

इदानीं तादृशभस्मधारणस्य फलमाह—

भस्मच्छन्नो द्विजो विद्वान् महापातकसंभवैः ।
पापैर्विमुच्यते नित्यं मुच्यते च न संशयः ॥ ३० ॥

भस्मच्छन्नः भस्मलिप्तसर्वाङ्गः द्विज इत्यधिकारपरं, विद्वान् पूर्वोक्तकलापज्ञानवान् महापातकसंभवैः महापातकं ब्रह्महत्यादिकं तज्जन्यैरदृष्टैः पापैः अतिपातकोपपातकानुपातकैः विमुच्यते तादृशदुरितक्षयवान्भवतीत्यर्थः। नित्यमिति भस्मच्छन्न इत्यनेन संबध्यते। न केवलं तादृशभस्म धारणं तादृशपापक्षयजनकं। अपि तु मोक्षफलकमपीत्याह मुच्यते चेति। सद्य इति पाठे तादृशपापैः सद्यो मुच्यत इत्यर्थः ॥ ३० ॥

तादृशसामर्थ्यं भस्मनः कुत इत्यत आह—

वीर्यमग्नेर्यतो भस्म वीर्यवान् भस्मसंयुतः ।
भस्मस्नानरतो विप्रो भस्मशायी जितेन्द्रियः ।
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ॥ ३१ ॥

यतः भस्म अग्नेर्वीर्यं सारभूतं, अतो भस्मसंयुतः वीर्यवान्बलवान् भवतीत्यर्थः। अत्र तपश्चरणादौ स्नातस्यैवाधिकारित्वात्। न च स्नाने नीराणि सर्वदा सर्वत्र सर्वैरधिकारिभिस्सेवितुं शक्यानि। अतः शुद्धिहेतुतया नीरस्नानप्रतिनिधित्वेन भस्मस्नानमाह—भस्मस्नानेत्यादिना। अत्रायं भस्मस्नानक्रमः—'पापक्षयार्थं सौख्यार्थं पूजायोग्यत्वसिद्धये करिष्ये भस्मना स्नानं इति संकल्प्य तच्चरेत्।' सद्योजातादिभिः पञ्चभिः ब्रह्ममन्त्रैः अग्निरित्यादि मन एतानि चक्षूंषि भस्मानीत्येतदन्तैः त्र्यायुषं जमदग्नेरित्यनेन पञ्चाक्षरीमन्त्रेण प्रणवेन च एकादशवारमभिमन्त्र्य पञ्चसु स्थानेषु विकिरेत् "ईशानेन शिरोदेशं मुखं तत्पुरुषेणतु। उरोदेशमघोरेण गुह्यं वामेन सेचयेत्, सद्येन पादौ सर्वांगं प्रणवेनाभिषेचयेत्। मध्यमानामिकांगुष्ठः ललाटे च त्रिपुण्ड्रकम्, नेत्रयुग्मप्रमाणेन कुर्वीत प्रयतो द्विजः।" भस्मधारणमन्त्राः, शिरसि गुरुभ्योनम इत्यादि

पूर्वोक्ताः द्रष्टव्याः। इदं च पञ्चाक्षरीपूजापद्धत्यादौ स्पष्टं। पूर्वोक्तमुपसंहरन्नाह सर्वपापेत्यादिना ॥ ३१ ॥

अत्रागस्त्यः व्रतस्वरूपमुक्त्वा रामं प्रति त्वमेवं कुर्वित्याह—

एवं कुरु महाभाग ! शिवनामसहस्रकम्।
इदं तु संप्रदास्यामि तेन सर्वार्थमाप्स्यसि ॥ ३२ ॥

इत्युक्त्वा प्रददौ तस्मै शिवनामसहस्रकम्।
वेदसाराभिधं नित्यं शिवप्रत्यक्षकारकम् ॥ ३३ ॥

उक्तं च तेन रामोपि जपन्नित्यं दिवानिशम् ॥ ३४ ॥

अत्र पाशुपतव्रतप्रकारोक्त्यनन्तरं त्वमेवं कुर्विति नियोगेन व्रतकरणस्य सिद्धत्वात् संप्रदास्यामीत्यनेनोपदेशस्य साध्यत्वाच्च 'सिद्धसाध्य समभिव्याहारे सिद्धं साध्याय कल्पत इति न्यायेन तादृश व्रतकरणानन्तरमेवोपदेश इत्यर्थो लभ्यते। स्नानं कुरु, धनं दास्यामीत्यादौ यथास्नानस्य धनदानपूर्ववर्तित्वं लभ्यते तद्वदिहापीत्यर्थः। तथाचेदं शिवनामसहस्रकं संप्रदास्यामि, तेन सामर्थ्यमाप्स्यसीत्युक्त्वा तस्मै रामाय शिवनामसहस्रकं प्रददौ प्रकर्षेण दत्तवान्, प्रकर्षश्च शिवलिंगप्रतिष्ठापनध्यानपूजादिरूपोर्थः। तथा च सांगोपांगमतिरहस्यं नित्यं धृतं अवश्यं शिवप्रत्यक्षजनकमित्यर्थः। वेदसाराभिधं वेदसारसंज्ञकं शिवनामसहस्रकमुपदिष्टवानित्यर्थः। इदं त्वित्यत्र तुशब्देनातिरहस्यत्वमुक्तमिति ध्येयं। अत्र न केवलं मन्त्रग्रहणादेवेष्टसिद्धिः, अपि तु जपादिनेत्यभिप्रेत्य तेनागस्त्येन जपन्नित्यमित्याद्युक्तं, नित्यं फलप्राप्तिपर्यन्तं दिवानिशं जपन् ॥ ३४ ॥

ततः प्रसन्नो भगवान् महापाशुपतास्त्रकम्।
तुभ्यं दास्यति तेन त्वं शत्रून्हत्वाप्स्यसि प्रियां ॥ ३५ ॥

तस्यैवास्त्रस्य माहात्म्यात् समुद्रं शोषयिष्यसि।
संहारकाले जगतामस्त्रं तत्पार्वतीपतेः ॥ ३६ ॥

तद्लाभे दानवानां जयस्तव सुदुर्लभः।
तस्माल्लब्धुं तदेवास्त्रं शरणं याहि शंकरम् ।। ३७ ।।

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु तृतीयोध्यायः

ततः वेदसाराख्य-सहस्रनाम-जपात् भगवान् प्रसन्नः सन् महापाशुपतनामकमस्त्रं तुभ्यं दास्यतीत्यन्वयः। तेन पाशुपतास्त्रेण शत्रून्हत्वा प्रियामाप्स्यसि ।। ३५ ।।

तस्यास्त्रस्य माहात्म्यादेव समुद्रं शोषयिष्यसि समुद्रशोषणेपि शक्तो-भविष्यसि इत्यर्थः। पार्वतीपतेः जगतां संहारकाले तत्पाशुपताख्यमस्त्रं क्षेपणीयं। अन्यदानक्षेपणीयमिति भावः ।। ३६ ।।

उपसंहरन्नाह तस्मादित्यादि। यस्मात्तदलाभे तादृशास्त्रालाभे दानवानां दानवादीनां तव सुदुर्लभो जयः, तस्मात्तदेवास्त्रं लब्धुं प्राप्तुं शंकरं शरणं याहि ।। ३७ ।।

इति श्री मत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमण्डन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
तृतीयोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## चतुर्थोऽध्यायः

अगस्त्यरामसंवाद श्रवणानन्तरं ततो रामः किमकरोदित्यवांतर ऋषि प्रश्ने पूर्वोक्तं किंचिदनुवदन् ऋषीन् प्रति सूत आह—

सूत उवाच—

एवमुक्त्वा मुनिश्रेष्ठे गते तस्मिन्निजाश्रमम् ।
अथ रामगिरौ रामः पुण्ये गोदावरीतटे ॥ १ ॥

शिवलिंगं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि ।
भूतिभूषितसर्वांगो रुद्राक्षाभरणैर्युतः ॥ २ ॥

अभिषिच्य जलैः पुण्यैः गौतमीसिंधुसंभवैः ।
अर्चयित्वा वन्यपुष्पैः तद्वद्वन्यफलैरपि ॥ ३ ॥

भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः ।
नाम्नां सहस्रं प्रजपन्नक्तंदिवमनन्यधीः ॥ ४ ॥

अत्र यद्यपि अवांतर ऋषि प्रश्नो न श्रूयते, तथापि सूतस्य प्रक्रान्तत्वात् पुनः सूत उवाचेत्यनेन ऋषीणां अवान्तरप्रश्न आक्षेपवशाल्लभ्यत इति ध्येयं। एवमुक्त्वेति। दिवानिशं जपन् शंकरं शरणं याहीत्येवमुक्त्वा मुनिश्रेष्ठे निजाश्रमं गते सति, अथागस्त्यगमनानन्तरं रामगिरौ पर्वत-विशेषे पुण्ये पुण्यजनके आयुर्घृतमित्यादिवत्, रामः स्थित इत्यग्रेतनेनान्वयः ॥ १ ॥

दीक्षां कृत्वा सांगोपांगमुपदेशं प्राप्य यथाविधि शिवलिंगं प्रतिष्ठाप्य भूतिभूषितसर्वांगः भूतिर्भस्म तेन भूषितं ललाटादि पूर्वोक्तस्थानं यस्य सः रुद्राक्षाभरणैर्युतश्च सन् ॥ २ ॥

पुण्यैः पवित्रैः गौतमीसिन्धुसंभवैः सिंधुः सरित् गौतमी सरित् गोदावरीति यावत्, संभवैः तत्प्रभवैः जलैः शिवलिंगमभिषिच्य वन्यपुष्पैः

तद्वद्वन्यफलैरपि अर्चयित्वा पूजयित्वा भस्मच्छन्नः भस्मलिप्तसर्वांगः भस्मशायी सन्व्याघ्रचर्मासने स्थितः ॥ ३ ॥

पुनः किं कुर्वन् स्थित इत्याकांक्षायामाह—नाम्नामित्यादि । वेदसाराख्यं नाम्नां सहस्रं नक्तंदिवं रात्रौ दिवसे च अनन्यधीः न विद्यते अन्यस्मिन् धीर्ज्ञानं यस्य अन्यविषयकज्ञानरहितः शिवमात्रविषयक ज्ञानवानित्यर्थः ॥ ४ ॥

ईश्वर-प्रसादसिध्यर्थं तपश्चरणमाह—

मासमेकं फलाहारो मासं पर्णाशनः स्थितः ।
मासमेकं जलाहारो मासं च पवनाशनः ॥ ५ ॥

एकमासमभिव्याप्य फलाहारः फलातिरिक्ताहाराभाववान्, एकमिति सर्वत्र संबध्यते । एवमग्रेपि बोध्यं ॥ ५ ॥

शान्तो दान्तः प्रसन्नात्मा ध्यायन्नेवं महेश्वरम् ।
हृत्पंकजे समासीनमुमादेहार्धधारिणम् ॥ ६ ॥

शान्तः अन्तरिन्द्रियनिग्रहवान्, दान्तः बहिरिन्द्रियनिग्रहवान्, अथवा निगृहीतस्य मनसः तत्वप्रतिप्रतियोग्यताकारणं दमः । यथा-दान्तोयं वृषभो युवेत्यादिवत् प्रसन्नात्मा निर्मलांतःकरणश्चसन्, एवं वक्ष्यमाणप्रकारेण महेश्वरं ध्यायन् स्थितः ॥ ६ ॥

चतुर्भुजं त्रिणयनं विद्युत्पिगजटाधरम् ।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतळम् ॥ ७ ॥

सर्वाभरणसंयुक्तं नागयज्ञोपवीतिनम् ।
व्याघ्रचर्मांबरधरं वरदाभयधारिणम् ॥ ८ ॥

व्याघ्रचर्मोत्तरीयं च सुरासुरनमस्कृतम् ।
पञ्चवक्त्रं चन्द्रमौळिं त्रिशूलडमरूधरम् ॥ ९ ॥

त्रिशूलडमरूधरमिति समासे दीर्घ आर्षः ॥ ९ ॥

नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ।
एवं नित्यं प्रजपतो गतं मासचतुष्टयम् ।। १० ।।

नित्यं विनाशशून्यं, शाश्वतं शश्वद्भवं, सर्वदा वर्तमानमित्यर्थः। शुद्धं मायातीतं, ध्रुवमबाधितं जगदधिष्ठानमिति यावत्, अक्षरं व्याप्तं अव्ययं षड्भावविकारशून्यं। एवमिति। एवमनेन रूपेण नित्यं निरन्तरं। प्रजपतः प्रकर्षेण जपतः, प्रकर्षश्च ध्यानपूर्वकत्वं। मास चतुष्टयं गतं चत्वारो मासा व्यतीता इत्यर्थः।। १० ।।

अथ जातो महानादः प्रळयांबुधिभीषणः।
समुद्रमथनोद्भूत—मन्दरावनिभृद्ध्वनिः ।।
रुद्रबाणाग्निसंदीप्तभृशंत्रिपुरविभ्रमः ।। ११ ।।

अथ मासचतुष्टयानन्तरं महानादो जातः, कीदृशो महानाद इत्यत आह—प्रळयांबुधिभीषण इत्यदि। प्रळयांबुधिः प्रळयकालीनो यो अंबुधिः तस्य ध्वनिरिव भीषणो भयंकर इत्यर्थः। प्रळयांबुद भीषण इति पाठेतु प्रळयकालीनांबुदजन्यध्वनिरिव भीषण इत्यर्थः। समुद्र-मथनोद्भूतो यो मन्दरावनिभृतो मन्दराचलस्य ध्वनिरिव ध्वनिर्यस्य सः। रुद्रबाणाग्निना संदीप्तं भृशं त्रिपुरं पुनःपुनः ज्वलदित्यर्थः। संदीप्तत्रिपुराद्यो विभ्रमः संभ्रमः हाहाकारादिकमित्यर्थः। तादृश विभ्रम इव विभ्रमो यस्मात् तादृशो महानादो जात इत्यर्थः। भ्रश्यत्रिपुर-विभ्रम इति पाठे तु संदीप्तं यद् भ्रश्यत्त्रिपुरं तत्संभ्रम इव संभ्रमो यस्मा-दित्यर्थः।। ११ ।।

तमाकर्ण्याथ संभ्रान्तो यावत्पर्येति पुष्करम् ।
तावदेव महातेजो रामस्यासीत्पुरो द्विजाः !।। १२ ।।

अथ नादानन्तरं तं नादमाकर्ण्य श्रुत्वा संभ्रान्तः कुतोयं शब्दो जात इति व्यग्रचित्तो रामो यावत् पुष्करं शब्दवत्वेनाकाशं। 'पुष्करं करि-हस्ताग्रे वाद्यभाण्डमुखे जले। व्योम्नि खड्गफलेपद्मे' इत्यमरः। पर्येति परितो विलोकयति, तावदेव तन्मध्य एव हे द्विजाः रामस्य पुरतः महातेजः तेजोराशिरासीत्। अत्र यावत्पश्यतीति पाठेप्ययमेवार्थः।। १२ ।।

तेजसा तेन संभ्रान्तो नापश्यत्स दिशो दश।
अन्धीकृतेक्षणस्तूर्णं मोहं यातो नृपात्मजः॥ १३॥

विचिन्त्य तर्कयामास दैत्यमायां द्विजेश्वराः!॥ १४॥

तेन तेजसा संभ्रान्तः सन् दिशोदश नापश्यत् नृपात्मजो रामः। अन्धीकृतेक्षणः अन्धीकृते ईक्षणे यस्य तादृशः सन् तूर्णं तदानीं मोहं यातः प्राप्तः, विचिन्त्य क्षणं ध्यात्वा दैत्यमायां तर्कयामास दैत्यमायेति मेने॥ १४॥

अथोत्थाय महावीरः सज्यं कृत्वा धनुः स्वकम्।
अविध्यन्निशितैर्बाणैर्दिव्यास्त्रैरभिमन्त्रितैः॥ १५॥

अथ दैत्यमायेति निश्चयानन्तरं महावीरो रामः स्वं स्वकीयं धनुः सज्यं कृत्वा धनुः कोटौ ज्यामारोप्येत्यर्थः। अभिमंत्रितैः निशितैर्बाणैर्दिव्यास्त्रैरविध्यत् प्रादुर्भूतं तेजः अविध्यदित्यर्थः॥ १५॥

दिव्यास्त्राण्येवाह—

आग्नेयं वारुणं सौम्यं मोहनं सौरपार्वते।
विष्णुचक्रं महाचक्रं कालचक्रं च वैष्णवम्॥ १६॥

रौद्रं पाशुपतं ब्राह्मं कौबेरं कुलिशानिलं।
भार्गवादिबहून्यस्त्राण्ययं प्रायुङ्क्त राघवः॥ १७॥

तस्मिंस्तेजसि शस्त्राणि चास्त्राण्यस्य महीपतेः।
विलीनानि महाभ्रस्य करका इव नीरधौ॥ १८॥

आग्नेयं अग्निदेवताकं वारुणं वरुणदेवताकं सौम्यं सोमदेवताकं हिमवर्षणमिति यावत्, मोहनं मोहनास्त्रं सौरपार्वते सौरंच पार्वतं च सौरपार्वते सूर्यदेवताकं पर्वतदेवताकं चेत्यर्थः। विष्णुचक्रं सुदर्शनः, महाचक्रकालचक्रे, चक्रविशेषौ, वैष्णवं विष्णुदेवताकं वैष्णवास्त्रमिति यावत्, रौद्रं रुद्रदेवताकं पाशुपतं पशुपतिदेवताकं महापाशुपतव्यतिरिक्तं, ब्राह्मं ब्रह्मास्त्रं कौबेरं कुबेरदेवताकं कुलिशं वज्रं अनिलं वायुदेवताकं भार्गवादि भार्गवः शुक्रः तत्संबंधि अस्त्रं तदादीनि बहून्यस्त्राणि अयं राघवः तस्मिन् तेजसि प्रायुङ्क्त प्रयुक्तवान्, अस्य महीपतेः रामस्य अस्त्राणि मन्त्रविशेष

विशिष्टानि अस्त्राणि आयुधमात्राणि तस्मिन् तेजसि विलीनानि स्वरूपतां प्राप्तानि, तत्र दृष्टान्तमाह—महाभ्रस्येति—महाभ्रस्य करकाः महामेघसंबंधिनो वर्षोपलाः यथा नीरधौ विलीनानि भवन्ति तदिव ॥ १८ ॥

ततः क्षणेन जज्वाल धनुस्तस्य कराच्च्युतम् ।
तूणीरं चांगुलित्राणं गोधिकापि महीपतेः ॥ १९ ॥

ततः सकलास्त्रादिविलयानन्तरं तस्य महीपतेः रामस्य धनुः क्षणेन क्षणमात्रेण जज्वाल कराच्च्युतंच एवं तूणीरं एवं अङ्गुळित्राणं अङ्गुळिरक्षार्थं बद्धं चर्मादि, गोधिकापि प्रकोष्ठबद्धज्याघातवारक चर्मादिविशेषः जज्वाल च्युतोपीत्यर्थः ॥ १९ ॥

तद् दृष्ट्वा लक्ष्मणो भीतः पपात भुवि मूर्छितः ।
अथाकिंचित्करो रामो जानुभ्यामवनीं गतः ॥ २० ॥

अथ युद्धसामग्रीनाशानन्तरं रामः अकिंचित्करः कार्याक्षमः सन् जानुभ्यामवनीं गतः ॥ २० ॥

मीलिताक्षो भयाविष्टः शंकरं शरणं गतः ।
स्वरेणाप्युच्चरन्नुच्चैः शंभोर्नामसहस्रकम् ॥ २१ ॥

शिवं च दण्डवद् भूमौ प्रणनाम पुनःपुनः ॥
पुनश्च पूर्ववच्चासीच्छब्दो दिङ्मंडलं स्वनन् ॥ २२ ॥

मीलिताक्षः मीलिते अक्षिणी यस्य स तथाभूतः, भयाविष्टः भयं प्राप्तः सन् शंकरं सुखजनकमीश्वरं शरणं गतः । स्वरेणेति उच्चैस्स्वरेण शंभोः नामसहस्रकमप्युच्चरन् सन् दण्डवद् भूमौ पुनःपुनः प्रणनामचेति संबंधः । पुनश्चेति, पूर्ववत् पुनश्च शब्दः दिङ्मंडलं स्वनन् दिङ्मंडलं प्राप्य स्वनन् स्वनान्जनयन्, अत्रस्वनन्निति अन्तर्भावितण्यर्थार्थकः ॥ २२ ॥

चचाल वसुधा घोरं पर्वताश्च चकंपिरे ।
अथ क्षणेन शीतांशुशीतलं तेज आदधत् ॥ २३ ॥

उन्मीलिताक्षो रामस्तु यावद्यावत्प्रपश्यति ।
तावद्ददर्श वृषभं सर्वालंकारसंयुतम् ॥ २४ ॥

वसुधा तेन शब्देन घोरं भयं यथा तथा चचाल, पर्वताश्च चकंपिरे ग्रसन्निति पाठे शब्दो दिङ्मंडलं व्याप्नुवन्, ग्रसन्नित्यत्र शतृप्रत्ययः आर्षः अनुदात्तेत्वलक्षणस्य अनित्यत्वज्ञापनाद्वा। अथ अनंतरं क्षणेन शीतांशु-शीतलं शीतांशुश्चंद्रः तद्वत् शीतलं शीतलत्वमिति भावप्रधानो निर्देशः आदधत् तत्तेजः रामः उन्मीलिताक्षः सन् यावद्यावत्पश्यति तावत्तेजो वृषभं ददर्श तदेव तेजोवृषभत्वेन ददर्श-इत्यर्थः। तदुक्तं माघे ' चयस्त्विषामित्यवा-धारितं पुरे 'त्यादि तं वृषभं विशिनष्टि। सर्वालंकारसंयुतमित्यादिना ॥ २४॥

पीयूषमथनोद्भूतनवनीतस्यपिण्डवत्।
प्रोतस्वर्णं मरकतच्छायशृंङ्गद्वयान्वितम्॥ २५॥

पीयूषार्थं मथनं पीयूषमथनं तेन यदुद्भूतं यन्नवनीतं तस्य यः पिण्डः तद्वत्सदृशं प्रोतं ग्रथितं सुवर्णं यत्र तादृशं, पुनः कीदृशं? मरकतच्छायशृङ्ग-द्वयान्वितं मरकतस्येव छाया कान्तिः यस्य तादृशं शृङ्गद्वयं तेनांचितं युक्तं प्रोथस्वर्णमिति पाठे प्रोथं नासायां स्वर्णं यस्य तम्॥ २५॥

नीलरत्नेक्षणं ह्रस्वकण्ठकम्बलभूषितम्।
रत्नपल्याणसंयुक्तं निबद्धं श्वेतचामरैः॥ २६॥

पुनः कीदृशं नीलरत्नेक्षणं नीलरत्नवदीक्षणं यस्य तं, पुनः कथंभूतं, ह्रस्वकण्ठकंबलभूषितं ह्रस्वो यः कण्ठकंबलः सास्ना तेन भूषितं पुनः कीदृशं रत्नपल्याणसंयुक्तं रत्नखचितं पल्याणं रत्नपल्याणं तेन संयुक्तं पुनः कीदृग्भूतं निबद्धं श्वेतचामरैः॥ २६॥

घण्टिकाघर्घरैः शब्दैः पूरयन्तं दिशो दश।
तत्रासीनं महादेवं शुद्धस्फटिकविग्रहम्॥ २७॥

घण्टिकाः क्षुद्रघण्टिकाः तासां ये घर्घराः शब्दाः तैः दश दिशः पूरयन्तं एतादृशं वृषभं ददर्शेति संबंधः, तत्रेति तत्र तस्मिन् वृषभे तादृशं महादेवं ददर्श रघुनन्दन इत्यग्रेतनेनान्वयः। कीदृशमित्याकांक्षायां आह—आसीन-मित्यादि॥ २७॥

कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
व्याघ्रचर्मांबरधरं नागयज्ञोपवीतिनम् ।। २८ ।।

सर्वालंकारसंयुक्तं विद्युत्पिंगजटाधरम् ।
नीलकण्ठं व्याघ्रचर्मोत्तरीयं चन्द्रशेखरम् ।। २९ ।।

नानाविधायुधोद्भासि दशबाहुं त्रिलोचनम् ।
युवानं पुरुषश्रेष्ठं सच्चिदानन्दविग्रहम् ।। ३० ।।

नानाविधान्यायुधानि तैरुद्भासी यो दशबाहुः दशबाहवो यस्य सः नानाविधायुधोद्भासीचासौ दशबाहुश्च नानाविधायुधोद्भासिदशबाहुः तं । 'शान्तं पद्मासनस्थं शशिधरमकुटं पञ्चवक्त्रं त्रिणेत्रं । शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तं । नागं पाशं च घण्टांकुशवरदकरान् पार्वतीं वामभागे नानालंकारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि ?' इति ध्याने अष्टावायुधानि, तैरष्टबाहव एवोद्भासिताः न तु, दश, अत्र रामं प्रति वराभयदानार्थं आगतस्य परमेश्वरस्य वरदाभयहस्तयोरावश्यकत्वात् तयोश्चास्त्रवत्वाभावात् एतद्ध्यानस्यैव प्रकृते अपेक्षणीयत्वात्, उद्भासिनो दशबाहवो यस्येति बहुव्रीहेरलग्नकतापत्तेस्तथा कर्मधारय एवादृतः । तथा चाष्टावायुधानि तैरुद्भासितो दशबाहुश्चेति अर्थो लभ्यत इति न कोपि दोष इति, युवानमिति सर्वदा युवानं पुरुषश्रेष्ठं पुरुषोत्तमं सच्चिदानन्दविग्रहं सच्चिदानन्दस्य परमात्मानो यो विग्रहो लीलाविग्रहस्तं ददर्शेत्यन्वयः ।। ३० ।।

तत्रैव च सुखासीनां पूर्णचन्द्र निभाननाम् ।
नीलेन्दीवरदामाभां उद्यन्मरकतप्रभाम् ।। ३१ ।।

तत्रैव वृषभ एव रघुनन्दनः अम्बिकां च ददर्शेत्यन्वयः । अम्बिका कीदृशीत्यत आह सुखासीनामित्यादि । नीलेन्दीवरदामाभामिति नीलेन्दीवरदाम्न इव आभा यस्यास्तां । अत्र यद्यपि इन्दीवर इत्यनेन नीलत्वं प्राप्तं । तथापि करिंकलभ इत्यादिवत् अतिशयद्योतनार्थं तदुक्तमिति ध्येयं । उपमानान्तरमाह—उद्यन्मरकतप्रभामिति उद्यन्ती मरकतस्येव प्रभा सा

यस्यास्तां, अथवा उद्यन्ती प्रकाशयन्ती या मरकतप्रभा सा यस्यास्तां अम्बिकाया एव मरकतप्रभावत्वेन रूपणादिति भावः ॥ ३१ ॥

मुक्ताभरणसंयुक्तां रात्रिं तारांचितामिव ।
विन्ध्यक्षितिधरोत्तुंग-कुचभार-भरालसाम् ॥ ३२ ॥

मुक्ताभरणसंयुक्तां मुक्ताभिः रचितानि आभरणानि तैः संयुक्तां अत एव तारांचितां रात्रिमिवस्थितां। विन्ध्यक्षितिधरोत्तुंगकुचभार-भरालसामिति—विन्ध्याख्यो यः क्षितिधरः पर्वतः तद्वदुत्तुंगावुन्नतौ यौ कुचौ तयोर्यो भारभरः भारातिशयः तेनालसां नम्रां॥ ३२॥

सदसत्संशयाविष्ट-मध्यदेशांतरांबराम् ।
दिव्याभरणसंयुक्तां दिव्यगन्धानुलेपनाम् ॥ ३३ ॥

दिव्यमाल्यांबरधरां नीलेन्दीवरलोचनाम् ।
अलकोद्भासिवदनां तांबूलग्रासशोभिताम् ॥ ३४ ॥

सदसत्संशयाविष्टमध्यदेशांतरांबरामिति—सदसत्वेन संशयविषयो मध्यदेशः तत्रांतरं परिधानं यस्यास्तां। 'अन्तरमवकाशावधि परिधान-मित्यमरः।' वरां श्रेष्ठामित्यर्थः तलोदरीमिति पाठे कृशोदरीमित्यर्थः। दिव्याभरणसंयुक्तां दिवि भवानि दिव्यानि तत्रापि सर्वोत्कृष्टानि तादृशै-राभरणैस्संयुक्तां, दिव्यगन्धानुलेपनां दिव्यः उत्कृष्टो गन्धो यस्यानु-लेपनस्य तादृशमनुलेपनं यस्यास्तां॥ ३३॥

दिव्यमाल्यांबरधरां धरतीति धरा, दिव्यमाल्यांबरयोः धरां दिव्य-माल्यांबरधरां। नीलेन्दीवरलोचनां नीलेन्दीवरे इव लोचने यस्यास्तां नीलेतिव्याख्यातं, अलकोद्भासिवदनां अलकैरुद्भासि वदनं यस्यास्तां तांबूलग्रासशोभितां ग्रासाश्रय-तांबूलशोभिताम्॥ ३४॥

शिवालिंगनसंजातपुलकोद्भासिविग्रहाम् ।
सच्चिदानन्दरूपाढ्यां जगन्मातरमम्बिकाम् ॥ ३५ ॥

शिवालिंगनेन संजातो यः पुलकः तेनोद्भासी विग्रहो लीलाविग्रहो यस्यास्तां सच्चिदानन्दरूपाढ्यां सच्चिदानन्दरूपा च आढ्ाच सच्चिदानन्दरूपाढ्या आढ्या अणिमाद्यष्टैश्वर्यवती तां ॥ ३५ ॥

सौंदर्यसारसंदोहां ददर्श रघुनंदनः ।
स्वस्ववाहनसंबद्धान् नानायुध-लसत्करान् ॥ ३६ ॥

सौंदर्यसारसंदोहां संदोहः समुदायः, सौंदर्यस्य यः सारः तस्य यः संदोहः सः यस्यास्तां तादृशीं रघुनंदनो ददर्शेत्यन्वयः। न केवलं शिवं देवीं च ददर्श, अपि तु देवानपि ददर्शेत्याह-स्वस्वेत्यादि कीदृशान् देवान् स्वस्ववाहनसंबद्धान् स्वस्ववाहनारूढान् पुनः किं भूतान् नानायुध-लसत्करान् नानाविधैः लसंतः कराः येषां तान् ॥ ३६ ॥

बृहद्रथंतरादीनि सामानि परिगायतः ।
स्वस्वकान्ता-समायुक्तान् दिक्पालान्परितः स्थितान् ॥ ३७ ॥

बृहच्च रथन्तरंच बृहद्रथन्तरं तदादीनि यानियानि सामानि तानि परिगायतः दिक्पालान्, इन्द्रादीन् पुनः किं भूतान् स्वस्वकांतासमायुक्तान् परितःस्थितान् आवरणत्वेन स्थितान् ददर्शेत्यनुषगः ॥ ३७ ॥

न केवलं दिक्पालान् ददर्श अपि तु विष्ण्वादीनपि ददर्शेत्याह—

अग्रगं गरुडारूढं शंखचक्रगदाधरम् ।
कालांबुद प्रतीकाशं विद्युत्कांत्या श्रिया युतम् ॥ ३८ ॥

जपन्तमेकमनसा रुद्राध्यायं जनार्दनम् ।
पश्चाच्चतुर्मुखं देवं ब्रह्माणं हंसवाहनम् ॥ ३९ ॥

चतुर्वक्त्रैश्चतुर्वेदरौद्रसूक्तैर्महेश्वरम् ।
स्तुवंतं भारतीयुक्तं दीर्घकूर्चं जटाधरम् ॥ ४० ॥

अग्रे गच्छतीत्यग्रगं शिवपुरोभागे गच्छन्तं गरुडारूढं शंखचक्रगदाधरं कालांबुद प्रतीकाशं कालः श्यामलः यो अंबुदः तत्प्रतीकाशं

तत्सदृशमित्यर्थः। विद्युत इव कांतिः यस्याः तया श्रिया लक्ष्म्या युतं युक्तं एकमनसा एकाग्रेण रुद्राध्यायं जपंतं जनार्दनं ददर्शेत्यनुषंगः, पश्चात् पृष्ठतो भागे चतुर्मुखं ब्रह्माणं हंसवाहनं चतुर्वक्त्रैः चतुर्वेदस्थितैः रौद्रसूक्तैः महेश्वरं स्तुवन्तं, भारती सरस्वती तया युक्तं दीर्घकूर्चं दीर्घः कूर्चः श्मश्रु यस्य तं 'कूर्चोविकत्थने मध्ये भ्रुवोः श्मश्रुणिकैरव' इति विश्वः, जटाधरं जटावन्तम्॥ ४०॥

किंच मुनिमंडलं उपददर्शेत्याह—

अथर्वशिरसा देवं स्तुवंतं मुनिमंडलम्।
गंगादितटिनीयुक्तं अंबुधिं नीलविग्रहम्॥ ४१॥

श्वेताश्वतरमंत्रेण स्तुवंतं गिरिजापतिम्।
अनंतादि महानागान् कैलासगिरिसन्निभान्॥ ४२॥

कैवल्योपनिषत्पाठान् फणिरत्नविभूषितान्।
सुवर्णवेत्रहस्ताढ्यं नंदिनं पुरतः स्थितम्॥ ४३॥

दक्षिणे मूषकारूढं गणेशं पर्वतोपमम्।
मयूरवाहनारूढं उत्तरे षण्मुखं तथा॥ ४४॥

अथर्वशिरसा अथर्वशिरउपनिषदा देवं महादेवं स्तुवंतं मुनिमंडलं मुनिसमूहं, अंबुधिं च ददर्शेत्यनुषंगः कीदृशं अंबुधिं? गंगादितटिनीयुक्तं नीलविग्रहं नीलो विग्रहः शरीरं यस्य तम्॥ ४१॥

श्वेताश्वतरमन्त्रेण गिरिजापतिं स्तुवंतं, एवं अनंतादि-महानागान् कैलासगिरिसन्निभान् वर्णतः कैलासगिरिसदृशान्॥ ४२॥

कैवल्योपनिषदां पाठो येषां तान्, फणिरत्नविभूषितान् फणियोग्यं यद्रत्नं तद्विभूषितान् ददर्शेत्यनुषंगः, मणिरत्नविभूषितानिति पाठे मणिश्रेष्ठविभूषितानित्यर्थः। सुवर्णवेत्रहस्ताढ्यं सुवर्णविशिष्टं यद्वेत्रं तद्युक्तो यो हस्तः तदाढ्यं तद्विशिष्टमित्यर्थः। पुरतःस्थितं नंदिनं ददर्शेत्यनुषंगः॥ ४३॥

मूषकारूढं मूषकमारूढं पर्वतोपमं गणेशं शिवस्य दक्षिणभागे ददर्शे-त्यनुषंगः। किंच मयूरवाहनारूढं मयूररूपं यद्वाहनं तदारूढं उत्तरे उत्तर-भागे षण्मुखं कार्तिकेयं ददर्शेत्यनुषंगः ॥ ४४ ॥

महाकालं च चंडेशं पार्श्वयोर्भीषणाकृतिम्।
कालाग्निरुद्रं दूरस्थं ज्वलद्दावाग्निसन्निभम् ॥ ४५ ॥

पार्श्वयोर्महाकालं चंडेशं च ददर्शेत्यनुषंगः, किंच भीषणाकृतिं भीषणा भयजनिका आकृतिः यस्य तं कालाग्निरुद्रं ज्वलद्दावाग्निसन्निभं ज्वलता-दावाग्निना सदृशमित्यर्थः, अतएव दूरस्थं ददर्शेत्यनुषंगः ॥ ४५ ॥

त्रिपादं कुटिलाकारं नटद्भृंगिरिटिं पुनः।
नानाविकारवदनान् कोटिशः प्रमथाधिपान् ॥ ४६ ॥

भृंगिरिटिं ददर्शेत्यन्वयः, कीदृशं ? त्रिपादं, अत एव कुटिलाकारं वक्रा-कृतिं नटद्भृंगिरिटिं नटन्चासौ भृंगिरिटिश्च तं, नानाविकार-वदनान् नानाविकारसहितानि यानि वदनानि येषां तान् कोटिशः प्रमथाधिपान् ददर्शेत्यनुषंगः ॥ ४६ ॥

नानावाहनसंयुक्तं परितो मातृमंडलम्।
पंचाक्षरीजपासक्तान् सिद्धविद्याधरादिकान् ॥ ४७ ॥

एवं नानावाहनसंयुक्तं मातृमंडलं परितो ददर्शेत्यनुषंगः। पंचाक्षरी-जपासक्तान् पंचाक्षरी विद्या, तस्याः यो जपः तदासक्तान् सिद्धविद्या-धरादिकान् ददर्शेत्यनुषंगः ॥ ४७ ॥

दिव्यरुद्रकगीतानि गायत्किंनरवृंदकम्।
तत्र त्रैय्यंबकं मंत्रं जपद्द्विजकदंबकं ॥ ४८ ॥

गायंतं वीणया गीतं नृत्यंतं नारदं दिवि।
नृत्यतो नाटचनृत्तेन रंभादीनप्सरोगणान् ॥ ४९ ॥

दिव्यरुद्रकगीतानि गायत्किंनरवृंदकं दिव्यानि यानि रुद्रकगीतानि रुद्रसंबंधिगीतानि, गायत्किनरवृंदकं ददर्शेत्यनुषंगः, तत्रैव त्रैय्यंबकं मंत्रं त्र्यंबकसंबंधिनं मंत्रं जपद्द्विजकदंबकं ददर्शेत्यर्थः ॥ ४८ ॥

किंच वीणया गीतं गायंतं दिवि अंतरिक्षे नृत्यंतं नारदं ददर्शेत्यनुषंगः। रंभा आदिः येषां तान् नाटचनृत्तेन नाटचसहितेन नृत्तेन विशिष्टान् नृत्यतः नृत्यं कुर्वंतश्च अप्सरोगणान् ददर्श तत्र गणमध्ये कांश्चन नृत्तं कांश्चन नृत्यं कांश्चन नाटचं कुर्वंतश्च तादृशान्गणान् ददर्शेत्यर्थः, तत्र-नृत्तं 'गात्रविक्षेपमात्रं तु सर्वाभिनय वर्जितं ; आंगिकोक्त प्रकारेण नृत्तं नृत्तविदो विदुः।' नृत्यं, 'आंगिकाभिनयैरेव भावानेवव्यनक्तियत् ; तन्नृत्यं मार्गशब्देन प्रसिद्धं मार्गवेदिना।' नाटचं, 'नाटचशब्दो रसे मुख्यो रसाभिव्यक्तिकारणं ; चतुर्धाभिनयोपेतं लक्षणावृत्तितो बुधैः।' इत्यादि संगीतरत्नाकरे द्रष्टव्यं ॥ ४९ ॥

गायच्चित्ररथादीनां गंधर्वाणां कदंबकम्।
कंबलाश्वतरौ शंभुकर्णकुंडलतां गतौ ॥ ५० ॥

गायंतो येचित्ररथादयो गंधर्वाः तेषां कदंबकं समूहं ददर्शेत्यनुषंगः। कंबलश्चाश्वतरश्च कंबलाश्वतरौ शंभुकर्णकुंडलतां गतौ शंभोः महादेवस्य कर्णयोः कुंडलतां गतौ ददर्शेत्यनुषंगः ॥ ५० ॥

गायंतौ पन्नगौ गीतं कपालं कंबलं तथा।
एवं देवसभां दृष्ट्वा कृतार्थो रघुनंदनः ॥ ५१ ॥
हर्षगद्गदया वाचा स्तुवन्देवं महेश्वरम्।
दिव्यनामसहस्रेण प्रणनाम पुनःपुनः ॥ ५२ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु
ईश्वरप्रत्यक्षंनाम चतुर्थोऽध्यायः

एवं गीतं गायंतौ कपालं कंबलं च पन्नगौ, ददर्शेति सर्वत्रान्वयः। एवमुक्तप्रकारेण देवो महादेवः तस्य सभां देवसभां दृष्ट्वा रघुनंदनः हर्षगद्गदया हर्षेण गद्गदया अव्यक्तया वाचा महादेवं देवं दिव्यनाम-सहस्रेण स्तुवन् पुनःपुनः प्रणनाम ॥ ५२ ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
चतुर्थोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## पंचमोऽध्यायः

अथ सभायां परमेश्वरदर्शनानंतरं तत्र किं जातमिति ऋषीणामवांतर प्रश्ने सूत आह—

सूत उवाच—

अथ प्रादुरभूत्तत्र हिरण्मयरथो महान्।
अनेक-दिव्यरत्नांशुकिंमीरित-दिगंतरः ॥ १ ॥

अत्रापि सूत उवाचेति पुनरुक्त्या ऋषीणामवांतरप्रश्न आक्षेपाल्लब्ध इति ध्येयं। अथ तादृश ईश्वरदर्शनानंतरं तत्र परमेश्वरनिकटे महान् हिरण्मयो हिरण्यविकारः स्वर्णमयः कुंडल इतिवत्, रथः प्रादुरभूत् अकस्माद् दृग्विषयोऽभूत् हिरण्मय इति तु खांडनायनसूत्रे छंदसि निपातनात्साधुः, यद्यपि नेदं छंदः, तथापि छंदोवदृषयः कुर्वंतीति न्यायात् अत्रापि-साधुत्वं द्रष्टव्यं। सरथः कीदृश इत्यत आह अनेकेति। अनेकानि दिव्यान्युत्कृष्टानि यानि रत्नानि इन्द्रनीलपद्मरागप्रभृतीनि तेषामंशुभिः स्वस्वकिरणः किंमीरितदिगंतरः किंमीरितं चित्रितं, तदस्य संजातमित्यर्थे इतच्, किंमीरितं चित्रितं दिगंतरं यस्मात्तादृशः ॥ १ ॥

नव्योऽपांतिक पंकाढच महाचक्र चतुष्टयः।
मुक्तातोरणसंयुक्तः श्वेतच्छत्रशतावृतः ॥ २ ॥

नव्योपांतिक पंकाढच महाचक्रचतुष्टय इति नव्यः सर्वदा नवीनः अपांतिक पंकाढचः अपगतः अंतिके पंको यस्य सः, एतेन देवानामिव दिव्य-रथस्यापि भूसंबंधाभावोऽवसीयते, सचासा वाढचश्चेति, आढचः समृद्धः रथोपकरणसकलसमृद्धिमान् महाचक्रचतुष्टय इति महत् चक्रचतुष्टयं यस्य, तादृशः अपांतिक पंकाढचश्चासौ महाचक्रचतुष्टयश्चेति सः, मुक्ता-तोरणसंयुक्त इति मुक्ताभिर्युक्तं तोरणं तद्युक्त इत्यर्थः श्वेतच्छत्र-शतावृत इति श्वेतानि यानि छत्रशतानि तैरावृतः ॥ २ ॥

शुद्धहेमखुरैराढ्य तुरंगगणसंयुतः ।
मुक्तावितानविलसदूर्ध्वदिव्यवृषध्वजः ।। ३ ।।

शुद्धं यद्धेम तप्तकांचनं तेन निर्मितं यत् खलीनं अश्वमुखनियामक श्रृंखलाविशेषः, तेन युक्तो यस्तुरंगगणः तत्संयुतः । शुद्धहेमखुरैराढ्य इति पाठे शुद्धहेमविशिष्टैः खुरैराढ्यो यस्तुरंगगणः तत्संयुत इत्यर्थः, मुक्तावितानेत्यादि–मुक्ताभिः निर्मितं यद्वितानं तेन विलसंश्चासौ ऊर्ध्वदिव्यवृषध्वजश्चेति, ऊर्ध्वं रथादूर्ध्वं दिव्यो वृषध्वजो यत्र, अथवा ऊर्ध्वः उत्तुंगः दिव्यवृषध्वजो यत्र ।। ३ ।।

मत्तवारणिकायुक्तः पंचतत्वोपशोभितः ।
पारिजाततरूद्भूतपुष्पमालाभिरंचितः ।। ४ ।।

मत्ताः याः वारणिकाः वारणकर्त्र्यः रथद्वारवासिन्यः शक्तयः, ताभिर्युक्तः, पंचतत्वानि पंचमहाभूतानि मूर्तिमंति तैरुपशोभितः । पट्टतल्पोपशोभित इति पाठे पट्टमयं तल्पं तेन शोभित इत्यर्थः । मदवारणसंयुक्त इति पाठे मदयुक्ताः ये वारणाः गजाः तैर्युक्तः रथस्य परितः स्थितिरेव योगः । पंचतल्पोपशोभित इति पाठेतु विस्तृत तल्पोपशोभित इत्यर्थः, पंचास्य इतिवत्, पंचकल्पेति पाठे पंचो विस्तृतः कल्पो विधिः रचनेति यावत् विविध रचनोपशोभित इत्यर्थः, अथवा पंचकल्पाः ये पंचविधा देवतरवः मूर्तिमंतस्तैरुपशोभितः । कल्पस्तु प्रळये न्याये शास्त्रे ब्रह्मदिने विधौ । सुरद्रुमविकल्पेच प्रत्ययश्चेत्समर्थक । इत्युभयत्रापि नानार्थरत्नमाला, पुनः कीदृशः पारिजाततरूद्भूतपुष्पमालाभिरंचित इति । पारिजात तरोः उद्भूतानि यानि पुष्पाणि तेषां मालाभिरलंकृत इत्यर्थः ।। ४ ।।

मृगनाभिसमुद्भूतकस्तूरीमदपंकिलः ।
कर्पूरागरुधूपोत्थगन्धाकृष्टमधुव्रतः ।। ५ ।।

मृगस्य नाभिः मृगनाभिः तत्र समुद्भूतो यः कस्तूरीमदः तस्य यः पंकः तद्वानित्यर्थः । कर्पूरेत्यादि-कर्पूरादगरुधूपाच्च समुत्थो यो गंधः तेन आकृष्टा मधुव्रता यत्र तादृशः ।। ५ ।।

संवर्तघनघोषाढ्यो नानावाद्यसमन्वितः।
वीणावेणुसमासक्तकिन्नरीगणसंकुलः ॥ ६ ॥

संवर्ते प्रळयकाले ये घनाः तेषां घोषा इव घोषाः तै राढ्यः तद्युक्त इत्यर्थः। नानावाद्येति। नानाविधानि यानि वाद्यानि, तैस्समन्वितः। वीणेत्यादि। वीणावेणुसमायुक्ताः ये किन्नरीगणाः तैस्संकुलः एतादृशो रथः प्रादुरभूदिति संबंधः ॥ ६ ॥

एवं दृष्ट्वा रथश्रेष्ठं वृषादुत्तीर्य शंकरः।
अंबया सहितस्तत्र पटतल्पेऽविशत्तदा ॥ ७ ॥

एवं एतादृशं रथश्रेष्ठं दृष्ट्वा शंकरो वृषादुत्तीर्य अवरुह्य अंबया सहितस्सन् पटतल्पे तदा तस्मिन्समये अविशदुपविष्टवान् ॥ ७ ॥

सुरनीरजनेत्रीणां श्वेतचामरचालनैः।
दिव्यवाहनपातैश्च प्रहृष्टो नीललोहितः ॥ ८ ॥

सुराणां याः नीरजनेत्र्यः तासां श्वेतचामरचालनैः दिव्यवाहनपातैश्च वातैरिति वा, नीललोहितः कंठे नीलः करपादतलादौ अधरे च लोहित इत्यर्थः प्रहृष्टस्सन् अविशदिति प्राक्तनेन संबंधः ॥ ८ ॥

क्वणत्कंकणनिध्वानैः मंजुमंजीरनिस्वनैः।
वीणावेणुस्वनैर्गीतैः पूर्णमास जगत्रयम् ॥ ९ ॥

क्वणत्कंकणनिध्वानैः क्वणंति रावं कुर्वंति यानि कंकणानि करभूषणानि तेषां निध्वानैः निस्वनैः एवं मंजुमंजीरशिंजितैः मंजीरो नूपुरः पादभूषणं तस्य मंजुभिः शिंजितैः नादैः, एवं वीणावेणुस्वनैः वीणास्वनैः वेणुस्वनैः गीतैश्च जगत्रयं पूर्णमास बभूवेत्यर्थः आसेति व्याख्यातं आसीदिति पाठः सुगमः ॥ ९ ॥

शुकवाक्यकलारावैः श्वेतपारावतस्वनैः।
उन्निद्रभूषाफणिनां दर्शनादेव बर्हिणः ॥ १० ॥

ननृतुः दर्शयंतस्स्वान्चंद्रकान्कोटिसंख्यया।

शुकवाक्यकलारावैः शुकवाक्यानि यानि तेषांकलाः अव्यक्तमधुराः आरावाः ध्वनयः तैः। शुककेकिकुलारावैरिति पाठान्तरं। तत्र शुककुलस्य केकिकुलस्य आरावैरित्यर्थः, तथा श्वेतपारावतस्वनैः श्वेताः ये पारावताः तेषां स्वनैः पूर्णमासीदिति पूर्वेणान्वयः। उन्निद्रेति। उन्निद्राः ये भूषाफणिनः उन्निद्राः गीतश्रवणेनालसतया स्वल्पनिद्राः भूषाफणिनः भूषारूपा ये फणिनः तेषां मध्ये केषांचित् नीलरूपाणामपि विद्यमानत्वात् नीलरूपवत्वेन तेषां दर्शनादेव दर्शनमात्रेणव मेघभ्रान्त्या स्वान् स्वकीयान् चंद्रकान् दर्शयंतः कोटिसंख्यया बर्हिणो ननृतुः, तथा च तादृशनीलरूपवत्वेन मेघभ्रान्त्या ननृतुः न तु सर्पत्वेन भक्ष्यत्वबुध्या। परमेश्वरनिकटे साहजिकवेराभावादिति ॥ १० ॥

प्रणमन्तं ततो राम मुत्थाप्य वृषभध्वजः।
आनिनाय रथं दिव्यं प्रहृष्टेनान्तरात्मना ॥ ११ ॥

कमंडलुजलैः स्वच्छैः स्वयमाचम्य यत्नतः।
समाचाम्याथ पुरतः स्वांके राममुपानयत् ॥ १२ ॥

तत स्तादृशरथोपविष्टेश्वरदर्शनानन्तरं प्रहृष्टेनान्तरात्मना प्रणमन्तं रामं वृषध्वजः उत्थाप्य दिव्यं रथमानिनाय स्थापयामासेत्यर्थः। कमंडलुजलैरित्यादि—अत्र अथशब्दः समुच्चये ; तदुक्तं गणव्याख्याने-मंगळानन्तरारंभप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेष्विति—स्वच्छैर्निर्मलैः कमंडलुजलैः स्वयमाचम्य राममाचाम्य च पुरतोग्रतः स्वांके स्वान्तिके स्वस्य समीप इति यावत्, तथाचाह विश्वः—"अंकस्थानेन्तिकोन्मत्तरूपकोत्सव-लक्ष्मसु, नाटकादि परिच्छेदेचित्रयुद्धे च भूषण" इति। तत्रोपानयत् अत्यंत समीपं प्रापितवानित्यर्थः। अत्र समाचम्येति पाठे न कम्यमिचमामिति मित्वनिषेधात् ह्रस्वाभावे प्राप्ते ह्रस्वः आर्षः ॥ १२ ॥

अथ दिव्यं धनुस्तस्मै ददौ तूणीरमक्षयम्।
महापाशुपतं नाम दिव्यमस्त्रं ददौ ततः ॥ १३ ॥

उक्तश्च तेन रामोपि सादरं चन्द्रमौळिना ॥ १४ ॥

अथ रामसमीपनयनानंतरं तस्मै रामाय दिव्यं अच्छेद्यं धनुः, अक्षयं न विद्यते बाणानां क्षयो यत्र तमक्षयं तूणीरं ददौ, ततः तदनन्तरं महापाशुपतं नाम महापाशुपतसंज्ञकं दिव्यमस्त्रं ददौ उपदिष्टवान्, रामोऽपीत्यत्रापिशब्दः अस्त्रमित्यनेन संबध्यते, तथा च दिव्यमस्त्रमप्युपदिष्टवानित्यर्थः अत्रापिशब्देनातिरहस्यत्वं सूचितमिति तेनातिरहस्यमपि रामाय ददावित्यर्थो लभ्यते, उक्तश्चेत्यादि—तेन चन्द्रमौळिना रामस्सादरमुक्तश्च ॥ १४ ॥

रामः किमुक्त इत्याकांक्षायामाह—

जगन्नाशकरं रौद्रमुग्रमस्त्रमिदं नृप।
अतो नेदं प्रयोक्तव्यं सामान्यसमरादिके॥ १५॥

रौद्रं रुद्रदेवताकं जगन्नाशकरं प्रळयकरं उग्रं भयजनकं इदं महापाशुपतास्त्रं, अतः उक्तहेतोः इदमस्त्रं सामान्यसंमरादिके सामान्यरूपो यस्समरः, समरे सामान्यत्वं च एतन्महापाशुपतास्त्रातिरिक्तास्त्रसाध्यत्वं, अत्र आदिपदात् रणातिरिक्तशत्रुहननादेः परिग्रहः, तत्र न प्रयोक्तव्यमित्यर्थः ॥ १५ ॥

अन्यन्नास्ति प्रतीघातमेतस्य भुवनत्रये।
तस्मात्प्राणात्यये राम ! प्रयोक्तव्यमुपस्थिते॥ १६॥

अन्यदैतत्प्रयुक्तं च जगत्संक्षयकृद्भवेत्।

भुवनत्रये एतस्य महापाशुपतास्त्रस्य प्रतीघातमुपशमनसाधनं अन्यत्किमपि नास्तीत्यर्थः। तस्मादित्यादि—हे राम यस्मात्सामान्यसमरादिके न प्रयोक्तव्यं तस्मात्प्राणात्यये प्राणात्यययोग्यसमये उपस्थिते सति एतदस्त्रं प्रयोक्तव्यं। ननु तादृश समय एव प्रयोक्तव्यं नान्यदेत्यत्र किं नियामकमित्यत आह—अन्यदैतदित्यादि। अन्यदा तादृशसमयातिरिक्त समये प्रयुक्तमेतन्महापाशुपतास्त्रं जगत्संक्षयकृद्भवेत्, चो हेतौ—यतः संक्षयकृद्भवेत् अतो न प्रयोक्तव्यमित्यर्थः। अत्र जगत एव तस्य दाह्यत्वात् सामान्यसमरादिके न प्रयोक्तव्यं तस्योपशमनसाधनाभावात्, जगदुपदाह्यं दग्ध्वा दग्धेन्धनानलवत् स्वयमेव शाम्यति। नन्वेवं प्राणात्ययेपि तस्य

प्रयोगो न स्यात् तस्य जगत्संक्षयकर्तृत्वादिति चेन्मैवं, प्राणात्यये प्रयोक्तव्य-मिति भगवन्नियोगात् आत्मानं सततं गोपायेदिति विधिबलाच्च तस्मिन् समये प्रयोगे जगन्नदहति, अपितु लक्ष्यमात्रं दहतीति भावः॥ १६॥

अथाहूय सुरश्रेष्ठान्लोकपालान्महेश्वरः।
उवाच परमप्रीतः स्वस्वमस्त्रं प्रयच्छथ॥ १७॥

अथ अस्त्रदान पूर्वक तत्प्रयोगसमयकथनानन्तरं महेश्वरः सुर-श्रेष्ठान् नारायणादिदेवान् लोकपालानिन्द्रादींश्चाहूय परमप्रीतस्सन् स्वस्वमस्त्रं प्रयच्छथ, सुस्था भविष्यथेत्यंतमुवाच—स्वं स्वं स्वकीयं स्वकीयं॥ १७॥

राघवोयं च तैरस्त्री रावणं निहनिष्यति॥ १८॥

अत्र चकारो हेत्वर्थे—तथा चायं राघवः तैर्नारायणैन्द्रास्त्रादिभिः—अस्त्री अस्त्रवान् सन् यतो रावणं निहनिष्यति, तैरस्त्रीतितु धान्येन धनवा-नित्यादिवद् द्रष्टव्यं॥ १८॥

तस्मै देवैरवध्यत्वमिति दत्तो वरो मया।
तस्माद्वानरतामेत्य भवन्तो युद्धदुर्मदाः॥ १९॥
साहाय्यमस्य कुर्वंतु तेन सुस्था भविष्यथ।

तस्मै रावणाय देवैरवध्यत्वं वरो मया दत्त इति हेतोः। अत्रस्थित-वंत इत्याध्याहार्यं। तथा च वानरतां वानरशरीरं प्राप्य स्थितवंतो भवंतः तेन शरीरेण युद्धदुर्मदाः संतः अस्य रामस्य साहाय्यं कुर्वंतु, तस्मात्कारणात् यूयं सुस्था भविष्यथेत्यर्थः। अत्रस्थितवन्त इत्यध्याहारेण वानरतामेत्य साहाय्यं कुर्वंत्वित्यस्य "किष्किधानगरे राम वानरा बहवो जाता" इत्यग्रेतनेन सह विरोधः परिहृतः॥ १९॥

तदाज्ञां शिरसाऽऽगृह्य सर्वे प्रांजलयस्तथा।
प्रणम्य चरणं शंभोः स्वस्वमस्त्रं ददुर्मुदा॥ २०॥

तदाज्ञां परमेश्वरस्याज्ञां तथा तेन प्रकारेण सुराः प्रांजलयस्संतः शिरसा आगृह्य सम्यग्गृहीत्वा शंभोः चरणौ प्रणम्य स्वं स्वं स्वकीयं स्वकीयं अस्त्रं मुदा रावणवधो भविष्यतीति हर्षेण ददुरित्यर्थः ॥ २० ॥

अत्र स्वं स्वं अस्त्रं देवा ददुरित्युक्तं, केनकिमस्त्रं दत्तमित्यपेक्षायामाह—

नारायणास्त्रं दैत्यारिरैन्द्रमस्त्रं पुरंदरः ॥ २१ ॥
ब्रह्मापि ब्रह्मदण्डास्त्रमाग्नेयास्त्रं धनंजयः ।
याम्यं यमोपि मोहास्त्रं रक्षोराजस्तथा ददौ ॥ २२ ॥
वरुणो वारुणं प्रादाद्वायव्यास्त्रं प्रभंजनः ।
कौबेरं च कुबेरोपि रौद्रमीशान एव च ॥ २३ ॥
सौरमस्त्रं ददौ सूरः सौम्यं सोमश्च पावकम् ।
विश्वेदेवा ददुस्तस्मै वसवो वासवाभिधम् ॥ २४ ॥

दैत्यारिर्नारायणो नारायणास्त्रं ददौ । पुरंदर ऐन्द्रमस्त्रं वज्रं । धनंजयः अग्निः । रक्षोराजोनिऋतिः । प्रभंजनो वायुः । विश्वेदेवाः पावकं पावकाख्यमस्त्रं वसवो वासवाभिधं वासवमित्यभिधा यस्य तादृशमस्त्रं ददुरित्यन्वयः ॥ २४ ॥

अथ तुष्टः प्रणम्येशं रामो दशरथात्मजः ।
प्रांजलिः प्रयतो भूत्वा भक्तिनम्रो व्यजिज्ञपत् ॥ २५ ॥

अथ परमेश्वरे विलीन सकलास्त्रस्य रामस्य पुनः देवेभ्यः सकलास्त्रप्राप्त्यनंतरं प्रयतो रामस्तुष्टस्सन् ईशं प्रणम्य भक्तियुक्तः सन् प्रांजलिर्भूत्वा व्यजिज्ञपत् विज्ञापयामास ॥ २५ ॥

विज्ञापनाविषयमेवाह—

भगवन्मानुषेणैव नोल्लंघ्यो लवणबुधिः ।
तत्र लंकाभिधं दुर्गं दुर्जयं देवदानवैः ॥ २६ ॥

हे भगवन् मानुषेण लवणांबुधिर्नोल्लंघ्य एव, किं च तत्रांबुधौ लंकाभिधं दुर्गं देवदानवैरपि दुर्जयं ॥ २६ ॥

अनेक कोटयस्तत्र राक्षसा बलवत्तराः।
सर्वे स्वाध्यायनिरताः शिवभक्ता जितेन्द्रियाः ॥ २७ ॥

अनेककर्मसंयुक्ता बुद्धिमंतोग्निहोत्रिणः।
कथमेकाकिना जेया मया भ्रात्रा च संयुगे ॥ २८ ॥

तत्र लंकायामनेककोटिसंख्याताः बलवत्तरा अतिबलवंतः राक्षसाः, न केवलं शरीरबलवंतः अपि तु तप आदिनिरता इत्याह सर्वे इत्यादिना। स्वाध्यायनिरताः वेदाध्ययनादिरताः, शिवे परमात्मनि भक्तिर्येषां ते शिवभक्ताः जितेन्द्रियाः संतः अनेककर्मसु यज्ञादिषु संयुक्ताः निरताः। अग्निहोत्रिण इत्यत्र नित्ययोगे इन्प्रत्ययः। तथा च नित्याग्निहोत्र-शालिन इत्यर्थः। कथमित्यादि-तादृशराक्षसा एकाकिना मया भ्रात्रा च संयुगे युद्धे कथं जेयाः ते कथं जेतुं शक्या इत्यर्थः। राक्षसवधे वानर साहाय्यमकिंचित्करमित्यभिप्रेत्य रामेणैकाकिनेत्युक्तमिति ध्येयं ॥ २८ ॥

अत्रानेककर्मनिरता अनेककोटचस्तादृशा राक्षसाः एकाकिना मया कथं जेया इत्यादि रामप्रश्नस्योत्तरमाह श्रीमहादेवः।

श्रीमहादेव उवाच—

रावणस्य वधे राम! रक्षसामपि मारणे।
विचारो न त्वया कार्यस्तस्य कालोयमागतः ॥ २९ ॥

हे राम रावणस्य वधे रक्षसामपि मारणे त्वया विचारो न कार्यः ते धर्मनिरता इत्यादि विचारो न कर्तव्य इत्यर्थः। विचारो न कर्तव्य इत्यत्र हेतुमाह—तस्येति तस्य राक्षसवधस्यायं समय आगतः ॥ २९ ॥

अत्र तादृशसमय इत्यत्र युक्तिमाह—

अधर्मेतु प्रवृत्तास्ते देवब्राह्मणपीडने।
तस्मादायुः क्षयं याति तेषां श्रीरपि सुव्रत! ॥ ३० ॥

यतस्ते राक्षसाः अधर्मे देवब्राह्मणपीडने च प्रवृत्ताः तस्मात्तेषां रक्षसां आयुः श्रीरपि क्षयं याति, तस्मात्समय आगत इत्यर्थः। तथा च महाभारते उद्यमपर्वणि विदुर प्रजागरे "अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः। ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणश्चविरुध्यते। ब्राह्मणस्वानिचादत्ते ब्राह्मणांश्चजिघांसति। रमते निंदया चैषां प्रशंसां नाभिनंदति। नैतान् स्मरति कृत्येषु याचितश्चाभ्यसूयती"ति॥ ३०॥

अत्र परस्त्रीहरणादिनापि तस्य समय आगत इत्याह—

**राजस्त्रीलंघनासक्तं रावणं निहनिष्यसि।**
**पानासक्तो रिपुर्जेतुं सुकरस्संगरांगणे॥ ३१॥**

राजस्त्री सीता। तस्याः लंघनं हरणं। तथा च महाभारते तत्रैव 'हरणंच परस्त्रीणां परदाराभिमर्शनं। शुश्रूषोश्च परित्यागः त्रयो दोषाः क्षयावहाः' इति। पानेत्यादि। संगरांकणे युद्धस्थळे पानासक्तो रिपुः जेतुं सुकरः। अत्र पानासक्त इत्यनेन कृत्याकृत्यविवेकराहित्यं सूचितमिति ध्येयं। अतो जेतुं सुकर इति भावः। पापासक्त इति पाठे हेतुगर्भविशेषणं बोध्यं॥ ३१॥

तादृश शत्रुवधे प्रहर्तुर्भारो नास्तीत्याह—

**अधर्मनिरतः शत्रुर्भाग्येनैव हि लभ्यते।**
**अधीतवेदशास्त्रोपि सदा धर्मरतोपि वा॥ ३२॥**

**विनाशकाले संप्राप्ते धर्ममार्गाच्च्युतो भवेत्।**

तथा च प्रयासं विना प्रहरत्पुण्येनैव लभ्यत इति भावः। ननु अनेक वेदशास्त्राद्यभिज्ञस्य धर्मानुष्ठानपरस्य रावणस्येदानीं अधर्मनिरतत्वं कुत इत्यपेक्षायामाह—अधीतवेदेत्यादि—अधीतवेदशास्त्रोपि सदा धर्मरतोपिवेत्यत्र अपि-शब्दः वा-शब्दश्चानास्थायां। तथा च विनाशकाले स्वस्वप्रारब्धादिकर्मफलभोगावसानसमये संप्राप्ते आगते सति धर्ममार्गाच्च्युतो भवेत् धर्मजनककर्मणश्च्युतो भवेदित्यर्थः॥ ३२॥

धर्ममार्गच्युतिप्रकारमेवाह—

पीड्यंते देवतास्सर्वाः सततं येन पापिना।
ब्राह्मणा ऋषयश्चैव तस्य नाशः स्वयं स्थितः॥ ३३॥

किष्किंधानगरे राम! देवानामंशसंभवाः।
वानरा बहवो जाता दुर्जया बलवत्तराः॥ ३४॥

साहाय्यं ते करिष्यंति तैर्बंधान पयोनिधिम्॥ ३५॥

येन पापिना देवतास्सर्वाः ब्राह्मणा ऋषयश्च पीड्यंते तस्य पापिनो नाशः स्वयं स्थितः। नाशः स्वयमेवायाति तथा च तत्प्रहर्तुरधिकप्रयासो नास्तीति भावः। अत्र एकाकिनेत्यनेन वानरसहायमकिंचित्करमिति सूचितमर्थं निराकरोति—किष्किंधेत्यादिना—किष्किंधानगरे किष्किंधाख्य-नगरे देवानां सूर्यादीनामंशसंभवाः अंशेसंभवाः जाताः बहवः असंख्याता-वानराः दुर्जयाः बलवत्तरा अपि जाताः ते साहाय्यं करिष्यंति। तैस्सहाय-भूतैः वानरैः पयोनिधिं बधान बंधनं कुर्वित्यर्थः॥ ३५॥

अनेकशैलसंबद्धे सेतौ यांतु वलीमुखाः।
रावणं सगणं हत्वा तामानय निजां प्रियाम्॥ ३६॥

शस्त्रैर्युद्धे जयो यत्र तत्रास्त्राणि न योजयेत्।
अस्त्राणि मुंचन्दिव्यानि स्वयमेव विनश्यति॥ ३७॥

अनेकैः शैलैः संबद्धे सम्यक् बद्धे निर्मिते सेतौ वलीमुखाः वानराः यांतु। तथा च सेतौ निर्मिते सति तेन वर्त्मना लंकां गच्छंत्विति भावः। सगणं ससैन्यं रावणं हत्वा तां निजां प्रियामानय॥ ३६॥

शस्त्रसाध्ये युद्धे यत्र जयो भवति तत्र महास्त्राणि न प्रयोजयेत्, योजने च विपरीतं फलमित्याह—शस्त्रैरित्यादि॥ ३७॥

अत्र राक्षसवधे रामस्य प्रयासाभावे हेत्वंतरमप्याह—

अथवा किं बहूक्तेन मयैवोत्पादितं जगत्।
मयैव पाल्यते नित्यं मया संह्रियतेपि च॥ ३८॥

बहूक्तेन, भावेक्तः, तथा च बहूक्त्या बहुशब्दप्रयोगेन किं प्रयोजनमित्यर्थः। प्रयासाभावे हेतुं विवृणोति मया संह्रियत इति, न केवलं संह्रियते अपि तूत्पाद्यते पाल्यते च। जगदिति सर्वत्र संबध्यते। तथा च सृष्टिस्थितिप्रळयकर्तृत्वं ममैवेत्यर्थः ॥ ३८ ॥

ननु मृत्युनैव सर्वं संह्रियते तव किमित्यत आह—

**अहमेव जगन्मृत्युर्मृत्योरपि महीपते।**
**ग्रसेहमेव सकलं जगदेतच्चराचरम् ॥ ३९ ॥**

तथा च यतः अहमेकः अद्वितीयः, अतः जगतः मृत्युः मृत्योरपि मृत्युः, मदतिरिक्तः कश्चनातिशयिता नास्तीत्यर्थः, तदेवाह—ग्रसेऽहमेवेत्यादिना ॥ ३९ ॥

उपसंहरति—

**मम वक्त्रगतास्सर्वे राक्षसा युद्धदुर्मदाः।**
**निमित्तमात्रं त्वं भूयाः कीर्तिमाप्स्यसि संगरे ॥ ४० ॥**

इति श्रीपद्मपुराणे शिवगीतासूपनिषस्सु
दिव्यास्त्रप्राप्तिर्नाम पंचमोऽध्यायः

युद्धदुर्मदा अपि राक्षसाः मम वक्त्रगताः मम वक्त्रोपविष्टाः हतप्राया इत्यर्थः। एवं चेन्मया किमर्थं योद्धव्यमित्यत आह। निमित्तमात्रमित्यादि। त्वं रणे निमित्तमात्रं भूयाः, कीर्तिमाप्स्यसि जयलक्ष्मीमप्स्यसीत्यर्थः ॥ ४० ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
दिव्यास्त्रप्राप्तिर्नाम पंचमोध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## षष्ठोऽध्यायः

अत्र जगत्कर्तृत्वं तव यदुक्तं तन्नसंभवति, मूर्तिमत्तया परिच्छिन्नत्वात्, परिच्छिन्नकुलालादेः जगत्कर्तृत्वाभावादित्याक्षिपति रामः—

श्रीराम उवाच—

भगवन्नत्रमेचित्रं महदेतत्प्रजायते।
शुद्धस्फटिक-संकाशः त्रिणेत्रश्चन्द्रशेखरः॥ १॥

मूर्तस्त्वं तु परिच्छिन्नाकृतिः पुरुषरूपधृक्।
अंबया सहितोऽत्रैव रमसे प्रमथैः सह॥ २॥

त्वं कथं पंचभूतादि जगदेतच्चराचरम्।
तद् ब्रूहि गिरिजाकांत! मयि तेऽनुग्रहो यदि॥ ३॥

हे भगवन् त्वं मूर्तः मूर्तत्वे हेतुमाह परिच्छिन्नाकृतिरिति। आकृतिमेवाह शुद्धस्फटिकेत्यादिना। परिच्छिन्नत्वमेवाह पुरुषरूपधृगिति। यतः अंबया प्रमथैश्च सह त्वं अत्रैव रमसे, अतः पंचभूतादि चराचरं जगत् कथं प्रजायते, मे मम एतन्महच्चित्रं आश्चर्यं, हे गिरिजाकांत तत् तस्मात् एतद् ब्रूहि ते तव मयि यद्यनुग्रह इति॥ ३॥

अत्र मूर्तत्वेन कुलालदृष्टांतेन जगत्कर्तृत्वं यदुक्तं तन्न संभवति तत्रासन्निधानस्योपाधित्वात्, मम तु सर्वत्र सान्निध्यमित्यभिप्रेत्य अतकर्यैश्वर्यत्वात् जगत्कर्तृत्वं दुर्ज्ञेयमिति गूढाभिसंधिः श्रीमहादेव उवाच—

श्री भगवानुवाच—

शृणु राम! महाभाग! दुर्ज्ञेयममरैरपि।
तत्प्रवक्ष्यामि ते भक्त्या ब्रह्मचर्येण सुव्रत॥ ४॥

हे राम सुव्रत अमरैरपि दुर्ज्ञेयं ते तव भक्त्या ब्रह्मचर्येण तत्प्रवक्ष्यामि त्वया यत्पृष्टं तत्प्रवक्ष्यामीत्यर्थः ॥ ४ ॥

मद्वचनं परमप्रयोजनकमपीत्याह—

पारं यास्यस्यनायासाद्येन संसार-नीरधेः ।
दृश्यंते पंचभूतानि ये च लोकाश्चतुर्दश ॥ ५ ॥
समुद्राः पर्वता देवा राक्षसा ऋषयस्तथा ।
दृश्यंते यानि चान्यानि स्थावराणि चराणि च ॥ ६ ॥
गंधर्वाप्सरसो नागाः सर्वे ते मद्विभूतयः ।

येन मद्वचनेन संसारनीरधेः संसारसमुद्रस्य पारमंतमनायासाद्यास्यसि। सर्वत्र सन्निधानमेवाह दृश्यंत इत्यादिना—यानि चेत्यग्रेतन, यानीति पदं पंचभूतानीत्यत्रापि संबध्यते। तथा च यानि पंचभूतानि ये च चतुर्दश लोकाः ते च भूर्लोक भुवर्लोक स्वर्लोक महर्लोक जनोलोक तपोलोक सत्यलोका इत्युपरि सप्त। अतळ वितळ सुतळ तळातळ रसातळ महातळ पाताळानीत्यधः सप्त लोकाः। समुद्राः लवणेक्षुसुरासर्पिर्दधिदुग्धजलांतका इति। पर्वताः—महेंद्रो मलयः सह्यः शक्तिमान् ऋक्षपर्वतः। विंध्यश्च पारियात्रश्च सप्तात्रकुलपर्वता—इत्यादयः। देवाः इन्द्रादयः, तथा राक्षसाः, ऋषयः नारदादयश्च, यानिस्थावराणि चराणि अन्यान्युच्चावचानि च तथा गंधर्वाश्चित्ररथादयः। प्रमथाः प्रमथगणाः नागाः अनंतादयः यानि च दृश्यंते ये च दृश्यंते तानि ते च सर्वे मद्विभूतयः। एतत्सर्वं मत्स्वरूपमित्यर्थः। मदतिरिक्तं किमपि नास्तीति भावः ॥ ६ ॥

अत्रातर्क्यैश्वर्यस्य मम विभूतिर्देवैरपि दुर्ज्ञेयेति प्रदर्शयितुमितिहासमाह—

पुरा ब्रह्मादयो देवाः द्रष्टुकामा ममाकृतिम् ।
मंदरं प्रययुस्सर्वे मम प्रियतरं गिरिं ॥ ७ ॥

पुरा पूर्वकाले ब्रह्मादयः ब्रह्मा आदिर्येषांते ब्रह्मादयो देवाः इन्द्रप्रभृतयः ममाकृतिं शुद्धस्फटिकसंकाशनेत्रत्रयादिरूपां द्रष्टुकामाः दर्शने-

च्छावंतः संतः मम प्रियतरं मंदरं गिरिं मंदराख्यं पर्वतं प्रययुः प्राप्तवंतः। अत्र प्रियतरमित्यनेन नियमतः तत्र ईश्वरस्याधिष्ठानं सूचितमिति ध्येयं ॥ ७ ॥

स्तुत्वा प्रांजलयो देवाः मां तथा पुरतः स्थिताः ॥ ८ ॥

प्रांजलयस्संतः मां तथा स्तुत्वा मम प्रीतिजनकैः श्रुतिवाक्यैः स्तुतिं कृत्वेत्यर्थः, पुरतः स्थिताः मदग्रतः स्थिताः, अथवा प्रांजलयस्संतः स्तुत्वा तथैव प्रांजलय एव स्थिताः ॥ ८ ॥

तान्दृष्ट्वाथ मया देवान् लीलाकुलित-चेतसः।
तेषामपहृतं ज्ञानं ब्रह्मादीनां दिवौकसाम् ॥ ९ ॥

अथ तेषां मत्पुरतः स्थितेरनन्तरं लीलाकुलितचेतसः लीलया-मल्लीलया मत्क्रीडयेति यावत्, आकुलितानि उत्कंठितानि चेतांसि येषां तान्, लीलाकुलितचेतसेति पाठे लीलया मन्मायया आकुलितानि उत्कंठितानि देवानां चेतांसि यस्मात्तेन मया तान्देवान् दृष्ट्वा तेषां ब्रह्मादीनां देवानां ज्ञानं परमेश्वरस्यायं लीलाविग्रह इति एतादृशं ज्ञान-मपहृतं ॥ ९ ॥

आसंस्तेऽसकृदज्ञाना मामाहुः को भवानिति।
अथाब्रवमहं देवानहमेव पुरातनः ॥ १० ॥

ते देवाः अज्ञानाः अपहृत ज्ञानाः आसन्, को भवानिति असकृन्मामाहुः, सकृदज्ञानादिति पाठे ते देवाः अज्ञानात् अज्ञानं प्राप्य ल्यब्लोपे पंचमी, प्रासादात्प्रेक्षत इत्यादिवत्, को भवानिति असकृन्मामाहुरिति योजना, अथ तेऽपहृतज्ञाना इति पाठः स्पष्टार्थकः, अथेत्यादि-अथ-को भवानिति देवानां प्रश्नानंतरं अहं स्वयंप्रकाशचिदानंदात्मस्वरूपः देवानब्रुवं उक्तवान् उक्ति-प्रकारमेवाह—अहमेवेत्यादिना—अहमेव पुरातनः चिरंतनः आधुनिक सर्प-धाराबलीवर्दमूत्रित्वाद्यभिन्नतया चिरंतना रज्जुरिव। तथा च कारणत्वेन स्थिते मयि सर्वोपि दृश्यमानः प्रपंचः जातः कल्पित इति भावः ॥ १० ॥

सकल-प्रपंच-कारणत्वे उपोद्घलकमाह—

आसं प्रथममेवाहं वर्तामि च सुरेश्वराः!।
भविष्यामि च लोकेस्मिन्मत्तो नान्योस्ति कश्चन ॥ ११ ॥

प्रथमं जगतः उत्पत्तेः प्राक् अहमासं सर्वजगदात्मनास्थितवान्, तर्हि यथा क्षीरं पूर्वमासीत् न चेदानीं न च भविष्यति तद्वत्किं त्वमपीत्याशंक्य नेत्याह—वर्तामि च भविष्यामि चेति, हे सुरेश्वराः वर्तामि च वर्ते, अत्र एकश्चकारः उपाधिरूपकालस्यातीतत्वमाह, अपरश्चकारः अखंड-कालात्मकत्वमाह—कालः कलयतामहमिति स्मृतेः। तथा च कारणत्वेन यत्पुरातनमुक्तं तद्विवर्ततया न तु परिणामित्वेनेति क्षीरादिवैलक्षण्यं बोध्यं। ननु यथा त्वं स्थितः तथा अन्योपि त्वादृशः अन्यादृशोवा कश्चन स्यात् इत्यत आह—लोकेस्मिन्नित्यादि—अस्मिन्लोके जगति मत्तोन्यः कश्चन नास्ति, मत्त इत्यत्र पंचम्याः प्रतियोगित्वमर्थः नास्तीत्यत्र, वर्तमानत्व-मविवक्षितं तथा च अहमेव सार्वकालिक इत्यर्थः ॥ ११ ॥

व्यतिरिक्तं च मत्तोस्ति नान्यत्किंचित्सुरेश्वराः!।
नित्योऽनित्योहमनघो ब्रह्मणां ब्रह्मणस्पतिः ॥ १२ ॥

हे सुरेश्वराः मत्तः व्यतिरिक्तमन्यत् किंचिन्नास्ति, तथा च मद्व्यतिरिक्ते कस्मिंश्चित् पारमार्थिकसत्वं नास्तीति भावः, एवं च नार्थपौनरुक्त्यं, अहं नित्यः कालत्रयाबाध्यः, अनित्यः प्रपंचरूपः, सर्वं खल्विदं ब्रह्मेति श्रुतेः। अनघो दुरितरहितः सदानंदरूपत्वात्, अघं दुरितदुःखयो-रिति विश्वः, ब्रह्मणां वेदानां ब्रह्मणः हिरण्यगर्भस्य पतिः कर्ता अहमित्यर्थः, ब्रह्माहं ब्रह्मणस्पतिरिरिति पाठे ब्रह्म बृहत् देशकालवस्तुपरिच्छेदशून्यः अहमित्यर्थः ॥ १२ ॥

अत्र पूर्वं स्वस्य संक्षेपेण सर्वात्मकत्वमुक्तं, इदानीं विशिष्य तत्प्रदर्शयति—

दक्षिणाश्च उदंचोहं प्रांचः प्रत्यंच एव च।
अधश्चोर्ध्वं च विदिशो दिशश्चाहं सुरेश्वराः! ॥ १३ ॥

हे सुरेश्वराः अहं दक्षिणांचः दक्षिणं अंचंति प्रकाशंते दक्षिणत्व प्रकारक प्रकाशकर्तारः, दक्षिणत्वं च दिग्देशसाधारणं, ज्ञानकर्तृत्वं च ज्ञानजनकत्वं, तच्च विषयविषयि भावेन आश्रयितयावेन्यदेतत्, एवं उदंच इत्यादावपि बोध्यं, अधस्त्वप्रकारक ज्ञानजनकः अधः, ऊर्ध्वं ऊर्ध्वत्वप्रकारक ज्ञानजनकः अहं, जनकत्वं च पूर्ववत्, अहं विदिशः दिशोर्मध्ये विदिक् स्त्रियां विशिष्योक्ता। सामान्यत आह—दिशश्चेति—सर्वादिगहमेवेत्यर्थः ॥ १३ ॥

सावित्री चापि गायत्री स्त्री पुमानपुमानपि।
त्रिष्टुप् जगत्यनुष्टुप्च पंक्तिच्छन्दस्त्रयीमयः ॥ १४ ॥

अहं गायत्री गायंतं जपकर्तारं त्रायत इति गायत्री, चतुर्शित्यक्षरातु औपाधिकगायत्रीच्छन्दस्त्वेन पूर्वाह्णे गायत्रीत्युच्यते, सैवमध्याह्ने सावित्री-त्युच्यते, चकारोनुक्तसमुच्चयार्थः, तेनसायाह्ने सरस्वतीत्युच्यते, अपुमान् नपुंसक इत्यर्थः, अहं रुद्रः स्पष्टमन्यत्। त्रिष्टुबित्यादि त्रिष्टुप् चतुः-चत्वारिंशदक्षरं छंदः, जगती अष्टचत्वारिंशदक्षरं छंदः, अनुष्टुप् द्वात्रिं-शदक्षरं छंदः, पङ्क्तिः चत्वारिंशदक्षरं छंदः, चकारात् छंदोंतरमपि गृह्यते छंद इति तुसर्वत्र संबध्यते। त्रयीमय इति तथा च सर्वाणि छंदांसि वेदोपि अहमेवेत्यर्थः ॥ १४ ॥

सत्त्योऽहं सर्वतः शांतः त्रेताग्निर् गौरवं गुरुः।
गौर्यहं गह्वरं चाहं द्यौरहं जगतां विभुः ॥ १५ ॥

सत्त्यः सत् पृथिव्यप्तेजांसि त्यत्वाय्वाकाशौ, सच्चत्यच्च सत्त्यं भूत-पंचकं, तत्स्वरूपोहमित्यर्थः सर्वतः शांतः सर्वस्मात्प्रपंचाच्छांतः निष्प्रपंच इत्यर्थः। सर्वग इति पाठे तु सर्वं गच्छति प्राप्नोतीति सर्वगः सर्वसंबद्ध इत्यर्थः। त्रेताग्निरग्नित्रयरूपोहं गौरवं सन्मानादि उत्कर्षादिकमित्यर्थः, तदप्यहमित्यर्थः। गौरहमिति पाठे गौर्वाक्। स्वर्गेषु पशुवाग्वज्रेत्या-द्यमरः। शब्दप्रपंचः सोप्यहमेवेत्यर्थः गुरुरुपदेष्टा सोप्यहं गौर्यहमित्यादि—दुर्गा साप्यहमित्यर्थः गह्वरं गुहा, द्यौः अंतरिक्षं जगतां विभुः प्रभुः स्वामी सोप्यहमित्यर्थः ॥ १५ ॥

ज्येष्ठः सर्वसुरश्रेष्ठो वर्षिष्ठोहमपांपतिः।
आर्योऽहं भगवानीशस्तेजोहं चादिरप्यहम् ॥ १६ ॥

ज्येष्ठः सर्वोत्कृष्टः सर्वसुरश्रेष्ठः सर्वेषां सुराणां श्रेष्ठः श्रेयान् वर्षिष्ठः अतिवृद्धः अपांपतिः समुद्रः। आर्यः पूज्यः अहं भगवानिति व्याख्यातं, ईशः अप्रतिहतेच्छः अहं तेजः प्रभावः "तेजः प्रभावे दीप्तौ चेत्यमरः अहमादि-र्जगदादि रहंविधिरिति पाठे विधिर्विधानं विधिर्विधाने, दैवेचे"त्यमरः॥ अहं वेदिरिति पाठे वेदिः परिष्कृता भूमिः साप्यहं ॥ १६ ॥

अत्र (१४ श्लोके) त्रयीमय इत्यनेन वेदत्वेन विभूतिमुक्त्वा विशिष्य तामाह—

ऋग्वेदोहं यजुर्वेदः सामवेदोहमात्मभूः।
आथर्वणश्च मंत्रोहं तथैवांगिरसो वरः॥ १७ ॥

आत्मभूः आत्मनो भवतीत्यात्मभूः मकरध्वजः, सोप्यहं आथर्वणः अथर्वऋषेः मंत्रः तथा अंगीरसो वरः श्रेष्ठो मंत्रः अत्र षष्ठ्यर्थश्च तद्वृत्ति-दृष्टिविषयत्वं ॥ १७ ॥

इतिहासः पुराणानि कल्पोऽहं कल्पवानहम्।
नाराशंसी च गाथा च विद्योपनिषदोस्म्यहम् ॥ १८ ॥

इतिहासः पुरातनीयधर्मकथा पुराणानि प्रसिद्धानि अहं कल्पः वेदांगकल्पसूत्रं कल्पवान् तद्विषयकज्ञानवानहं रुद्रः। नाराशंसीत्यादि। नाराशंसी इदं जना उपश्रुतनराशंसस्तविष्यते। षष्टिं सहस्रा नवतिं चकार मआरुशमेषु दद्महे इत्यादि ऋक्संहिताष्टमाष्टकाष्टमाध्याय-शेष-भूत-कुंतापे द्रष्टव्या। गाथा इन्द्रगाथादिः "यदिन्द्रो दाशराज्ञे मानुषं व्यगाहथा" गाथा, विद्या तत्वज्ञानं, तत्स्थान-शास्त्राण्यपि उपनिषदो-प्यहम् ॥ १८ ॥

श्लोकाः सूत्राणि चैवाह मनुव्याख्यानमेव च।
व्याख्यानानि परा विद्या इष्टं हुतमथाहुतिः॥ १९ ॥

श्लोकाः छंदोनिबद्धपद्यानि, सूत्राणि बादरायणादिकृतानि, व्याख्यानानि तदर्थप्रतिपादकानि वाक्यानि अनुव्याख्यानं व्याख्यानव्याख्यानं, परा उत्कृष्टा विद्या पंचाक्षरी विद्या अहं रुद्रः। इष्टं यागः हुतं होमः आहुतिः होमद्रव्यं अथवाहुतं सायंप्रातरादिकालेषु यथा शास्त्रमग्नौ प्रक्षिप्तं दधिपय-आदिहविः, आहुतिरितिपदच्छेदः प्रक्षिप्तव्यतिरिक्त होमद्रव्यं तदप्यहम् ॥ १९ ॥

दत्तोऽदत्त मयं लोकः परलोकोहमक्षरः।
क्षरः सर्वाणि भूतानि दांतिः शांतिरहं खगः॥ २० ॥

दत्तः दीयमानान्नोदक भूसुवर्णादिः अदत्तं तद्विपरीतं तदहं रुद्रः, अयं लोकः परिदृश्यमानो लोकः परलोकः आमुष्मिकलोकः अहं। अहं-लोक इति पाठे परलोकपदसमभिव्याहारात् अयं लोक इत्यर्थः अक्षरः मातृकारूपोहं क्षरः अनित्यः सोप्यहं सर्वाणि भूतान्यहं। दान्तिः दमः बहिरिन्द्रियनिग्रहः। शांतिः शमः अन्तरिन्द्रियनिग्रहः अहं खगः खेगच्छतीति खगः सूर्यादिः, खंक्षेत्रं तत्गच्छतीति जानातीतिखगः क्षेत्रज्ञोवा, खगः सूर्ये ग्रहे देवे मार्गणे च विहंगमे खमिन्द्रिये सुखे स्वर्गे शून्ये बिन्दौ विहायसि। पुरे संवेदने क्षेत्र इत्युभयत्रापिविश्वः॥ २० ॥

गुह्योहं सर्ववेदेषु अरण्योहं अजोप्यहम्।
पुष्करं च पवित्रंच मध्यं चाहं ततः परः॥ २१ ॥

सर्ववेदेषु सर्वेषु वेदेषु गुह्यः गुप्तः रहस्य भूतोर्थः अहं अरण्यः अरण्य-रूपोहं अत्रलिंगव्यत्ययः आर्षः, अरण्यः अरणिप्रभवोग्निर्वा-दिगादित्वाद्यत्। अजोप्यहमिति "अजः शंभौ विष्णु......रघोः सुत" इति नानार्थ रत्नमालायां पुष्करं तीर्थविशेषरूपं रलयोरैक्यात् पुष्कलमधिकमहं पवित्रं पापनिर्गमन-कारणं अहं मध्यं चेत्यादि चकारादादिरपि तथा चादिरप्यहं, मध्यमोप्यहं, अन्तोप्यहं॥ २१ ॥

बहिश्चाहं तथा चान्तः पुरस्तादहमव्ययः।
ज्योतिश्चाहं तमश्चाहं तन्मात्राणींद्रियाण्यहम्॥ २२ ॥

बहिःसांशानां बहिः चकारात् अन्तरपिगृह्यते पुरस्तात् पुरोवर्ति यद्दृश्यते तदप्यहमित्यर्थः। अव्यय इति पूर्वोक्तसांशधर्मवत्वेपि अहमव्ययः व्ययरहितः ज्योतिः सुप्रकाशं तेजः, तमः अज्ञानमहं तन्मात्राणीति शब्दस्पर्शतन्मात्रादीनि इन्द्रियाणि चक्षुरादीनि अहं ॥ २२ ॥

बुद्धिश्चाहमहंकारो विषयाण्यहमेव हि।
ब्रह्मा विष्णुर्महेशोहं उमा स्कंदो विनायकः ॥ २३ ॥

अत्र चकारोनुक्तसमुच्चयार्थकः तेन मनश्चित्तं चेति द्वयं लभ्यते, तेन मनोबुद्धिरहंकारः चित्तं चेति चतुर्विधमन्तःकरणं अहमेवेत्यर्थः, विषयाण्यहमेवेति विषयाणि विषयाः इन्द्रियविषयाः लिंगव्यत्ययः आर्षः अथवा बुद्धिः ज्ञानं विषयाणि ज्ञानविषयाः ब्रह्मेत्यादि ईशानपर्यंतं (श्लोक २४) स्पष्टं ॥ २३ ॥

इन्द्रोग्निश्च यमश्चाहं निर्ऋतिर्वरुणोऽनिलः।
कुबेरोहं तथेशानो भूर्भुवस्स्वर्महर्जनः ॥ २४ ॥
तपः सत्यं च पृथिवी चापस्तेजोनिलोस्म्यहम्।
आकाशोहं रविः सोमो नक्षत्राणि ग्रहाण्यहम् ॥ २५ ॥

भूर्भुवस्स्वरित्यादि सत्यं चेत्यनेन प्रसिद्धाः सप्तलोकाः बोध्याः, पूर्वं लोकाः चतुर्दशत्वेनोक्ताः इदानीं सप्तलोकाः विशिष्य उच्यंत इति न पौनरुक्त्यं। यद्यपि पूर्वं सत्योहमित्यत्र सत्त्यत् इत्यनेन पंचभूतान्युक्तानि तथापि पृथिवीपदादिना अत्र विशिष्योक्तत्वात् न पौनरुक्त्यं। रविरित्यादि पूर्वं खगत्वेनोक्तं इदानीं रवित्वादिनोच्यत इति न पौनरुक्त्यं एवमग्रेपि सामान्यविशेषभावेन न पौनरुक्त्यमिति द्रष्टव्यं ग्रहाणि नवग्रहाः अत्र लिंगव्यत्ययः आर्षः ॥ २५ ॥

प्राणः कालस्तथा मृत्युः अमृतं भूतमप्यहं।
भव्यं भविष्यत्कृत्यं च विश्वं सर्वात्मकोप्यहं ॥ २६ ॥

प्राणः पंचोपाधिविशिष्टः अन्तश्चारी वायुः, अहं कालः जगदाधारस्समयोहं मृत्युर्मर्त्यानां अमृतं देवानां अहं अथवा मृत्युः प्राणहरः अमृतं

जीवनभूतं अतीतं यत्कृत्यं कार्यं तदहं भव्यं भवनयोग्यं वर्तमानमित्यर्थः भविष्यत् उत्पत्स्यमानं यत्कार्यं तदहं कृत्स्नमिति पाठे कृत्स्नमिति भूत-मित्यादिषु त्रिषु संबध्यते विश्वं स्थावरजंगमात्मकं जगदहं सर्वात्मकः सर्वेषामात्मभूतः ।। २६ ।।

ओमादौ च तथा मध्ये भूर्भुवस्स्वस्तथैव च।
अतोऽहं विश्वरूपोस्मि शीर्षं च जनदों तथा ।। २७ ।।

ओमिति वर्णस्वरूपग्रहणं तच्चादौ तथा मध्ये भूर्भुवस्स्वरिति-अक्षरस्वरूपग्रहणं भूर्भुवस्स्वरित्यनन्तरं शीर्षं शिरोमंत्रः स्वाहेत्येवं रूपः जनदोमिति जनं जनिमद्वस्तुजातं तद्ददातीति जनदः तस्य संबुद्धिः जनद न तु जनेभ्यो ददातीति जनद इति, आतोनुपसर्गेक इति कर्मण्युपपद एव कप्रत्ययविधानात्, ओमिति प्रणवस्वरूपग्रहणं तथा च ओं भूर्भुवस्स्वस्स्वाहा जनदोमिति मंत्रस्संपद्यते तादृशमंत्रोप्यहं इत्यर्थः। तथैव तेनरूपेण मंत्रात्मकत्वेनवाहं विश्वरूपोस्मीति। अथवा तथाचेत्यत्र चकारः मध्ये इत्यत्रसंबध्यते सचानुक्तसमुच्चयार्थकः, तेन अन्त इत्यपि लभ्यते अन्त इति तु तात्पर्यवशात् शीर्षं जनदोमित्यत्रान्वेति तथा च यथा आदौ ओमिति वर्णस्वरूपं तथा भूर्भुवस्स्वरिति वर्णस्वरूपं मध्ये तथैवेति, यथा मध्ये भूर्भुवस्स्वरिति वर्णस्वरूपं तथैवान्ते स्वाहाजनदोमिति वर्णस्वरूप-मित्यर्थः। ततः तस्मात् एतादृशमन्त्रात्मकत्वात् अहं विश्वरूपः विश्वात्मकोस्मीति भावः। जपतामिति पाठे श्रेष्ठ इति पदमध्याहार्यं। सदा जपतां मध्ये यः श्रेष्ठः सोप्यहमित्यर्थः शीर्षं चेति चकारेण भूर्भुवस्स्व-स्स्वाहा जनदोमिति अंशः समुच्चीयते अथवा भूर्भुवस्स्वस्स्वाहेति शीर्षांतो मंत्रः ।। २७ ।।

अशितं पायितं चाहं कृतं चाकृतमप्यहम्।
परं चैवापरं चाहमहं सर्वपरायणः ।। २८ ।।

अशितं अशनकर्म पायितं पानकर्म उभयत्र कर्मणि क्तः पायित-मित्यत्रणिजर्थो न विवक्षितः पाचितमिति पाठे अत्रापि णिजर्थो न विवक्षितः पचनकर्मेत्यर्थः तथा च भुक्तं पीतं पक्वं सर्वं अहमेवेत्यर्थः। कृतं कृति-

विषयीभूतं यत्कर्म तदप्यहं अकृतं कृत्यविषयीभूतं यत्कर्म तदप्यहं सर्वत्रातीतत्वं न विवक्षितं, परं उत्कृष्टं अपरमपकृष्टं तदप्यहं। सर्वपरायण इति सर्वे ये परे उत्कृष्टाः तेषामयनं प्राप्तिर्यत्र सः। अथवा सर्वेषां परमुत्कृष्टमयनं प्राप्तिर्यत्र सः अहं ॥ २८ ॥

अहं जगद्धितं दिव्यं अक्षरं सूक्ष्ममव्ययम्।
प्राजापत्यं पवित्रं च सौम्यमग्राह्यमग्रियम् ॥ २९ ॥

जगते हितं जगद्धितं दिव्यं दिवि भवं उत्कृष्टवस्तुजातं अक्षरं विनाशशून्यं व्याप्तिमच्च सूक्ष्मं अणुरूपं दुरवगममित्यर्थः, अव्ययं न विद्यते व्ययो यस्य तत् अव्ययं तदप्यहं, प्राजापत्यं प्रजापतिना हिरण्यगर्भेणावगतं तत्प्राजापत्यं तदप्यहमित्यर्थः पवित्रं पुण्यजनकं यत् तदप्यहं सौम्यं प्रियदर्शनं सौरमिति पाठे सूर-संबंधितेजआदि तदप्यहं रुद्रः, अथवा, पूयते अनेनेति पवित्रं तत्प्राजापत्यं प्रजापतिदेवताकं सौरं सूरदेवताकं सोम्यं सोमदेवताकमित्यर्थः अग्राह्यं ग्रहणायोग्यं अग्रिमं श्रेष्ठं तदप्यहमित्यर्थः अग्रियमिति पाठेपि श्रेष्ठमित्यर्थः ॥ २९ ॥

अहमेवोपसंहर्ता महाग्रासौजसांनिधिः।
हृदयं देवतात्वेन प्राणत्वेन प्रतिष्ठितः ॥ ३० ॥

उपसंहर्ता उपसंहारकर्ता अहं महाग्रासौजसांनिधिरिति महान् सर्वप्रपंचरूपःग्रासः येषां तानि ओजांसि तेजांसि तेषां निधिः आश्रयः, ओजो बले च दीप्तौ चेत्यमरः महान् ग्रासो यस्य सः महाग्रासः सचासौ ओजसां निधिश्च महाग्रासौजसां निधिः, अत्र षठ्या अलुक्, महाग्रासो जगन्निधिरिति पाठस्तु सुगमः, हृदीत्यादि हृदयकमले देवतात्वेन यः प्रतिष्ठितः स्थितः सोहं तत्रैव हृदि प्राणत्वेन प्राणोपाधिकर्तृत्वभोक्तृत्वादिना प्रतिष्ठितः व्यवस्थितः सोप्यहं रुद्रः यः हृदयमिति हृदयमन्तःकरणं तदहं, शेषं पूर्ववत् ॥ ३० ॥

शिरश्चोत्तरतो यस्य पादौ दक्षिणतस्तथा।
यस्य सर्वान्तरस्साक्षादोंकारोहं त्रिमात्रकः ॥ ३१ ॥

अहं त्रिमात्रकः ओंकारः साक्षादोंकारत्वेन तिस्रोमात्राः अकारोकारमकाराः यस्य सः यस्य ओंकाराभिन्नस्य मम उत्तरतः उत्तरस्मिन्निवृत्तिमार्गे शिरः उत्तमांगं मोक्षरूपमित्यर्थः, यस्य दक्षिणतः दक्षिणभागे प्रवृत्तिमार्ग इत्यर्थः, पादौ संसारसंक्रमणकारणमज्ञानं सर्वांतरः सर्वेषां निवृत्तिमार्गिणां प्रवृत्तिमार्गिणां अंतर्वर्ती सन् निवृत्तिमार्गे प्रवृत्तिमार्गे च तत्तत्कर्मानुरोधेन सर्वं प्रेरयामीत्यर्थः, यश्च सर्वोत्तर इति पाठस्तु सुगमः ।। ३१ ।।

अत्र केन कारणेन शब्देनार्थेनोभयेनवा तत्रापिरूढचा योगेन वृत्यंतरेणवा ओंकारात्मकत्वमित्याकांक्षायां निर्वक्ति—

ऊर्ध्वमुन्नामये यस्मादधश्चापनयाम्यहम् ।
तस्मादोंकारमेवाहं एको नित्यः सनातनः ।। ३२ ।।

ओमित्यत्र अ उ गुणे सति ओकारः अनंतरं मकारः तथा यौगिकव्युत्पत्या शब्दत एव ओंकारात्मकत्वमिति तथा च अ, अधः प्रवृत्तिमार्गं अंतर्यामितया उ, ऊर्ध्वं निवृत्तिमार्गं यस्मादुन्नामये तस्मादोंकार एवाहमिति अत एव सर्वांतर इत्यत्रापि तथैव व्याख्यातमिति । तथा च श्रुतिः एष ह्येवा साधु कर्म कारयति तं यमेभ्यो लोकेभ्यः अधो निनीषते एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत इति, एकः सजातीयद्वितीयरहितः मत्समः कोऽपि नास्तीत्यर्थः, नित्यो नाशरहितः सनातनः सकलकालवर्ती यतः एतादृशोऽहं अतो मत्समो नास्तीत्यर्थः ।। ३२ ।।

ऋचो यजूंषि सामानि यो ब्रह्मा यज्ञकर्मणि ।
प्रणामये ब्राह्मणेभ्यस्तेनाहं प्रणवो मतः ।। ३३ ।।

तेनाहमित्यत्र अहं पदं य इत्यत्रापि संबध्यते तथा च योऽहं यज्ञकर्मणि ज्योतिष्टोमादियज्ञकर्मणि ब्रह्मा सन् ब्राह्मणेभ्य होतृप्रभृतिभ्यः ऋचो यजूंषिं सामानि प्रणामये प्रकर्षेण नामये प्रापये, धातूनामनेकार्थत्वात्, तेन हेतुना अहं प्रणवो मतः, प्राणमय इति पाठेतु यो ब्रह्मा यज्ञकर्मणि ऋचो यजूंषि सामानि ब्राह्मणेभ्यः होतृप्रभृतिभ्यः प्राणामयेत् प्रापयेत्, सोऽहं तेन प्रणवो मतः ।। ३३ ।।

स्नेहो यथा मांसखंडं व्याप्नोति व्यापयत्यपि ।
सर्वलोकानाहं तद्वत्सर्वव्यापी ततोस्म्यहं ।। ३४ ।।

स्नेहः चिक्कणं द्रव्यं यथा मांसखंडं व्याप्नोति रसधातुवृद्ध्यादिना तमेव मांसखंडं व्यापयति व्यापकं करोति तद्वदहमपि सर्वलोकान्व्याप्नोमि अभिवृद्ध्यादिना व्यापयामि चेति ततः कारणात् सर्वव्याप्यहमस्मि मांस-पिंडमिति पाठेपि स एवार्थः ।। ३४ ।।

ब्रह्मा हरिश्च भगवान् आद्यंतं नोपलब्धवान् ।
ततोऽन्ये च सुरा यस्मादनंतोहमतो मतः ।। ३५ ।।

ब्रह्माहरिश्च भगवान् आद्यंतं आदिश्च अंतश्च आद्यंतौ आद्यंतमित्यत्र वचनव्यत्ययः आर्षः न तु समाहारः नवा सहितपदाध्याहारेण मध्यम-पदलोपिसमासः तथा सति विशिष्टोपलब्ध्यभावे प्राप्तेपि एकैकस्यो-पलब्धिरपि संभवति, तथा च पुराणादिविरोधः । तस्मादितरेतरयोग एवाश्रयणीयः । तत्र चषालं ये अश्वयूपाय तक्षतीत्यादिवत् वचनव्यत्ययः आर्षः, अत्र ब्रह्मा उपरि भागं न दृष्टवान् भगवान् हरिरादिमधोभागं न दृष्टवानित्यर्थः पुराणानुसारेण द्रष्टव्यः, कैमुतिकन्यायेनाह ततो अन्ये चेति यस्मात्तावाद्यंतौ नोपलब्धवंतौ ततः कारणात् अन्येपि सुराः आद्यंतौ नोपलब्धवंतः, अतः कारणात् अहमनंतो मतः, अनंतः अवधिरहित इत्यर्थः ।। ३५ ।।

गर्भजन्मजरामृत्युसंसार-भयसागरात् ।
तारयामि यतो भक्तं तस्मात्तारोऽहमीरितः ।। ३६ ।।

गर्भो जननीजठरनिवासः जन्म योनियंत्रान्निर्गमनं जरा वली पलिता-दिकरी मृत्युर्मरणं गर्भजन्मजरामृत्युरूपो यः संसारः स एव भयसागरः तस्माद्यतो भक्तं तारयामि तस्मात्कारणादहं तार ईरितः उक्त इत्यर्थः ।। ३६ ।।

चतुर्विधेषु देहेषु जीवत्वेन वसाम्यहम् ।
सूक्ष्मो भूत्वा थहृद्देशे तस्मात्सूक्ष्मः प्रकीर्तितः ।। ३७ ।।

चतुर्विधेषु अंडजस्वेदजोद्भिज्जजरायुजेष्वेति चतुर्विधेषु देहेषु हृद्देशे हृदवच्छिन्नदेशे सूक्ष्मः दुर्ज्ञेयो भूत्वा जीवत्वेन वसामि यद्यस्मात्ततस्तस्मात् सूक्ष्मः प्रकीर्तितः अहं रुद्रः ॥ ३७ ॥

महातमसि मग्नेभ्यो भक्तेभ्यो यत्प्रकाशये।
विद्युद्वदतुलं रूपं तस्माद्वैद्युतमस्म्यहम् ॥ ३८ ॥

महातमसि अज्ञाने अन्धकारेवा मग्नेभ्यः भक्तेभ्यः तानुद्दिश्य यद्यस्माद्विद्युद्वदतुलं अनुपमं लीलाविग्रहरूपं प्रकाशये तस्माद्वैद्युतमस्मि ॥ ३८ ॥

एक एव यतो लोकान्विसृजामि सृजामि च।
विवासयामि गृह्णामि तस्मादेकोहमीरितः ॥ ३९ ॥

यद्यस्माल्लोकान् सृजामि उत्पादयामि विवासयामि विशेषेणवासं कारयामि पालयामीत्यर्थः विसृजामि उपसंहारामि गृह्णामि अनुगृह्णामि मोक्षादिफलं प्रापयामि तस्मादेकोहमीश्वरः ॥ ३९ ॥

नद्वितीयो यतस्तस्थे तुरीयं ब्रह्म यत्स्वयं।
भूतान्यात्मनि संहृत्य चैको रुद्रो वसाम्यहं ॥ ४० ॥

यतो यस्मात्स्वयं तुरीयं ब्रह्म विष्णुशिवेभ्यः परं ब्रह्म द्वितीयस्सन्नतस्थे नतिष्ठामि भूतान्यात्मनि संहृत्यैकस्सन्वसामि अतो रुद्रः एकः ॥ ४० ॥

सर्वान्लोकान्यदीशेऽह मीशानीभिश्च शक्तिभिः।
ईशानमस्य जगतः स्वर्दृशं चक्षुरीश्वरं ॥ ४१ ॥

ईशानमिन्द्रतस्थुषः सर्वेषामपि सर्वदा।
ईशानस्सर्वविद्यानां यदीशानस्तदस्म्यहं ॥ ४२ ॥

यद्यस्मात्सर्वान्लोकान् ईशानीभिः नियामिकाभिः शक्तिभिरविद्याविलासैः अहमीशे नियमये अतोहे इन्द्रेति मां संबोध्य अस्य जगतो जगन्मयस्य तस्थुषः स्थावरस्येशानं नियामकं मामाहुः। एवं ईशानं मां सर्वेषां ईश्वरं चाहुः स्वर्दृशं स्वर्निरतिशयसुखं तदेव दृग्दर्शनं तत्स्वरूपं

निरतिशयस्वप्रकाशानंदात्मकं मामाहुः सर्वावभासकमाहुः, तथा च श्रुतिः 'तस्य भासा सर्वमिदं विभाति' इति सर्वदेति यथायोग्यं संबध्यते ईशान इत्यादि—सर्वविद्यानां सर्वासां विद्यानां यद्यस्मादहमीशान आदि-वक्ता तत्तस्मादपि ईशानोस्मि ॥ ४२ ॥

सर्वान् भावान्निरीक्षेह मात्मज्ञानं निरीक्षये।
योगं च समये यस्माद्भगवान्महतो मतः ॥ ४३ ॥

यद्यस्मात्सर्वान्भावान् निखिलान्पदार्थान्निरीक्षे साक्षात्करोमीत्यर्थः समये तत्वसाक्षात्कार-प्रयोजक-शमदमादि-रूप-समवधानसमये योगं तत्व-साक्षात्कारप्रयोजकी-भूत-श्रवणमननाद्युपायं। योगस्सन्नहनोपायध्यान-संगतियुक्तिष्वित्यमरः। आत्मज्ञानमपरोक्षं आत्मतत्वज्ञानं च निरीक्षये कारयामि, अतोऽहं भगवानिति महतो मतः संमतः। अथवा महतः पुण्यशालिनः पुरुषान् योगमात्मज्ञानं च निरीक्षये कारयामि। तथा च सर्व विषयक साक्षात्कारवत्व तत्वसाक्षात्कार तदुपायप्रयोजका-नुपममाहात्म्यवत्वेन भगवानिति। 'भगः श्री काम माहात्म्य वीर्ययत्नार्क-कीर्तिष्वि'त्यमरः। योगं च गमय इति पाठे जीवब्रह्म तादात्म्य संबंधं गमये प्रापयामि, तथा चात्मज्ञानं मोक्षं च प्रापयामीत्यर्थः ॥ शेषं पूर्ववत् ॥ ४३ ॥

अजस्त्रं यच्च गृह्णामि विसृजामि सृजामि च।
सर्वान्लोकान्स्वमायाभिस्स्वेनाहं वै महेश्वरः ॥ ४४ ॥

यद्यस्मात्स्वमायाभिः स्वकीयमायाभिः सर्वान्लोकान्सृजामि उत्पादयामि गृह्णामि संगृह्णामि प्रतिपालयामीति यावत् विसृजामि उप-संहरामि अजस्त्रमिति तु त्रिषुस्थलेषु प्रवाहरूपेण बोध्यं तेन कारणेनाहं महेश्वरः वै प्रसिद्धं ॥ ४४ ॥

महत्स्वात्मज्ञानयोगैरैश्वर्यैस्तु महीयते।
सर्वान्भावान्परित्यज्य महादेवश्च सोस्म्यहं ॥ ४५ ॥

सर्वान्भावान् सर्वान्कामान् परित्यज्य महत्स्वात्मज्ञानयोगैः महतां योगिनां यानि स्वात्मज्ञानानि स्वस्मिन् ब्रह्माहमस्मीति ज्ञानानि तान्येव-

योगाः तैरैश्वर्यैः तत्स्वरूपैश्वर्यैः यः महीयते पूजामधिगच्छति सोहमतो महादेवः महांश्चासौ देवश्चेति महादेव इति, सर्वान् भावान् महादेवः सृजत्यवति सोहमस्मीति पाठे सर्वान् भावान् निखिलान् पदार्थान् यः सृजति ब्रह्मा अवति विष्णुः सोप्यहमेवेत्यतो महादेवः तथा च स्वात्मज्ञानयोगैश्वर्यं पूजितत्वं सृष्ट्यादिकर्तृत्वं च महत्वमिति ॥ ४५ ॥

एषोस्मि देवः प्रदिशोनु सर्वाः पूर्वोहि जातोस्म्यहमेव गर्भे।
अहं हि जातश्च जनिष्यमाणः प्रत्यग्जना स्तिष्ठति विश्वतोमुखः
॥ ४६ ॥

एषः अहंकारादि द्रष्टा देवः स्वयं प्रकाशरूपः अहमस्मि प्रदिशोन्वित्यत्र प्रशब्दार्थः अविवक्षितः सर्वादिशोहमित्यर्थः। अथवा प्रदिशोन्वित्यत्र प्रशब्दः तिष्ठतिना संबध्यते तथा च सर्वादिशः अहं पूर्वोहीत्यादि पूर्वः प्रथमोहं जातउत्पन्नः हि प्रसिद्धः अस्मि हिरण्यगर्भरूपेणेत्यर्थः। तथा च श्रुतिः—'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीदि'ति। गर्भे भूतपंचकस्या प्रधानस्य गर्भे वर्तमानो ब्रह्माण्डरूपः गर्भरूपोप्यहमेवेत्यर्थः। जातश्चेत्यत्र चकार अनुक्त समुच्चयार्थकः, तथा च तत्रैव- ब्रह्माण्डे जातः जायमानो जनिष्यमाणोप्यहमेवेत्यर्थः। जनः हे देवाः अत्र जना इति संबोधनेन पूर्वं देवान्प्रति यदुक्तं तदिदानीं रामं प्रति ईश्वरोनुवदतीति ध्येयं। सर्वतोमुखः। अत्र सर्वेन्द्रियविहीनोपि सर्वं सर्वस्य सर्वदा। जानामि यो न मामाद्य स्वमहं सर्वतोमुखमिति नारसिंह- मंत्रराजपदविवरणे आचार्यैरुक्तोर्थोद्रष्टव्यः? प्रत्यक् बुध्यादिभ्यः प्रति- प्रातिलोम्येन तद्वैलक्षण्येन सत्यानंदात्मकतया अंचति प्रकाशत इति प्रत्यक्, यः प्रतिष्ठति प्रकर्षेण तिष्ठति अत्र तात्पर्यवशात् प्रसमभिव्याहृत तिष्ठतेः स्थितिरूपोऽर्थः न तु गमनमिति ध्येयं, एतादृशो यः सोप्यहमेवेत्यर्थः ॥ ४६ ॥

विश्वतश्चक्षु रुतविश्वतो मुखो विश्वतो बाहु
रुतविश्वतस्पात्, संबाहुभ्यां धमति संपतत्रै
र्द्यावा भूमी जनयन्देव एकः ॥ ४७ ॥

द्यावाभूमीति द्यावेत्यनेनोर्ध्वं सप्तलोकाः भूमीत्यनेनाधस्सप्तलोका लक्ष्यंते। जनयन् उत्पादयन् इदमुपलक्षणं, पालयन् संहरन् चेत्यपि-

द्रष्टव्यं। एकः सजातीयद्वितीयरहितः। दीव्यतीति देवः तथा च सृष्ट्यादिकं कुर्वन्नेको देवः क्रीडतीत्यर्थः, उक्त सृष्ट्यादि कर्तृत्वमसर्वज्ञस्य न संभवतीत्यर्थः, विश्वेत्यादि सार्वज्ञ्यमाह—विश्वतश्चक्षुः चक्षुषा ज्ञानोपलक्षणात् विश्वविषयक ज्ञानवानित्यर्थः, उत अपि विश्वतोमुखः सर्वतोमुखः व्याख्यातार्थमेतत्। अथवा विश्वतोमुखः मुखेनवागुपलक्षणात् सर्ववक्तेत्यर्थः। विश्वतोबाहुः बाहुना सहकारित्वोपलक्षणात् विश्वस्मिन्प्रपंचे बाहुः सहकारी तथाचाविद्यासहकारेण विश्वजनक इत्यर्थः। विश्वतस्पात् अनेन व्यापकत्वोपलक्षणात् विश्वव्यापक इत्यर्थः, षष्ठ्याः पतिपुत्रेत्यादिना छंदसि विसर्जनीयस्य सत्वं। संबाहुभ्यां धमतीति, अत्र समित्युपसर्गो-धमतीत्यनेन संबध्यते, छंदसिव्यवहिताश्चेति सूत्रादुपसर्गस्य तेप्राग्धातोरिरिति नियमाभावात्, तथा च बाहुभ्यां सहकारिरूपधर्माधर्माभ्यां पतत्रैः पतनशीलैः भूतैरिति यावत्, संधमति संयोजयति तथाच प्राणिनां धर्माधर्मानुसारेण भूतानि संयोजयति अतः सृष्ट्यादिकं जनयन् एकः क्रीडतीत्यर्थः ॥ ४७ ॥

वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं हिरण्यं।
मामात्मस्थं येनुपश्यंति धीरास्वेषां शांतिः शाश्वती नेतरेषां ॥ ४८ ॥

वालाग्रमात्रं केशाग्रभागपरिमाणं हृदयस्य हृत्पुंडरीकस्य मध्ये अंतः विश्वं विश्वरूपं देवं स्वयंप्रकाशं जातवेदं जातावेदायस्मात्सः जातवेदस्तं वरेण्यं वरणीयं मामात्मस्थमंतःकरणे वर्तमानं येऽधिकारिणः अनुपश्यंति शास्त्रगुरूपदेशमनुसाक्षात्कुर्वंति धीराः ब्रह्मचर्यादि साधनसंपत्या धैर्ययुक्ताः तेषामात्मस्थात्मावलोकिनां शान्तिरविद्योपरतिः शाश्वती-पुनरुत्थानशून्या आत्मज्ञानमन्तरेणास्याः प्राप्तौ नोपायान्तरमित्याह नेतरेषामिति आत्मज्ञानशून्यानां न ॥ ४८ ॥

अहं योनिं योनिमधितिष्ठामि चैकोमयेदं पूर्णं पंचविधं च सर्वं।
मामीशानं पुरुषं देवमित्थं निचाय्येमां शांतिमत्यंतमेति ॥ ४९ ॥

अहमेकस्सन् योनिं सर्वमुत्पत्तिस्थानं अधितिष्ठामि सर्वाधिष्ठानतया तिष्ठामीत्यर्थः। इदं विविध प्रत्ययगम्यं पंचविधं भूतज्ञानेन्द्रियकर्मेन्द्रियादि

रूपेण पंचप्रकारं चकारादेकप्रकारक मायारूपमपि इदं सर्वं मयाधिष्ठान-रूपेण पूर्णं व्याप्तं मां सर्वाधिष्ठातारं ईशानं नियंतारं पुरुषं परिपूर्णं देवं स्वप्रकाशं इत्थमनेन प्रकारेण निचाय्यनिचित्य इमां शांतिमत्यंतं अंतरहितं यथास्यात् तथा एति प्राप्नोति ईड्यं विचार्यमाणमिति पाठे ईड्यं स्तुत्यं विचार्यमाणं विचारविषयत्वं ज्ञात्वेति शेषः शेषं पूर्ववत् ॥ ४९ ॥

नन्वयमात्मा एतादृशः कस्मात्सर्वैर्न ज्ञायत इत्याशंक्य तृष्णापाश-छेदाभावादित्यभिप्रायेण तृष्णापाशछेदकं योगं दर्शयितुं पीठिकामा-रचयति—

प्राणेष्वन्तर्मनसो लिंगमाहुर्यस्मिन्नशना याच तृष्णा क्षमाच।
तृष्णां छित्वा हेतुजालस्य मूलं बुद्ध्या चित्तं स्थापयित्वा मयीह ॥ ५० ॥

एवं येमां ध्यायमाना भजंते तेषां शांतिः शाश्वतीनेतरेषां ॥

प्राणेषु प्राणशब्दवाच्येषु इन्द्रियादिषु अन्तर्मध्ये मनसः अन्तःकरणस्य लिंगं लिंगशरीरमाहुः अन्तःकरणस्य प्राधान्यात् षष्ठ्याः अभेदार्थकत्वात् तद्घटितमेव लिंगमित्याहुरित्यर्थः, यस्मिन्लिंगशरीरे अशना अशनं याचतृष्णा इदं मेस्यादित्यभिलाषा, याचेत्यत्र चकारेण लोभादयो गृह्यंते क्षमाजंतुष्वपकारिषु क्रोधानुत्पत्तिः चकारात्तितिक्षादिकमपि गृह्यते, बुध्या अन्तःकरणस्य निश्चयात्मकवृत्या मयि परब्रह्मणि चित्तं अन्तःकरणं स्थापयित्वा एकाग्रतया स्थापयित्वा हेतुजालस्य दुःखकारणसमूहस्य मूलं कारणं तृष्णां उक्तां सर्वानर्थकारिणीं छित्वोन्मूल्येत्यर्थः, एवमनेन रूपेण ध्यायमानाः ध्यायंतः ये भजंते तेषां तादृशानां शाश्वती शान्तिः इतरेषां तदभावे न भवतीत्यर्थः ॥ ५० ॥

यतो वाचो निवर्तंते अप्राप्य मनसा सह।
आनंदं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन ॥ ५१ ॥

यतः सर्वस्य जगतः कारणात् सत्यज्ञानानंदरूपाद् ब्रह्मणः वाचः वेदाः ऋग्यजुस्सामाथर्वरूपाः अन्याश्च निवर्तंते ब्रह्म वक्ष्याम इति संकल्प्य प्रवृत्ताः तस्मिन्ब्रह्मणि प्रवेशमलभमानाः नेति नेति वदन्त्यः भ्रष्टसंकल्पाः निवर्तंते, निवृत्तिस्तु प्राप्तावप्राप्तौ च संकल्पितस्य दृष्टा प्रकृतेतु अप्राप्य-

निवर्तंत इत्याह—अप्राप्येति अप्राप्यालब्ध्वा आनन्दमित्यन्वयः। ननु वागगम्यानामपि जाती चंपककेतकी कुसुमादि गन्धभेदानां मनसावगतिर्यथा तथास्त्वित्यत आह—मनसा परिपक्वेन मनसा सह समं, तथा च वाङ्-मनसयोरतीतं मां आनंदरूपं ब्रह्म ज्ञात्वा कुतश्चन कुतश्चिन्नबिभेति न भयं प्राप्नोति भयहेतोरभावादित्यर्थः ॥ ५१ ॥

श्रुत्वेति देवा मद्वाक्यं कैवल्यज्ञानमुत्तमं।
जपंतो मम नामानि मम ध्यानपरायणाः ॥ ५२ ॥

सर्वे ते स्वस्वदेहांते मत्सायुज्यं गताः पुरा ॥ ५३ ॥

इत्युक्तप्रकारेण देवाः कैवल्यज्ञानं केवलं स्वरूपं तस्य ज्ञानं यस्मात्तादृशं मद्वाक्यं श्रुत्वा मम नामानि जपंतः मम ध्यानपरायणाः मम ध्यानैकनिरताः संतः स्वस्वदेहान्ते मत्सायुज्यं पुरा पूर्वकल्पे गताः प्राप्तवंतः ॥ ५३ ॥

ततो ये परिदृश्यंते पदार्थामद्विभूतयः।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितं ॥ ५४ ॥

मयि सर्वं लयं याति तद् ब्रह्मास्म्यहमव्ययं ॥

ततस्तदनंतरं ये परिदृश्यंते पदार्थाः मद्विभूतयः ममांशाः उपसंहरन्नाह मय्येवेत्यादिना—यस्मान्मयि सकलं जातं मयि सकलं प्रतिष्ठितं प्रकर्षेण-स्थितं मयि सर्वं लयं याति तत् तस्मात् सर्वजगज्जन्मस्थिति लयकारणत्वात् ब्रह्म बृहत् देशकालवस्तु-परिच्छेदशून्यं अव्यवं नाशरहितं अस्मि भवामि ॥ ५४ ॥

अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विशुद्धः।
पुरातनोहं पुरुषोहमीशो हिरण्मयोहं शिवरूपमस्मि ॥ ५५ ॥

अणोरणीयान् अतिशयेन सूक्ष्मः तद्वन्महतो महीयान् महतोऽपि महान् व्यापकादपि व्यापकोऽहं तथाचौपाधिक परिच्छेदवानपि स्वरूपतः अपरिच्छिन्नोहं, अतएव विश्वं आविद्यक भौतिक प्रपंचजातं अहं विशुद्धः मायारहितः, तव विश्वाभिन्नत्वे आधुनिकत्वं स्यादित्यत आह पुरातनः चिरंतनः अधिष्ठानरूपतया सर्वकालीन इत्यर्थः, पुरुषः वस्तुतः परिपूर्णः

अहमीशः अविद्यावच्छिन्नत्वेन नियंता हिरण्मयः हिरण्मयवपुः आदित्यस्थः सर्वं कार्यकारणात्मा शिवरूपं मंगळस्वरूपं ब्रह्मास्मि ॥ ५५ ॥

इदानीं तत्तत्कारणहीनस्यापि तत्तत्कार्यमाह—

अपाणिपादोहमचिंत्यशक्तिः पश्याम्यचक्षु स्सश्रृणोम्यकर्णः।
अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम वित्सदाहं ॥ ५६ ॥

अपाणिपादः न विद्यते पाणिपादं यस्य सः अपाणिपादः, अचिन्त्य शक्तिः दुर्बोधशक्तिः एतादृशोपि जवनो ग्रहीतेत्यचिंत्यशक्तिरित्यर्थः। कारणहीनत्वमाह अचक्षुः चक्षुर्हीनः पश्यामि अकर्णः कर्णरहितः श्रृणोमि तथा च तत्तद्विषयग्राहकेन्द्रियरहितोप्यहं तत्तद्विषयद्रष्टा। ननु कारणहीनस्य कथं द्रष्टृत्वं इत्यत आह—विविक्तरूपः विविक्तमनावृतं रूपं यस्य सः अहं जानामि विविधं प्रपंचजातमवगच्छामि। तथा चावृतस्य जीवस्य दर्शने वृत्तेरपेक्षा तत्र चक्षुराद्यपेक्षा-ममतु स्वरूपेणैव सर्वं द्रष्टृत्वमिति न चक्षु-राद्यपेक्षेति भावः, अहं सर्वदा वित् वेदनं वित् ज्ञानं तत्स्वरूपः मम चित्स्वरूपस्य वेत्ता अन्यो नास्ति तस्यावरणवत्वादित्यर्थः तथा चाहं सर्वं जानामि मद्विषयक ज्ञानवान्कोपि नास्तीति भावः ॥ ५६ ॥

ननु चित्स्वरूपस्यात्यंतावेद्यत्वे अळीकत्वमेवस्यादित्यत आह—

वेदैरनेकैरहमेव वेद्यो वेदांतकृद्वेदविदेवचाहं।
न पुण्यपापे मयि नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरस्ति ॥ ५७ ॥

न भूमिरापो न च वह्निरस्ति न चानिलोमेस्ति नमेनभश्च ॥ ५८ ॥

वेदैः ऋगादिभिः अनेकैर्बहुभिः अहमेव वेद्यः अहमेव सकल वेदान्तानां मुख्यतात्पर्य विषय इत्यर्थः, तथा च वेदजन्यवृत्तिविषयत्वात् नात्यं तावेद्यत्व-मिति न विरोधः वेदांतकृत् वेदांत-सूत्रकृत् वेदव्यासरूपः वेदविदिति वेदांतकृतोपि विशेषणं वेदानां सांगानां वेत्ता वेदवित्, च शब्दात् अनेक तपःसपन्नः इदमपि तस्यैव विशेषणं, एतादृशगुणविशिष्टः स एव नान्य इत्येवकारार्थः, सोप्यहमित्यर्थः मयि पुण्यपापे न, अतो नाशो नास्ति जन्म-

देहेन्द्रियबुद्धिरपि नास्ति जन्मदेहेन्द्रियबुद्धिः जन्मदेहेन्द्रिय सहिता बुद्धिः नास्तीत्यर्थः ॥ ५७ ॥

ननु देहेन्द्रियाद्यभावे लीलाविग्रहत्वमनुपपन्नमित्यत आह नेत्यादि— तथा च लीलाविग्रहस्तु मायिकः न तु भौतिक इत्यर्थः ॥ ५८ ॥

एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयं ।
समस्त साक्षि सदसद्विहीनं प्रयाति शुद्धिं परमात्मरूपं ॥ ५९ ॥

एवमुक्तप्रकारेण मां परमात्मरूपं गुहाशयं हृत्कमलावासं निष्कलं निरवयवं अद्वितीयं व्याख्यातमेतत् विदित्वा साक्षात्कृत्य तथा समस्त-साक्षि समस्तसाक्षिणं सर्वद्रष्टारं सदसद्विहीनं कार्यकारणाभ्यां विहीनं भावाभाव विहीनं वा परमात्मरूपं मां विदित्वा शुद्धिं मोक्षं प्रयाति प्राप्नोतीत्यर्थः ॥ ५९ ॥

उक्तमर्थमपसंहरन्नाह—

एवं मां तत्वतो वेत्ति यस्तु राम महामते ।
स एव नान्यो लोकेषु कैवल्यपदमश्नुते ॥ ६० ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु विभूतियोगो
नाम षष्ठोऽध्यायः

हे राम एवमुक्तप्रकारेण तत्वतस्स्वरूपतो मां यो वेत्ति, स एव कैवल्यफलमश्नुते कैवल्यरूपं फलं प्राप्नोतीत्यर्थः । स एवेत्यत्र एव कारः अयोगव्यवच्छेदार्थकः, अन्यः एतादृशज्ञानाभाववान् कैवल्यरूपं फलं नाश्नुत इत्यर्थः मद्विषयकज्ञानवान् लभत इत्यर्थः ॥ ६० ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
षष्ठोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## सप्तमोऽध्यायः

अत्र षष्ठाध्याये परिच्छिन्नस्य भगवत स्तव जगत्कर्तुत्वादि कथं संभवतीति रामप्रश्ने मम सर्वात्मकत्वेन सर्वत्र सान्निध्यस्य विद्यमानत्वात् जगत्कर्तुत्वादिकं न विरुद्धमिति गूढाभिसंधिना परमेश्वरेणोत्तरं दत्तं। तत्र रामः प्रश्नस्य स्पष्टमुत्तरमलभमानः पुनः पृच्छति—

श्रीराम उवाच—

भगवन्! यन्मयापृष्टं तत्तथैव स्थितं विभो!।
अत्रोत्तरं मया लब्धं त्वत्तो नैव महेश्वर!॥ १॥

परिच्छिन्नपरीमाणे देहे भगवतस्तव।
उत्पत्तिः पंचभूतानां स्थितिर्वा विलयः कथं?॥ २॥

हे भगवन्! भगवतस्तव परिच्छिन्नपरिमाणे देहे पंचभूतानामुत्पत्तिः स्थितिर्विलयः कथमिति यन्मयापृष्टं तत्तथैव स्थितं। तत्रान्यदेवोक्तं तत्र त्वत्तो मया स्पष्टमुत्तरं न लब्धमेवेति॥ २॥

एवं सर्वात्मकत्व निबंधनं यत् सर्वत्र सान्निध्यमुक्तं तदपि कथमिति पृच्छति—

स्वस्वाधिकार संबंधाः कथं नाम स्थिताः पुरा (सुराः)।
ते सर्वे त्वं कथं देव! भुवनानि चतुर्दश॥ ३॥

त्वत्तः श्रुत्वापि देवात्र संदेहो मे महानभूत्।
अप्रत्यायितचित्तस्य संशयं छेत्तुमर्हसि॥ ४॥

स्वस्वाधिकारसंबंधाः स्वस्वाधिकारव्यापृताः तत्र तत्र स्थिताः सुराः लोकपालादयः त्वं परिच्छिन्नाकृतिः, ते सर्वे भुवनानि चतुर्दश कथं भवसि॥ ३॥

एतत्सर्वं त्वत्तः श्रुत्वा सामान्यतः श्रुत्वापि हे देव! अत्र सामान्यत स्त्वदुक्तेऽर्थे मे मम महान् संदेहोऽभूत् अप्रत्यायितचित्तस्य न प्रत्यायितं निश्चयं प्राप्तं चित्तं यस्य तस्य मम हे विभो! त्वं तादृशं संशयं छेत्तु-मर्हसि त्वमेव समर्थोऽसीत्यर्थः ॥ ४ ॥

अत्र मम परिच्छिन्नलीलाविग्रहवत्वेऽपि अनिर्वचनीयानंतशक्ति-मत्वेन जगत्कर्तृत्वादिकं अविरुद्धमिति दृष्टान्तविधया प्रतिपादयति—

श्री भगवानुवाच—

वटबीजे सुसूक्ष्मेऽपि महावट तरुर्यथा।
सर्वदास्तेऽन्यथा वृक्षः कुत आयाति तद्वद ॥ ५ ॥
तद्वन्मम तनौ राम ! भूतानामागतिर्लयः।

सुसूक्ष्मेपि सूक्ष्मतरेपि वटबीजे महावटतरुर्यथा सर्वदाऽऽस्ते स्थूल-सूक्ष्माकारेण सर्वदातिष्ठति अन्यथा बीजे तरोरवस्थानाभावे तत्र बीजे वृक्षः कुत आयाति? कस्मादुत्पद्यत इत्यर्थः। तत्र असतः तत्र उत्पत्ते-रयोगादिति भावः, तथा च यथा संकुचितमायारूपे बीजे महावृक्षः उत्पद्यते उपलभ्यते च तद्वत् मम तनौ संकुचितमायारूपे मम लीला-विग्रहे राम भूतानां पंचभूतादीनां आगतिरुत्पत्तिः उपलंभश्च मायाया अनिर्वचनीयानंतशक्तिमत्वात् ॥ ५ ॥

अत्र पूर्वं मायारूपे लीलाविग्रहे प्रपंचस्योत्पत्तिं दृष्टान्तमुखेन प्रति-पाद्येदानीं तत्रैव प्रपंचस्य उत्पत्तिर्लयश्चेति द्वयं दृष्टांतांतरेण प्रति-पादयति—

महासैंधवपिंडोपि जले क्षिप्तो विलीयते।
न दृश्यते पुनः पाकात्तत आयाति पूर्ववत् ॥ ६ ॥

महासैंधवपिंडः जले क्षिप्तः सन् यथा विलीयते जलवदुपलभ्यत इत्यर्थः अत एव न दृश्यते पार्थक्येन नोपलभ्यते पाकात्पुनः पूर्ववत्ततः तत्र आयाति उत्पद्यत इत्यर्थः। तथा मायारूपे विग्रहे विलीयते उत्पद्यते पुनर्विलीयत इत्यर्थः ॥ ६ ॥

अत्र अतएव जगत्सर्वं जायते मय्येव सकलं विलीयते चेत्येतत् दृष्टांतांतरेण द्रढयति—

प्रातः प्रातर्यथाऽऽलोको जायते सूर्यमंडलात् ।
एवं मत्तो जगत्सर्वं जायतेऽस्ति विलीयते ॥ ७ ॥

मय्येव सकलं राम ! तद्वज्जानीहि सुव्रत ॥ ८ ॥

यथा प्रातः आलोकः सूर्यमंडलात् जायते, तत्रैव तिष्ठति तत्रैव विलीयत इति हे राम ! सुव्रत ! तद्वत् मत्तोपि सर्वं जायते मय्येव सर्वं दृश्यते मय्येव सर्वं विलीयते इति जानीहि, मत्तः मायासहकृतात्, मय्येव मायासहकृत एवेत्यर्थः ॥ ८ ॥

अत्र दिग्जडस्य दिग्विषयकाज्ञानकस्य यथा इयं प्राची इयमुदीचीति उच्यमानायामपि दिशि भ्रमो न निवर्तते तद्वन्मस दोषविशेषजन्यभ्रमः उच्यमानेप्यर्थे न निवर्तत इत्यभिप्रेत्य रामः पृच्छति—

श्रीराम उवाच—

कथितेपि महाभाग ! दिग्जडस्य यथा दिशि ।
निवर्तते तमो नैव तद्वन्मम करोमि किम् ? ॥ ९ ॥

अत्र साक्षात्कारिभ्रमे साक्षात्कारि विशेषदर्शनं विरोधीत्यभिप्रेत्य

श्री भगवानुवाच—

मयि सर्वं यथा राम ! जगदेतच्चराचरं ।
वर्तते तद्दर्शयामि न द्रष्टुं क्षमते भवान् ॥ १० ॥

साक्षात्कार विशेषदर्शनं संपादयन्नाह—दर्शयामीत्यादिना—दर्शयामि दर्शयिष्यामीत्यर्थः ॥ १० ॥

दिव्यं चक्षुः प्रदास्यामि तुभ्यं दशरथात्मज ! ।
तेन पश्य भयं त्यक्त्वा मत्तेजोमंडलं ध्रुवम् ॥ ११ ॥

दिव्यं मदीयविश्वरूपदर्शनयोग्यं चक्षुः, तेन चक्षुषा भयं त्यक्त्वा मत्तेजोमंडलं मत्तेजःसमूहं पश्य ॥ ११ ॥

ननु स्वकीयचक्षुरेव तद्दर्शनयोग्यं भवतु, किं दिव्यचक्षुषा, इत्यत आह—

न चर्मचक्षुषा द्रष्टुं शक्यते मामकं महः।
नरेणापि सुरेणापि तन्ममानुग्रहं विना ॥ १२ ॥

महः तेजः अन्यत्सुगमं ॥ १२ ॥

इत्युक्त्वा प्रददौ तस्मै दिव्यं चक्षुर्महेश्वरः।
अथादर्शयदेतस्मै वक्त्रं पाताळसन्निभम् ॥ १३ ॥

एवमुक्त्वा महेश्वरः तस्मै रामाय दिव्यं चक्षुः प्रददौ। अथ दिव्यचक्षुर्दानानंतरं पाताळसन्निभं वक्त्रं तस्मै रामायादर्शयत् ॥ १३ ॥

तत्कीदृशमित्याकांक्षायामाह—

विद्युत्कोटिप्रभं दीप्त मतिभीमं भयानकं।
तद् दृष्ट्वैव भयाद्रामो जानुभ्यामवनीं गतः ॥ १४ ॥
प्रणम्य दंडवद्भूमौ तुष्टाव च पुनः पुनः।

विद्युत्कोटिप्रभा यत्र तद्विद्युत्कोटिप्रभं, अतएव दीप्तं प्रकाशमानं अतिभीमं अत्युग्रं अतएव भयावहं भीतिजनकमित्यर्थः। तद् दृष्ट्वैव तादृशवक्त्रदर्शनादेव रामो भयात् जानुभ्यामवनीं गतः—दंडवद्भूमौ प्रणम्य पुनः पुनः तुष्टावचेति ॥ १४ ॥

अथोत्थाय महावीरो यावदेव प्रपश्यति ॥ १५ ॥

वक्त्रं पुरभिदस्तत्र अंतर्ब्रह्मांडकोटयः।
चटका इव लक्ष्यंते ज्वलज्ज्वाला समाकुलाः ॥ १६ ॥

अथ दण्डवत्प्रणामानंतरं महावीरो राम उत्थाय यावद्वक्त्रं प्रपश्यति तावदेव तस्मिन् पुरभिदो वक्त्रे अंतः मध्ये ब्रह्मांडकोटयः ज्वलज्ज्वालासमाकुलाः ज्वलंतीभिर्ज्वालाभिः समाकुलाः व्याकुलाश्चटका इव दृश्यंते ॥ १६ ॥

ब्रह्मांडदर्शनप्रकारमेवाह—

मेरुमंदरविंध्याद्या गिरयः सप्त सागराः।
दृश्यंते चन्द्रसूर्याद्याः पंच भूतानि ते सुराः॥ १७॥

दृश्यंत इत्यादि। दृश्यंत इत्यस्य पूर्वतनेनाप्यन्वयः। ते सुराः परमेश्वरनिकटे पूर्वं ये दृष्टाः सुराः। अनेन रूपेण चतुर्दश भुवनानि दृश्यंत इत्यन्वयः॥ १७॥

प्रतिब्रह्मांडमेवं तु दृष्ट्वा दशरथात्मजः॥ १८॥

सुरासुराणां संग्रामान् तत्र पूर्वापरानपि।
विष्णोर्दशावतारांश्च तत्कर्तव्यानि च द्विजाः!॥ १९॥

एवमनेन रूपेण प्रति ब्रह्मांडं दशरथात्मजो रामः पूर्वापरान् सुरासुराणां संग्रामान् तत्रैव विष्णोर्दशावतारांश्च तत्कर्तव्यानि दुष्टनिग्रह शिष्टपरिपालनादीनि, हे द्विजा इति ऋषीन्प्रति सूतस्य संबोधनम्॥ १९॥

पराभवांश्च देवानां पुरदाहं महेशितुः।
उत्पद्यमानानुत्पन्नान् सर्वानपि विनश्यतः॥ २०॥

दृष्ट्वा रामो भयाविष्टः प्रणनाम मुहुर्मुहुः।
उत्पन्नतत्वज्ञानोपि बभूव रघुनंदनः॥ २१॥

अथोपनिषदां सारैरर्थैस्तुष्टाव शंकरम्।

तत्र देवासुरे युद्धे देवानां पराभवान्, महेशितुः परमेश्वरात् पुरदाहं त्रिपुरदाहं दृष्ट्वेत्यन्वयः। उत्पद्यमानानित्यादि। उत्पद्यमानान् सर्वान्पदार्थान् विनश्यतः सर्वान् पदार्थानपि। दृष्ट्वा रामो भयाविष्टस्सन् मुहुर्मुहुः प्रणनामेत्यन्वयः। उत्पन्नेत्यादि—उत्पन्नतत्वज्ञानोपि उत्पन्न विशेष दर्शनवांश्च बभूव। अथ विशेषदर्शनानंतरं उपनिषदां सारैः अर्थैः उपनिषत्सारभूतार्थं प्रतिपादकैर्वाक्यैः शंकरं तुष्टाव॥ २१॥

स्तुतिप्रकारमेवाह—

देव! प्रपन्नार्तिहर! प्रसीद प्रसीद विश्वेश्वर! विश्ववंद्य!।
प्रसीद गंगाधर! चंद्रमौळे! मां त्राहि संसारभयादनाथम्
॥ २२ ॥

देव! स्वयं प्रकाश! प्रपन्नार्तिहर प्रपन्नानां जनानां आर्ति दुःखं हरतीति तथा प्रसीद प्रसन्नो भवेत्यर्थः। अत्र संभ्रमे द्विर्वचनमिति। हे विश्वेश्वर विश्ववंद्य प्रसीद हे गंगाधर चन्द्रमौळे अनाथं मां संसारभयात् त्राहि त्रायस्वेत्यर्थे त्राहि इत्यार्षं रूपम्॥ २२॥

त्वत्तो हि जातं जगदेतदीश! त्वय्येव भूतानि वसंति नित्यं।
त्वय्येव शंभो! विलयं प्रयांति भूमौ यथा वृक्षलतादयोऽपि॥ २३॥

हे ईश! वत्तः एतज्जगज्जातं, त्वय्येव सर्वाणि भूतानि नित्यं वसंति, हे शंभो! त्वय्येव सर्वाणि विलयं प्रयांति, तत्र दृष्टांतमाह—भूमावित्यादि। वृक्षलतादयोपि यथा भूमावुत्पद्यंते तत्रैव वसंति तत्रैव लयं प्रयांति तद्वत्। एतेन ईश्वरस्य जगदुपादानत्वमुक्तम्॥ २३॥

ब्रह्मेंद्ररुद्राश्च मरुद्गणाश्च गंधर्वयक्षासुरसिद्धसंघाः।
गंगादि नद्यो वरुणालयाश्च वसंति शूलिन्! तव वक्त्रमंतिके
॥ २४॥

हे शूलिन्! ब्रह्मेन्द्रादयः वरुणालयाः समुद्राः वक्त्रमंतिके वक्त्रस्यांतिके। अत्र षष्ठीस्थाने द्वितीयाप्रयोगः आर्षः। अंतिके समीपे मध्य इति यावत्, वसंति तिष्ठंति वक्त्रयंत्र इति पाठस्तु सुगम एव॥ २४॥

ननु त्वत्तोहीत्यादिना जगदुपादानत्वमुक्तं, तन्नसंभवति, तथात्वे विकारित्वापत्तिरित आह—

त्वन्मायया कल्पितमिंदुमौळे! त्वय्येव दृश्यत्वमुपैति विश्वं।
भ्रान्त्या जनः पश्यति विश्वमेतच्छुक्तौ यथारूप्यमहिं च रज्जौ
॥ २५॥

हे इन्दुमौळे ! त्वन्मायया कल्पितं विश्वं त्वय्येव कल्पितं तत् दृश्यत्वमुपैति। मायया कल्पितं मायापरिणामरूपं त्वय्येवाधिष्ठानरूपे विश्वंदृश्यत्वमुपैति। दर्शनविषयतां प्राप्नोति। त्वदधिष्ठानतया दर्शनविषयतां प्राप्नोतीत्यर्थः। अत्र प्रपंचस्य दृश्यत्वेन मिथ्यात्वं सूचितं। तथा च प्रयोगः— प्रपंचो मिथ्या, दृश्यत्वादिति। अत्र त्वन्मायया त्वय्येव कल्पितमित्यनेन अधिष्ठानतया जगदुपादानत्वं, न तु परिणामितया उपादानत्वमिति न विकारित्वापत्तिरिति ध्येयं। ननु दृश्यत्वेन यदि प्रपंचस्य मिथ्यात्वं तर्हि घटस्सन् पटस्सन्नित्यादि सत्वप्रतीतिः कथं स्यादित्यत आह—भ्रान्त्येति। जनः लोकः एतत्सर्वं प्रपंचजातं पारमार्थिक सत्वाभाववत् पारमार्थिक सत्वाधिक सत्वाधिकरणत्वेन पश्यति अतो न मिथ्यात्वानुमानेन प्रत्यक्षविरोधः। अत्रानुमाने दृष्टांतमाह—शुक्तावित्यादि। अथवा ननु मिथ्यात्वे दृश्यत्वमप्रयोजकं। मिथ्यात्वाभावे दृश्यत्वं स्यादित्यत आह—भ्रान्त्येति। भ्रान्त्या अनिर्वचनीयाध्यासेन जनः एतत्सर्वं प्रपंचजातं पश्यति तथाचानिर्वचनीयाध्यासाभावे दृश्यत्वमेवानुपपन्नमिति विपक्षे बाधकस्तर्को द्रष्टव्यः। एवं सति ब्रह्मणि प्रपंचजातमेव अध्यस्तमिति तत्र दृष्टांतद्वयमाह॥ २५॥

अत्र प्रपंचस्याध्यासिक संबंध निबंधनं दृश्यत्वमुपपादयति—

तेजोभिरापूर्य जगत्समस्तं प्रकाशमानः कुरुषे प्रकाशम्।
विना प्रकाशं तव देवदेव! न दृश्यते विश्वमिदं क्षणेन॥ २६॥

तेजोभिः चंद्रसूर्यवह्न्यादि गत तेजोभिः समस्तं जगत् आपूर्यव्याप्य प्रकाशमानः कुरुषे स्वप्रकाशरूपस्सन् जगत् प्रकाशं प्रकाश्यमानं कुरुषे तथा च स्मृतिः “यदादित्यगतं तेजो जगद्भासयतेखिलं। यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक”मिति। तथा श्रूयते च “तस्य भासा सर्वमिदं विभाती”ति। अत्र अन्वयमुक्त्वा व्यतिरेकमाह—विनेत्यादि। हे देवदेव! तव प्रकाशं आदित्यादिगततेजोरूपप्रकाशं विना, चाक्षुषप्रत्यक्षविषयीभूतं विश्वं क्षणेन न दृश्यते तथा च चाक्षुषप्रत्यक्षे अन्वयव्यतिरेकाभ्यां तेजस्सहकारित्वादितिभावः। एवं सति किंचित् त्वदीयतेजःसहकारिचाक्षुषप्रत्यक्षविषयीभूतं किंचित्तु साक्षिभास्यमिति

जगत्समस्तं त्वद्भासा भास्यत इति प्रपंचस्य दृश्यत्वमुपपद्यत इति भावः ॥ २६ ॥

अत्र लीलाविग्रहवत्वेन परिच्छिन्नस्य तव कथं जगदाधारत्वं? कथं वा जगत्कर्तुत्वमिति या असंभावना स्थिता, सा तु त्वन्मायाप्रयुक्त विश्वरूप प्रदर्शनरूप-विशेष-दर्शनेन निवृत्तेत्याह—

अल्पाश्रयो नैव बृहन्तमर्थं धत्तेऽणुरेको नहि विंध्यशैलम्।
त्वद्वक्त्रमात्रे जगदेतदस्ति त्वन्माययैवेति च निश्चिनोमि ॥ २७ ॥

अल्पाश्रयः अल्पस्य वस्तुनः आश्रयत्वयोग्यः बृहंतं अर्थं महाँतं न धत्ते अयोग्यत्वात्। न हि एकः अणुः स्वल्पपरिमाणपदार्थः विंध्यशैलं धत्ते। त्वद्वक्त्रमात्र इति त्वद्वक्त्रमात्रे परिच्छिन्नेत्वद्वक्त्रे यतो जगदस्ति अत एवैतत्सर्वं त्वन्माययैवेति निश्चनोमि त्वन्मायया विना न घटत इति विशेष दर्शनवान् भवामीति भावः ॥ २७ ॥

ननु पूर्वोक्तप्रकारेण प्रपंचस्य मिथ्यात्वे अर्थक्रियाकारित्वं न स्यादित्यत आह—

रज्जौ भुजंगो भयदो यथैव न दृश्यते नास्ति न चैति नाशम्।
त्वन्मायया केवलमात्मरूपं तथैव विश्वं त्वयि नीलकंठ! ॥ २८ ॥

रज्जौ भुजंगो जायते न? अपितु जायत एवेत्यर्थः अस्ति न? अपितु अस्त्येवेत्यर्थः। नाशमेति न? अपितु नाशमेतीत्यर्थः, मायामयोपि भुजंगः यथा भयदः भयकंपाद्यर्थक्रियाकारी, हे नीलकंठ! त्वयि केवलं त्वन्मायया आत्तरूपं विश्वं तथैव अर्थक्रियाकारीत्यर्थः ॥ २८ ॥

अत्र पूर्वं संकुचितमायारूपे तव विग्रहे विश्वरूपं मायिकं यद्दृष्टं विचारे क्रियमाणे तदपि मम अविद्ययैव। यतस्त्वं पूर्णः सच्चिदानंदमयः जगतामधिष्ठानभूतः, अतः पूर्णे त्वयि लीलाविग्रहवत्वं तत्र विश्वाधाराधेय भावश्चेति सर्वं त्वय्येव अध्यस्तमिति अभिप्रायवानाह—

विचार्यमाणे तव यच्छरीरं आधारभावं जगतामुपैति।
तदप्यवश्यं यदविद्ययैव पूर्णश्चिदानन्दमयो मतस्त्वं ॥ २९ ॥

ननु प्रपंचस्य मिथ्यात्वे कर्तृत्व-भोक्तृत्व-तत्फल-तत्संबंधबोधकशास्त्रस्य अप्रामाण्यं स्यादित्यत आह—

पूजेष्टपूर्तादि फलं क्रियाणां भोक्तुः फलं यच्छसि शस्तमेव।
मृषैतदेवं वचनं पुरारे त्वत्तोऽस्ति भिन्नं न च किंचिदेव ।। ३० ।।

हे पुरारे! पूजेष्टपूर्तादि फलं पूजा देवपूजा इष्टं यागादि पूर्तं तटाकादि, आदिपदाद्दानादि परिग्रहः। तेषां यत्फलं भोक्तुः तत् त्वंप्रयच्छसि भिन्नं चेत्यत्र चकारो भिन्नक्रमे। तथा च क्रियाणां उक्तक्रियातिरिक्त-क्रियाणां भोक्तुः फलं च प्रयच्छसि। एवं वचनं शस्तं उचितमेवेत्यर्थः। परं तु तन्मृषा न तत्वावेदकं, किंचिदेव वस्तु त्वत्तो भिन्नं नास्त्येव, तथा च कर्तृत्व भोक्तृत्व तत्संबंधादि बोधक शास्त्रस्य व्यवहार दशायां प्रामाण्य-मिति न विरोधः। अत्र वरक्रियाणामिति पाठे वरपदमुपलक्षणं, क्रिया-सामान्यानामिति बोध्यं। विश्वमेवेति पाठे विश्वं समस्तं क्रियाफलं प्रयच्छसीत्यर्थः ।। ३० ।।

अज्ञानमूढा मुनयो वदंति पूजोपचारादि बलिक्रियाभिः।
तोषं गिरीशो भजतीति मिथ्या कुतस्त्वमूर्तस्य तु भोगलिप्सा?
।। ३१ ।।

अज्ञानमूढाः तव तत्वाज्ञानेन मोहवंतो जनाः पूजोपचार बलि-क्रियाभिः गिरीशः तोषं भजतीति यद्वदंति तन्मिथ्या अमूर्तस्य परिपूर्णस्य सच्चिदानंदरूपस्य भोगलिप्सा कुतः? नास्तीत्यर्थः। इति रामवाक्यं ऋषीन् प्रतिसंबोध्य सूत आह मुनय इति ।। ३१ ।।

किंचिद्दलं वा चुलुकोदकं वा यत् त्वं महेश! प्रतिगृह्य दत्से।
त्रैलोक्यलक्ष्मीमपि यज्जनेभ्यः सर्वं त्वविद्याकृतमेव मन्ये ।। ३२ ।।

दळं बिल्वपत्रादि, चुलुकोदकं स्वल्पं जलं वा यत्किंचित्प्रतिगृह्य स्वीकृत्य हे महेश! जनेभ्यः स्वीयभक्तजनेभ्यः त्रैलोक्यलक्ष्मीमपि दत्से-ददासीति यत् तत्सर्वं अविद्याकृतमेव मन्ये, उपहार प्रतिग्रह त्रैलोक्य-दानादिकं सर्वं तवाविद्याकृतमेव निश्चितोमीत्यर्थः ।। ३२ ।।

व्याप्नोषि सर्वा विदिशो दिशश्च त्वं विश्वमेकः पुरुषः पुराणः।
नष्टेपि तस्मिन् तव नास्ति हानिः घटे विनष्टे नभसो यथैव ॥ ३३ ॥

त्वं सर्वादिशः विदिशश्च विश्वमेकः पुरुषः पुराणः व्याप्नोषि अधिष्ठानतया व्याप्य तिष्ठसि, यतस्त्वमेतादृशः। अतः नष्टेपि तस्मिन् तव हानिर्नास्ति तत्र दृष्टांतमाह—घटेत्यादि यथा घटे विनष्टेपि तदवच्छिन्ननभसो हानिर्नास्ति। तद्वत्तव हानिर्नास्तीत्यर्थः॥ ३३॥

नन्वीश्वरस्यैकत्वे नानात्वप्रतीतिः कथं स्यादित्यत आह—

यथैकमाकाशगमर्कबिंबं क्षुद्रेषु पात्रेषु जलान्वितेषु।
भजत्यनेक प्रतिबिंबभावं तथा त्वमंतःकरणेषु देव !॥ ३४॥

यथा आकाशगमाकाशस्थमर्कबिंबं जलान्वितेषु क्षुद्रेषु नानापात्रेषु अनेक प्रतिबिंबभावं भजति, हे देव प्रकाशरूप ! तथा त्वमप्यंतःकरणेषु अनेकप्रतिबिंबभावं भजसि तथाच परमार्थरूपस्य तवैकत्वेपि नानारूपत्वं कल्पितामिति भावः॥ ३४॥

ननु स्वकार्य निबंधनं प्रपंचरूपकार्यजनकत्वे जीवब्रह्मणोरविशेषापत्तिरित्यत आह—

सुसर्जने वाप्यवने विनाशे विश्वस्य किंचित् तव नास्ति कार्यं।
अनादिभिर्देहभृतामदृष्टैस्तथापि तत्स्वप्नवदातनोषि॥ ३५॥

विश्वस्य सुसर्जने सृष्टौ। अवने पालने, प्रळये विनाशे वा तव ब्रह्मणः स्वकीयं किमपिकार्यं नास्ति। तर्हि कथं तत्क्रियत इत्यत आह—अनादिभिरिति—देहभृतां प्राणिनां अनादिभिः प्रवाहरूपेणानादिभिः अदृष्टैः तथापि स्वकीयप्रयोजनाभावेऽपि स्वप्नवत्तत्तत्सृष्ट्यादिकं आतनोषि विस्तारयसि तत्तत्प्राण्यदृष्टानुरोधेनैव तत्तत्कार्यजनकत्वं तवेति न रागद्वेषादिनेति जीववैलक्षण्यम्॥ ३५॥

स्थूलस्य सूक्ष्मस्य जडस्य भोगो देहस्य शंभो ! न चिदं विनास्ति।
अतस्त्वदारोपण मातनोति श्रुतिः पुरारे ! सुखदुःखयोः सदा ॥ ३६ ॥

हे शंभो! स्थूलस्य देहस्य पांचभौतिक देहस्य जडस्य सूक्ष्मस्य लिंग-शरीरस्य चिदं विना चित्संबंधं विना सुखदुःखयोर्भोगो नास्ति हे पुरारे! अतः सदा त्वदारोपणं त्वयि अन्योन्याध्यासं श्रुतिरातनोति भोगहेतु तया प्रपंचयति। श्रुतिश्च "**स समानस्सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीवे**"त्यादि ॥ ३६ ॥

नमस्सच्चिदंबोधिहंसाय तुभ्यं नमः कालकंठाय कालात्मकाय।
नमस्ते समस्ताघ-संहारकर्त्रे नमस्ते मृषाचित्त-वृत्यैक-भोक्त्रे
॥ ३७ ॥

सच्चिदंबोधिहंसाय सतां योगिनां या चित् ज्ञानं तदेवांभोधिरर्णवः तस्य सर्वविषयकत्वात्। तत्र हंसः विषय विषयि भावेन स्थितः। तत्स्व-रूपाय ते तुभ्यं नमः कालकंठाय नीलकंठाय कालात्मकाय कालस्वरूपाय नमः समस्ताघसंहारकर्त्रे समस्तानि यानि अघानि तेषां संहारकर्त्रे नमः मृषाचित्तवृत्यैक भोक्त्रे मृषा या चित्तवृत्तिरन्तःकरणवृत्तिः सुखदुःखाद्याकारा तदेकभोक्त्रे, त्वदन्यः कोऽपि भोक्ता नास्तीत्यर्थः। तादृशाय तुभ्यं नमः ॥ ३७ ॥

एवं प्रणम्य विश्वेशं पुरतः प्रांजलिः स्थितः।
विस्मितः परमेशानं जगदे रघुनंदनः ॥ ३८ ॥

उपसंहर विश्वात्मन्! विश्वरूपमिदं तव।
प्रतीतं जगदैकात्म्यं शंभो भवदनुग्रहात् ॥ ३९ ॥

एवमुक्तप्रकारेण विश्वेशं प्रणम्य प्रांजलिः पुरतः स्थितः सन् रघुनंदनः परमेशानं जगदे जगाद ॥ ३८ ॥

तत्किमित्यपेक्षायामाह—उपसंहरेत्यादि—हे विश्वात्मन्! तदेवं विश्वरूपमुपसंहर। हे शंभो! भवदनुग्रहात् जगदैकात्म्यं प्रतीतं अवगतं मयेति शेषः ॥ ३९ ॥

श्री भगवानुवाच—

पश्य राम! महाबाहो! मत्तो नान्योस्ति कश्चन।
इत्युक्त्वैवोपसंजह्ले स्वदेहे देवतादिकान् ॥ ४० ॥

हे राम! महाबाहो! मत्तोन्यः कश्चन पदार्थो नास्तीति पश्य इत्युक्त्वेत्यादि—इत्युक्त्वा देवतादिकान् स्वदेहे उपसंजह्ले इति ऋषीन्प्रति सूतवाक्यम् ॥ ४० ॥

मीलिताक्षः पुनर्हर्षा द्यावद्रामः प्रपश्यति।
तावदेव गिरेः शृंगे व्याघ्रचर्मोपरि स्थितं ॥ ४१ ॥

ददर्श पंचवदनं नीलकंठं त्रिलोचनम्।
व्याघ्रचर्मांबरधरं भूतिभूषित विग्रहम् ॥ ४२ ॥

फणिकंकणभूषाढ्यं नागयज्ञोपवीतिनम्।
व्याघ्रचर्मोत्तरीयं च विद्युत्पिंगजटाधरम् ॥ ४३ ॥

हर्षान्मीलिताक्षो रामः पुनर्यावत्पश्यति तावदेव गिरेः रामगिरेः शृंगे व्याघ्रचर्मोपरिस्थितं पंचवदनमेतादृशं महादेवं ददर्शेत्यन्वयः ॥ ४१ ॥

भूतिभूषितविग्रहमिति। भूतिर्भस्म तेन भूषितोऽलंकृतो विग्रहो यस्य तं ॥ ४२ ॥

फणिकंकणभूषाढ्यमिति—फणिरूपं यत्कंकणं भूषा च भूषणांतरं तैराढ्यं तद्विशिष्टमित्यर्थः। नागयज्ञोपवीतिनं नागरूपं यत् यज्ञोपवीतं तद्विशिष्टमित्यर्थः। व्याघ्रचर्मोत्तरीयं व्याघ्रस्य यच्चर्म तदेवोत्तरीयं यस्य तं ॥ ४३ ॥

एकाकिनं चंद्रमौळिं वरेण्यमभयप्रदं।
चतुर्भुजं खड्गपर्शुं मृगहस्तं जगत्पतिं ॥ ४४ ॥

एकाकिनं निष्परिवारं वरेण्यं सर्वतः श्रेष्ठं अभयप्रदं संसार-भय-भीतानां प्राणिनामभयप्रदम् ॥ ४४ ॥

अथाज्ञया पुरस्तस्य प्रणम्योपविवेश सः ।। ४५ ।।
अथाह रामं देवेशो यद्यत्प्रष्टुमभीच्छसि ।
तत्सर्वं पृच्छ राम ! त्वं मत्तो नान्योस्ति ते गुरुः ।। ४६ ।।

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु विश्वरूपसंदर्शनं
नाम सप्तमोऽध्यायः

अथ एवं-भूत-परमेश्वर-साक्षात्कारानंतरं प्रणम्य तस्य परमेश्वर-स्याज्ञया पुरः संमुखतः उपविवेश उपविष्टवान् । अथाहेत्यादि—अथ रामोपवेशानंतरं देवेशो राममाह । हे राम! यद्यत्प्रष्टुं अभीच्छसि तत्सर्वं पृच्छते तव मत्तोन्यो गुरुरुपदेष्टा नास्ति—अतोऽहमेवोपदेक्ष्यामीति सर्वं सुस्थं ।। ४६ ।।

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमण्डन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
सप्तमोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## अष्ठमोऽध्यायः

श्रीराम उवाच—

पांचभौतिकदेहस्य चोत्पत्तिर्विलयः स्थितिः।
स्वरूपं च कथं देव! भगवन्! वक्तुमर्हसि॥ १॥

हे भगवन्! देव देव! स्वप्रकाशरूप पांचभौतिक देहस्योत्पत्तिः विलयः स्थितिश्च स्वरूपंच कथं? तद्वक्तुमर्हसि। देह इति पाठे देहपदं प्राण्युत्पत्तिस्थानोपलक्षकं। तत्र कथमुत्पत्तिः स्थितिर्लयो वा? तद्वक्तुमर्हसीति रामप्रश्नार्थः॥ १॥

श्री भगवानुवाच—

पंचभूतैस्समारब्धो देहोऽयं पांचभौतिकः।
तत्र प्रधानं पृथिवी शेषाणां सहकारिता॥ २॥

जरायुजोंडजश्चैव स्वेदजश्चोद्भिदस्तथा।
एवं चतुर्विधः प्रोक्तो देहोयं पांचभौतिकः॥ ३॥

अयं परिदृश्यमानः स्थूलदेहः यतः पंचभूतैस्समारब्धः अतः पांचभौतिक इत्युच्यते। तत्र तादृशशरीरे पृथित्री प्रधानं कारणं। प्राधान्यं कठिनत्वेन, धारकत्वादिना शेषाणां चतुर्णां भूतानां सहकारिता सहकारित्वमात्रं। नत्वाधिक्येन, पार्थिव शरीरे पृथिव्या एवाधिकयात्। एवं आप्यादि शरीरादावपि तत्तदंशस्याधिक्यात् आप्यादिशरीरव्यवहार इति ध्येयम्॥ २॥

अयं पांचभौतिक देहश्चतुर्विध इति दर्शयति—जरायुज इत्यादि॥ ३॥

प्रसंगादाह—

मानसोपि परः प्रोक्तो देवानामेव सस्मृतः।
तत्र वक्ष्ये प्रथमतः प्रधानत्वाज्जरायुजम्॥ ४॥

**परो** भौतिकापेक्षया भिन्नः प्रोक्तः वेदादावित्यर्थः—

**अपिशब्देन** मायिकोपि द्रष्टव्यः। देवानामित्युपलक्षणं ऋष्यादीनामपि द्रष्टव्यं। एवकारेण मानुष्यव्यावृत्तिः। तत्र चतुर्विधेषु शरीरेषु जरायुजं देहं प्रथमतो वक्ष्ये। तत्र हेतुमाह—प्रधानत्वादिति। प्राधान्यं च पुरुषार्थसाधनतया ॥ ४ ॥

शुक्लशोणितसंभूतावृत्तिरेव जरायुजः।
स्त्रीणां गर्भाशये शुक्ल मृतु काले विशेद्यदा।
रजसा योषितो युक्तं तदेव स्याज्जरायुजं॥ ५ ॥

बाहुल्याद्रजसः स्त्री स्याच्छुक्लाधिक्ये पुमान् भवेत्।
शुक्लशोणितयोस्साम्ये जायते च नपुंसकम् ॥ ६ ॥

शुक्लशोणिताभ्यां संभूता च सा आवृत्तिश्चेति शुक्लशोणितसंभूतावृत्तिः। आव्रियत इत्यावृत्तिः। कर्मणि क्तिन् प्रत्ययः। अत्र यदावरणं तदेव जरायुः चर्मपुटकविशेषः। तत्र शुक्लशोणिताभ्यां जायमानं यच्छरीरं तदेव जरायुजमिति। वृत्तिरिति पाठे शुक्लशोणिताभ्यां संभूता वृत्तिरुत्पत्तिर्यस्य स तादृशो देहो जरायुज इत्यर्थः। अत्र यद्यपि वृत्ति शब्दस्य धात्वर्थ पर्यालोचनया संबंधमात्र बोधकत्वं, नोत्पत्तित्वेन, तथापि संबंधसामान्य बोधकस्य पदस्य तात्पर्यवशात् आद्यक्षणरूपसंबंधविशेषबोधकत्वमिति न दोषः। अथवा शुक्लशोणितसंभूता या वृत्तिः परिणामविशेषः स एव जरायुज इत्यर्थः ॥ ५ ॥

अत्र जरायुज शरीरे शुक्लशोणित संभूतत्वं दर्शयति—स्त्रीणामित्यादिना—स्त्रीणां ऋतुकाले गर्भाशये जरायौ “ **गर्भाशयो जरायुः स्या** ”दित्यमरः। शुक्लं योषितो रजसा युक्तं सत् यदा यस्मिन्समये प्राणिनां तादृशादृष्टोद्बोधनसमये प्रविशेत् तदैव तादृश समय एव जरायुजं स्यात् भवतीत्यर्थः। तदेवेति तदेत्यध्याहार्यं, तथा च यदा यच्छुक्लं गर्भाशये प्रविशेत् तदा तदेव योषितो रजसा युक्तं सत् जरायुजं स्यादित्यर्थः। तादृशं जरायुजं प्राण्यदृष्टवशात् त्रिविधं भवतीत्याह—बाहुल्येत्यादि—रजसो बाहुल्यात् स्त्री स्यात्, शुक्लाधिक्ये शुक्ल बाहुल्ये पुमान् पुरुषो भवेत्, शुक्लशोणितयोः साम्ये नपुंसकं जायते, तु कारेण पूर्वोक्तस्त्रीपुंव्यवच्छेद उक्तः ॥ ६ ॥

ननु ऋतुकाले विशेदित्यनेन ऋतौ भार्यामुपेयादिति विधिबलात् ऋतुकाल सामान्यस्यैव गमनयोग्यत्व प्राप्तौ धर्मशास्त्रविरोधः स्यादित्यत आह—

ऋतुस्नाता भवेन्नारी चतुर्थदिवसे ततः।
ऋतुकालस्तु निर्दिष्ट आषोडशदिनावधि ॥ ७ ॥

ततः रजोदर्शनानन्तरंआषोडशदिनावधि षोडशदिनमभिव्याप्येत्यर्थः। ऋतुकालः गर्भोत्पत्तिसमयो निर्दिष्टः। गमनयोग्यता तु रजोदर्शनदिन-मारभ्य चतुर्थदिवसे नारी ऋतुस्नाता ऋतुनिमित्त स्नानवती यदा भवेत् तदा भवेदित्यर्थः। प्राथमिक दिवसत्रयं विशेष वचन बलात् धर्मशास्त्र-निषिद्धमिति नातिप्रसंग इति भावः। चतुर्थ दिवस इत्येतत् रजसः अननुवृत्तिविषयं बोध्यम् ॥ ७ ॥

तत्रायुग्म दिने स्त्री स्यात् पुमान् युग्म दिने भवेत् ॥ ८ ॥
षोडशे दिवसे गर्भो जायते यदि सुभ्रुवः।
चक्रवर्ती तदा राजा जायते च न संशयः ॥ ९ ॥

तत्र षोडशदिनात्मक ऋतु समय मध्ये अयुग्मदिने स्त्री स्यात्। युग्म-दिने पुमान्भवेत्ः तथा च कन्यार्थी अयुग्मदिने गच्छेत् पुत्रार्थी युग्मासु संविशेत् इति भावः। षोडश इत्यादि—षोडशे दिवसे सुभ्रुवः इत्यनेन पत्न्या अपि प्रकर्षो बोध्यः, सुभ्रुवः यदि गर्भो जायते तदा राजा क्षत्रिय-श्चेत्, चक्रवर्ती सार्वभौमो जायते, अत्र संशयो न कर्तव्य इति भावः ॥ ९ ॥

ननु कश्चन गर्भादुत्पन्नः पितुः अन्यस्य वा कस्यचित् आकृतिविशेषं प्राप्नोति, अत्र किं नियामकमित्यत आह—

ऋतुस्नाता यस्य पुंसः साकांक्षं मुखमीक्षते।
तदाकृतिर्भवेद् गर्भः तत्पश्येत् स्वामिनो मुखम् ॥ १० ॥

ऋतुस्नाता सती साकांक्षं अभिलाषपूर्वकं यथा स्यात्तथा यस्य पुंसः मुखमीक्षते पश्यति स उत्पन्नो गर्भः तदाकृतिः तदाकृतिरिवाकृति-र्यस्य तथा भवेत्। तस्मात् स्वामिनः स्वभर्तुः मुखं पश्येत्। तथा च

ऋतुस्नानानंतरं साकांक्षमुखदर्शनमेव तदाकृति गर्भे नियामकमित्यर्थः ॥ १० ॥

अत्र पूर्वोक्त जरायुशब्दार्थ (स्वरूप) माह—

या स्त्रीचर्मावृतिः सूक्ष्मा जरायुः सा निगद्यते।
शुक्लशोणितयोर्योगस्तस्मिन्नेव भवेद्यतः ॥ ११ ॥

या सूक्ष्मा स्त्रीचर्मावृतिः स्त्रियाः चर्म चर्मविशेषः। स एव आवृतरावरणं गर्भस्येति शेषः। सा जरायुरिति निगद्यते उच्यते। तथा च गर्भस्यावरणी भूत स्त्री संबंधि सूक्ष्मचर्मविशेषो जरायुरित्यर्थः। यद्यपि जरायु शब्दस्य नित्यपुल्लिंगत्वेन स जरायुरित्येव वक्तुमुचितः। तथापि सा इत्यनेन आवृतिमुद्दिश्य जरायुत्वविधानात् उद्देश्यविधेयभावेनान्वयात् न दोष इति ध्येयम्। यास्तीति पाठे या सूक्ष्मा चर्मावृतिः स्त्रिया इति शेषः। अस्ति सा जरायुरित्यर्थः। अत्र तादृश जरायौ जातस्य गर्भस्य योगेन रूढ्याच जरायुपदवाच्यत्वमित्याह—शुक्लशोणितेत्यादिना। यतस्तस्मिन् जरायावेव शुक्लशोणितयोर्योगो भवेत्। अतस्तच्चर्मावरणं यस्मात्कारणात्तत्र चर्मरूपावरणे जरायौ गर्भो भवेत् जायते। तेन तत्र गर्भो भवेत्। तस्मात्तेन पूर्वोक्तो जरायुजः यद्यस्मात्कारणात् योगेन रूढ्या तादृशो गर्भः जरायुज इत्यर्थः ॥ ११ ॥

अत्र प्रधानत्वाज्जरायुज शब्दार्थमुक्त्वा अंडजादीनामप्यर्थमाह—

अंडजाः पक्षिसर्पाद्याः स्वेदजा मशकादयः।
उद्भिज्जा वृक्षगुल्माद्या मानसाश्च सुरर्षयः ॥ १२ ॥

अंडजाः पक्षिसर्पाद्याः पक्षिणः सर्पाश्च। आद्य शब्दात् पिपीलिकादयः। एते अण्डे जाता इत्यंडजाः। स्वेदजा मशकादयः आदिपदात् कृमिदंशादेः परिग्रहः। स्वेदाज्जातत्वादेते स्वेदजा इत्यर्थः। उद्भिज्जा वृक्षगुल्माद्या वृक्षाः गुल्माः। आद्यपदाल्लतादेः परिग्रहः। एते भूमिमूर्ध्वं भित्वा जायंत इत्युद्भिज्जाः। मानसाश्च सुरर्षयः सुराः देवाः ऋषयश्च मनसो जाता इति मानसा इति ॥ १२ ॥

5

अत्र जरायुशरीरस्योत्पत्तिवृद्धि जीवसंचयान् क्रमेणाह—

जन्मकर्मवशादेव निषिक्तं स्मरमंदिरे।
शुक्लं रजस्समायुक्तं प्रथमे मासि तद्रवम्॥ १३॥

बुद्बुदं कललं तस्मात्ततः पेशी भवेदिदं।
पेशी घनं द्वितीये तु मासि पिंडः प्रजायते॥ १४॥

जन्मकर्मवशात् जन्मनः कर्म प्राणिनां जन्मनः प्रयोजकीभूतं यत्कर्म धर्माधर्मरूपं तद्वशात् सहकारात् स्मरमंदिरे स्त्रीयोनौ निषिक्तं शुक्लं रजः समायुक्तं सत् सम्यक्प्रकारेण युक्तं सत् प्रथमे मासि तद्द्रवं भवति। तस्मात्तादृशाद् द्रवात् बुद्बुदं कललं च भवेत्। ततस्तस्मात्कललात् पेशी-भवेत् अवयव-विशेषोत्पादनानुकूलो मृदुळमांसविशेषो भवेदित्यर्थः। तद-नंतरमिदं पेशीभूतरूपं घनं कठिनं भवेत्, एतेन प्रथमे मासि क्रमेण पंचावस्थाः प्रतिपादिताः। द्वितीये तु द्वितीये मासि तदेव कठिनं पिंडः पिंडरूपो जायते॥ १४॥

करांघ्रि-शीर्षादिकानि तृतीये संभवंति हि।
अभिव्यक्तिश्च जीवस्य चतुर्थे मासि जायते॥ १५॥

करांघ्रि शीर्षादिकानि—करावंघ्री शीर्षंच करांघ्रिशीर्षं, आदिपदादि तरावयवपरिग्रहः। तानि तृतीये मासि संभवंतीत्यर्थः। अभिव्यक्ति-श्चेति चतुर्थं मासि जीवस्याभिव्यक्तिः। सुखदुःखाद्यनुभव नियामकी-भूतः संबंधविशेषो जायते। अत्र यद्यपि गर्भोपनिषदि उत्पत्तौ जीवसंबंधे च भिन्न एव क्रमः। अत्र तु प्रकारभेद इति भिद्यते, तथापि प्राणिनां अदृष्ट-विशेषवैलक्षण्य-निबंधनं जीवसंबंधादौ वैलक्षण्यम्, अतो न विरोध इति ध्येयम्॥ १५॥

ततश्चलति गर्भोपि जनन्या जठरे स्वतः।
पुत्रश्चेद्दक्षिणे पार्श्वे कन्या वामे च तिष्ठति॥ १६॥
नपुंसकस्तूदरस्य भागे तिष्ठति मध्यतः॥ १७॥

ततः शरीरे जीवसंबंधानंतरं जनन्या जठरे उदरे स्वतोपि स्वयमेव गर्भश्चलति। जीव संबंधवशाच्चेष्टावान् भवति। अत्रोत्पन्नस्य त्रिविध-

स्यापि गर्भस्य स्थितौ अवच्छेद-भेदमाह—पुत्रेत्यादि। पूर्वत्र जनन्या-जठर इति तु दक्षिणपार्श्वे इत्यादौ सर्वत्र संबध्यते। तथा च पुत्रश्चे-द्दक्षिणे पार्श्वे दक्षिण-पार्श्वावच्छेदेन, कन्या चेद्वामे वामपार्श्वावच्छेदेन तिष्ठतीत्यर्थः। नपुंसकश्चेन्मध्यतः सप्तम्यर्थेतसिः, मध्यदेशावच्छेदेन तिष्ठतीत्यर्थः॥ १७॥

अतोदक्षिण-पार्श्वेतु शेते माता पुमान्यदि।
अंगप्रत्यंगभागाश्च सूक्ष्माः स्युर्युगपत्तदा॥ १८॥

पुमांश्चेद्गर्भः माता यदि दक्षिण पार्श्वे शेते। अतः कारणात् तदा तस्मिन् समये अंगप्रत्यंगभागाः अंगानि करचरणादीनि प्रत्यंगानि अंगुल्या-दीनि तान्येव भागाः अंशाः युगपत्सूक्ष्माः स्युः गर्भस्य संमर्दवशात् स्वल्पा-भवंतीत्यर्थः, इदमुपलक्षणं गर्भांतरेपि तत्तद्भागावच्छेदेन शयने तथा बोध्यमिति॥ १८॥

विहाय श्मश्रुदंतादीन् जन्मानन्तर-संभवान्॥
चतुर्थे व्यक्तता तेषां भावानामुपजायते॥ १९॥

तेषां गर्भाणां जन्मानंतरसंभवान् श्मश्रुदंतादीन् भावान् विहाय इतरेषां भावानां चतुर्थे मासि व्यक्तता अभिव्यक्तिश्च जायत इत्यर्थः॥ १९॥

पुंसां स्थैर्यादयो भावाः भूतत्वाद्याश्च योषितां।
नपुंसके तु ते मिश्रा भवंति रघुनंदन॥ २०॥

पुंसां गर्भाणां स्थैर्यं स्थिरता तदादिर्येषां ते भावाः आदिपदात् नखादयः साधारणा भावाः, योषितां स्त्रीणां भूतत्वाद्याः भूतत्वं यथार्थो-धर्मः सहजः अस्थैर्यमिति यावत्। अत्र भावार्थो न विवक्षितः। आद्य-पदात् पूर्वोक्त साधारण भावपरिग्रहः—भीरुत्वाद्याश्च योषितामिति पाठे तु भीरुत्वं योषितां सहजो धर्म इत्यादिकं सुगममिति। हे रघुनंदन! नपुंसके गर्भेतु ते पूवोक्ता भावा मिश्रा मिश्रिता भवंति॥ २०॥

मात्रृजं चास्य हृदयं विषयानभिकांक्षति।
ततो मातुर्मनोभीष्टं कुर्याद् गर्भविवृद्धये॥ २१॥

अस्य गर्भस्य हृदयं अंतःकरणं मातृजं मातृजन्यं, हृन्नाभीत्यादिना अग्रे मातृजन्यत्वस्य तथैव वक्ष्यमाणत्वात्, विषयान् मातुराकांक्षाविषयान् अभिकांक्षति आकांक्षति। ततः द्वयोराकांक्षयोः एक विषयत्वेन गर्भवृद्धये गर्भस्य विवृध्यर्थं मातुरभीष्टं मातुराकांक्षाविषयं कुर्यात्। तथा च मातुराकांक्षाविषयस्यैव गर्भस्याकांक्षाविषयत्वात् तत्प्राप्तौ सत्यां गर्भस्य वृद्धिर्भवतीत्यर्थः। अथवा मातृजं मातरि जातं हृदयं विषयानभिकांक्षति। तदेव हृदयं अस्य गर्भस्य ततो हृदयस्यैकत्वात् मातुर्मनोभीष्टं गर्भ विवृद्धये कुर्यात्। अयं भावः मात्रभिलाषिताहारप्रयुक्त-रसविशेष-वहनाडीद्वारा गर्भस्यापि तृप्तिमत्वाद् वृद्धिर्भवतीति॥ २१॥

तां च द्विहृदयां नारीं आहुद्रौहृदिनीं ततः।
अदानाद् दौहृदानां स्युर्गर्भस्य व्यंगतादयः॥ २२॥

द्विहृदयां स्वहृदय गर्भस्थ हृदय द्वयवर्तीं तां दौ हृदिनीमाहुः। यथाह बाहटः—" **मातृजं ह्यस्य हृदयं मातुश्च हृदयेन च। संबंधेन च गर्भिण्या-नेष्टंश्रद्धाविमानन**"मिति—तत्संबंधित्वात् दौहृदं गर्भः, तेन सा च तद्योगात् दौहृदिनीति। तथाच मातुः गर्भस्थ हृदयवत्व प्रदर्शनेनैकाभिलषितत्वं सूचितं। ततः उभयोरेकाभिप्रायवत्वात् दौहृदानां गर्भिण्यभिलषितार्थानां अदानात् गर्भस्य व्यंगतादयो भवंति। तदुक्तं " **दौहृदस्या प्रदानेन गर्भो-दोषमवाप्नुया** "दिति। आदिपदात् च्युत्यादि परिग्रहः। तदुक्तं " **श्रद्धा-विधानगर्भस्य विकृतिश्युतिरेववेति** "॥ २२॥

मातुर्यद्विषये लोभस्तथार्थो जायते सुतः।
प्रबुद्धं पंचमे चित्तं मांसशोणितपुष्टता॥ २३॥

मातुः यस्मिन्विषये लोभः स्पृहा तथार्थः तथा तादृशः अर्था यस्य सः तादृशः सुतो जायते। प्रबुद्धमित्यादि। पंचमे मासि गर्भस्य चित्तं प्रबुद्धं अधिकज्ञानयोग्यं भवतीत्यर्थः। मांसशोणितपुष्टता च॥ २३॥

षष्ठेऽस्थिस्नायुनखर केशलोम विविक्तता।
बलवर्णो चोपचितौ सप्तमे त्वंगपूर्णता॥ २४॥

षष्ठे मासि अस्थिस्नायुनखर केशलोम विविक्तता। अस्थ्नां स्नायूनां त्वगंतर्वर्ति सूक्ष्मशिराणां नखराणां केशानां लोम्नां केशातिरिक्तलोम्नां विविक्तता स्पष्टता। बलवर्णौ बलंश्च वर्णश्च बलवर्णौ तौ चोपचितौ भवत इत्यर्थः। सप्तमे तु सप्तमे मासेतु अंगपूर्णता अंगानांपूर्णता भवतीत्यर्थः॥ २४॥

पादांतरितहस्ताभ्यां श्रोत्ररंध्रे पिधाय सः।
उद्विग्नो गर्भसंवासादस्ति दुःखभयान्वितः॥ २५॥

स गर्भः पदांतरित हस्ताभ्यां पादाभ्यां अंतरितौ पादयोरंतरितौ वा यौ हस्तौ ताभ्यां श्रोत्ररंध्रे पिधाय आच्छाद्य गर्भसंवासादुद्विग्नः उद्वेगवान् दुःखभयान्वितः गर्भवासजन्यं दुःखमनुभूय तादृश-गर्भवासजन्य-दुःख-भयान्वितः भयविशिष्टः सन्नस्ति तिष्ठतीत्यर्थः। गर्भलयान्वित इति पाठे तु गर्भस्य यो लयः पतनानंतर नाशो वा नाशानंतर पतनं वा तद्विषयक ज्ञानान्वितः। तथा चैतच्छरीरमपि मोक्षोपायमकृत्वा नंक्ष्यतीति बुद्धया उद्विग्नो भवतीत्यर्थः। इदंतु क्वाचित्कगर्भाभिप्रायेण द्रष्टव्य-मिति॥ २५॥

आविर्भूतप्रबोधौऽसौ गर्भदुःखादिसंयुतः।
हा कष्टमिति निर्विण्णः स्वात्मानं शोशुचीत्यथ॥ २६॥

असौ गर्भस्थो जीवः आंविर्भूतप्रबोधः आविर्भूतः उत्पन्नः प्रबोधः प्रकृष्टो बोधो यस्य सः तादृशो गर्भदुःखादिसंयुतः गर्भ प्रयुक्तं यद्दुःखं आदि पदात् बाल्यावस्थादिजन्यदुःखस्मरण प्रयुक्त भयपरिग्रहः तेन विशिष्टः आदिभूत प्रबोध इति पाठेतु आदिभूतं आदौ पूर्वजन्मनि भूतं जातंतद्वि-षयको यः प्रकृष्टो बोधः सः यस्येत्यर्थः। हा इति खेदे हा कष्टमिति निर्विण्णः अनुतापवान् सन् अथ अनंतरं स्वात्मानं शोशुचीति पुनः पुनः शोचतीत्यर्थः॥ २६॥

अनुभूता महासह्यपुरा मर्मच्छिदोऽसकृत् ।
करंभवालुकास्तप्ता चादह्यंता-सुखाशया: ।। २७ ।।

करंभवालुका: करंभो दधिसक्तव: तदर्थं क्रियमाण वालुका इव तप्ता: वालुका: असुखाशया: असुखस्य दु:खस्य आशय: स्थानं तत्स्वरूपा: महासह्यपुरा:। महत् असह्यं दु:खं यत्र तादृशं पुरं देह: शरीरं येषां ते "**गृहोपरि गृहे देहे नगरे च पुरं पुरीति**" नानार्थरत्नमालायां। मर्मच्छिद: अदह्यंत विधात्रेति शेष:। तप्ता अपि विधात्रा अदह्यंतेत्यर्थ: तादृश्यो वालुका असकृदनुभूता: मयेति शेष:। एतच्च अग्रेतनेन संबध्यते। अनुभूतामहासह्या: पुरा इति पाठेतु पुरा पूर्वकाले महासह्या: तादृश्यो वालुका: मया अनुभूता इत्यर्थ:। शेषं पूर्ववत् ।। २७ ।।

जठरानलसंतप्ता: पित्ताख्य रसविप्लुष: ।
गर्भाशये निमग्नंतु दहंत्यति भृशं हि माम् ।। २८ ।।
उदर्यं क्रिमि वक्त्राणि कूटशाल्मलि कंटकै: ।
तुल्यानि च तुदंत्यार्तं पार्श्वास्थि क्रकचार्दितम् ।। २९ ।।

जठरानलसंतप्ता: जठरे योऽनल: तेन संतप्ता: अति-तप्ता: या: पित्ताख्य रसविप्लुष: पित्ताख्यो यो रस: तस्य कणा: गर्भाशये जरायौ गर्भस्थाने वा निमग्नं मां अतिभृशमत्यर्थं यथास्यात्तस्थादहंतीत्यर्थ: ।। २८ ।।

उदर्यमित्यादि उदर्यक्रिमिवक्त्राणि उदरे भवा: ये क्रिमय: तेषां यानि वक्त्राणि, तानि कीदृशानीत्यपेक्षायामाह—कूटशाल्मलि कंटकैस्तुल्यानि पार्श्वस्थ क्रकचार्दितं मातु: पार्श्वस्थितानि यानि अस्थीनि तैरर्दितं अतएव आर्तं मां तुदंति व्यथयंतीत्यर्थ: ।। २९ ।।

गर्भे दुर्गंधभूयिष्ठे जठराग्नि-प्रदीपिते ।
दु:खं मयाप्तं यत्तस्मात् कनीय: कुंभपाकजम् ।। ३० ।।

दुर्गंध भूयिष्ठे जठराग्नि प्रदीपिते जठरानलसंतप्ते गर्भे उदरे मया यद्दु:खमाप्तं प्राप्तं तस्माद्दु:खात् कुंभपाकजं कुंभीपाकनरकजन्यं दु:खं कनीय: गर्भवासजन्यदु:खं कुंभीपाकजन्यदु:खादप्यधिकमित्यर्थ: ।। ३० ।।

पूयासृक् श्लेष्म पायित्वं वांताशित्वं च यद्भवेत्।
अशुचौ क्रिमिभावश्च तत्प्राप्तं गर्भशायिना ।। ३१ ।।

पूयमसृक् श्लेष्मा च तत्पायित्वं तत्पानवत्वं वांताशित्वं वांतस्याशनं तद्वत्वं, अशुचौ देशे क्रिमिभावः क्रिमिधर्मश्च यद्भवेत् अन्य त्रयज्जायते तत्सर्वं गर्भशायिना मया प्राप्तमित्यर्थः ।। ३१ ।।

**गर्भशय्यां समारुह्य दुःखं यादृङ्मयापि तत्।**
नातिशेते महादुःखं निःशेषं नरकेषु यत् ।। ३२ ।।

गर्भशय्यां समारुह्य प्राप्य यादृक् दुःखं प्राप्तमित्यनुषज्यते। मया प्राप्तं तन्नरकेषु नानाविधेषु नरकेष्वपि यन्निश्शेषं महादुःखं तन्नातिशेते गर्भवासजनितदुःखात् तदधिकं न भवतीत्यर्थः ।। ३२ ।।

एवं स्मरन् पुरा प्राप्ता नाना जातीश्च यातनाः।
मोक्षोपायमभिध्यायन् वर्ततेऽभ्यासतत्परः ।। ३३ ।।

एवं पूर्वोक्तप्रकारेण पुरा प्राप्ताः नाना जातीः यातनाः ताः स्मरन् मोक्षोपायं अभिध्यायन् **यदि गर्भाद्विमुच्येहं 'तं प्रपदये महेश्वर**'मित्यभिध्यायन् अभ्यासतत्परः पुनः पुनः तद्विषयकध्यानतत्परः सन् वर्तत इत्यर्थः ।। ३३ ।।

अष्टमे त्वक् श्रुती स्यातां ओजस्तेजश्च हृद्भवं।
शुद्धमापीतरक्तंच निमित्तं जीविते मतम् ।। ३४ ।।

अष्टमे मासि त्वक्श्रुती त्वक्सहित श्रुती स्यातामुत्पद्येते हृद्भवं हृदि जातं ओजो बलं तदेव तेजोविशेषः। आ ईषत् शुद्धं पीतं रक्तं च ईषत्पीतं ईषच्छलुक्लं ईषद्रक्तमित्यर्थः। तदेवजीविते जीवने निमित्तं कारणमिति, इदं तु वैद्यशास्त्रप्रसिद्धमिति भावः ।। ३४ ।।

मातरं च पुनर्गर्भं चंचलं तत्प्रधावति।
ततो जातोऽष्टमे मासि न जीवत्योजसोज्झितः ।। २५ ।।

अष्टमे मासि तदोजः चंचलं सत् मातरं गर्भं च प्रधावति गच्छति। ततः यतो मातरं गच्छति ततः ओजसा उज्झितः हीनः सन् जातो गर्भो

न जीवति, अतएव तदोजो यदा गर्भे तिष्ठति तदा जातश्चे ज्जीवतीति भावः ।। ३५ ।।

कंचित्कालमवस्थानं संस्कारात् पीडितांगवत् ।
समयः प्रसवस्यास्य मासेषु नवमादिषु ।। ३६ ।।

अष्टममासानंतरं कंचित्कालं व्याधिना पीडितांगवत् प्रयासादिना पीडितमंगं यस्य तद्वत् संस्कारात् जीवनादृष्टविशेषवशात् अवस्थानं गर्भस्येति शेषः । अस्य गर्भस्य प्रसवस्य नवमादिषु मासेषु समयः समीचीनः समयः ।। ३६ ।।

मातुरस्रवहां नाडीमाश्रित्यान्ववतारिता ।
नाभिस्थ नाडी गर्भस्य मात्राहार रसावहा ।। ३७ ।।

मातृरस्रवहां रक्तवहां नाडीमाश्रित्य तत्संबद्धा भूत्वा गर्भस्य नाभीस्थ नाडी अन्ववतारिता अनुगता तिष्ठति सैव मात्राहार रसावहेत्यर्थः ।। ३७ ।।

तेन जीवति गर्भोपि मात्राहारेण पोषितः ।
अस्थियंत्र विनिष्पिष्टः पतितः कुक्षिवर्त्मना ।। ३८ ।।

मेदोसृग्दिग्ध सर्वांगो जरायु पटसंवृतः ।
निष्क्रामन् भृशदुःखार्तो रुदन्नुच्चैरधोमुखः ।। ३९ ।।

यत्नादिव विनिर्मुक्तः पतत्युत्तानशाय्युत ।। ४० ।।

तेन नाभिस्थ नाडीद्वारा आगतमात्राहाररसेन पोषितः सन् गर्भो जीवति । अस्थियंत्र विनिष्पिष्टः अस्थीन्येव यंत्राणि, तेन निष्पिष्टः संमर्दितः सन् पतितः स्वस्थानाच्चलितः उत अनंतं मेदोऽसृग्दिग्धसर्वांगः मेदोभिः वसाभिः, असृग्भिः रक्तैः, दिग्धं लिप्तं सर्वांगं यस्य तादृशः, जरायु पटसंवृतः जरायु पटेन संवृतः आवृतः कुक्षिवर्त्मना निष्क्रामान् भृशदुःखार्तः पुनः पुनः दुःखैरार्तः उच्चैः रुदन् अधिकं रुदन् सन् यंत्राद्विनिर्मुक्त इव उत्तानशायी बालो अधोमुखस्सन् पतति । उत्तानशाय्यध इति पाठे अधोमुखस्सन्नधः पततीत्यर्थः ।। ४० ।।

अकिंचित्कस्तदालोकैर्मांसपेशीवदास्थितः ।
श्वमार्जारादि दंष्ट्रिभ्यो रक्ष्यते दण्डपाणिभिः ॥ ४१ ॥

भूमावुत्पन्नो बालः अकिंचित्कः न विद्यते किंचित्कार्यं यस्मात्सः, अकिंचित्कः, मांसपेशीवन्मांसपिण्डवदास्थितः तिष्ठति । तर्हि बालः स्वरक्षणे स्वस्य सामर्थ्याभावात् कथं जीवतीत्यत आह—दंडपाणिभिरित्यादि । जीवनादृष्टसहकारात् दंडपाणिभिर्लोकैः श्वमार्जारादि दंष्ट्रिभ्यः श्वा कुक्कुरः, मार्जारो बिडालः, आदिपदान्नखिनां परिग्रहः, दंष्ट्री सूकरादिः तेभ्यो रक्ष्यत इत्यर्थः ॥ ४१ ॥

पितृवद्राक्षसं वेत्ति मातृवड्डाकिनीमपि ।
पूयं पयोवदज्ञानाद्दीर्घं कष्टंतु शैशवं ॥ ४२ ॥

गर्भदशायां दुःखमुक्त्वा बाल्यदशायां तदाह—पितृवदित्यादि—अज्ञानादिति सर्वत्र संबध्यते । राक्षसं पित्रृवद्वेत्ति, डाकिनीमपि मातृवद्वेत्ति, पूयं पयोवद्वेत्ति, यद्यपि सामान्यतः तत्तद्व्यक्तित्वेन ज्ञानमस्त्येव, तथापि तत्तद्विषयकज्ञानाभावे तात्पर्यं, तस्माच्छैशवं दीर्घं कष्टं महाकष्टमित्यर्थः ॥ ४२ ॥

श्लेष्मणा पिहिता नाडी सुषुम्ना यावदेवहि ।
व्यक्तवर्णं च वचनं तावद्वक्तुं न शक्यते ॥ ४३ ॥

अतएव च गर्भेपि रोदितुं नैव शक्यते ।
दृष्टोथ यौवनं प्राप्य मन्मथज्वरविह्वलः ॥ ४४ ॥

गायत्यकस्मादुच्चैस्तु तथाकस्माच्च वल्गति ।
आरोहतितरून्वेगात् शांतानुद्वेजयत्यपि ॥ ४५ ॥

कामक्रोधमदांधस्सन्न कांश्चिदपि वीक्षते ।
अस्थिमांससिरालाया वामाया मन्मथालये ॥ ४६ ॥

उत्तानपूतिमंडूक पाटितोदरसन्निभे ।
आसक्तः स्मरबाणार्त आत्मना दह्यतेतरां ॥ ४७ ॥

हि: हेतौ, यावत् यावत्पर्यन्तं सुषुम्ना नाडी श्लेष्मणा पिहिता आच्छन्ना अतः तावत्पर्यंतं वचनं वाक्यं व्यक्तवर्ण व्यक्तो वर्णो यत्र तादृशं वक्तुं न शक्यत एव, बालकेनेति शेषः। अतएव सुषुम्ना नाडयाः श्लेष्मोपहतत्वादेव गर्भे गर्भ स्थितिदशायां रोदितुमपि न शक्यते ॥ ४३ ॥

दृप्तोथेत्यादि। अथ बाल्यावस्थानंतरं, यौवनं प्राप्य दृप्तो दर्पयुक्तः मन्मथज्वरविह्वलस्सन् अकस्मात् उच्चैर्गायति तथाकस्माच्च वल्गति ॥ ४४ ॥

वेगात्तरूनारोहति, साधूनुद्वेजयत्यपि, साधूनां उद्वेगं जनयतीत्यर्थः, साधूनां उद्वेगजनकत्वे हेतुमाह—कामक्रोधेत्यादिना, कामश्च क्रोधश्च मदश्च तैरंधस्सन् कांश्चिदपि न वीक्षते, साधुत्वादि विचारं न करोत्येवेत्यर्थः ॥ ४५ ॥

अस्थीत्यादि। अस्थि च मांसं चास्थिमांसं, तत्सहिता सिरा अस्थि-मांससिरा सा अस्यास्तीति अस्थिमांससिराला। "**प्राणिस्थादातो-लजन्यतरस्यां**" इति लच् प्रत्ययः, तस्याः वामायाः। अथवा, अस्थि च मांसं चास्थि मांसं, तस्मिन् तता या सिरा सा अस्यास्तीति अस्थिमांस-सिराला, तस्याः उत्तानो यः पूति मंडूकः दुर्गंधिमंडूकः तस्य यत्पाटितं विदीर्णमुदरं तत्सन्निभे तत्सदृशे मन्मथालये स्मरबाणार्तः आसक्तः आत्मना अंतःकरणेन भृशमत्यर्थं दह्यत इत्यर्थः ॥ ४७ ॥

अस्थिमांससिरात्वग्भ्यः किमन्यद्वर्तते वपुः ?।
वामानां मायया मूढो न किंचिद्वीक्षते जगत् ॥ ४८ ॥

अस्थि च मांसं चास्थिमांसं, तत्र सिरा अस्थिमांससिरा तस्याः तथा त्वचः अस्थिमांससिरात्वचः, ताभ्यः अवांतरपदार्थस्य बहुलत्वात् बहु-वचनो पादानमिति। अथवा "**वृक्षासनयोर्विष्टरः नासिकास्तनयोर्ध्माधेटोः मुखनासिकाभ्या**"मिति भाष्ये च प्रयोगाज्ज्ञापकात्। एकवद्भावोऽ-नित्यः तथा च प्रयोगः—"**ग्रीवाकुक्षि-ललाटेषु नित्यं स्वेदः प्रशस्यते। लोहितैश्चंचु-चरणैर्हंसास्ते परिकीर्तिताः। (छि)भिन्नेषु पाणिपादेषु,**

**पातितैस्थनागश्वै ?**"रित्यादि। तस्मादस्थिमांससिरात्वग्भ्य इत्यत्रेतरेतर-द्वंद्वेननिर्देशः साधुः। एवं सर्वत्र एकवद्भावस्यानित्यत्वेनेतरेतरद्वंद्वस्य साधुत्वं द्रष्टव्यं। वपुः शरीरं ताभ्योऽन्यद्वर्तते किं? न वर्तते नास्तीत्यर्थः। तथा च शरीरस्यास्थिमांसादि परिमाणविशेषत्वादनुपादेयत्वमिति भावः। तर्हि तादृशे कथं प्रवर्तत इत्यत आह—वामानामिति, वामानां स्त्रीणां मायया मूढो मोहितस्सन् जगन्नकिंचिद्वीक्षते, विशेषरूपेण नेक्षते जगतस्तत्व-मविचार्यैव प्रवर्तत इत्यर्थः॥ ४८॥

जगत्तत्वविचाराभावमेव दर्शयति—

निर्गते प्राणपवने देहो हंत! मृगीदृशः।
यथाहि जायते नैव क्षीयते पंचषैर्दिनैः॥ ४९॥

मृगीदृशः प्राणपवने प्राणाख्यवायौ निर्गते सति देहः पंचषैः पंचभि-ष्षड्भिर्वा दिनैः यथा यादृशो जायते तन्नावेक्षत एव, मूढ इत्यनुषज्यते। तथा च कतिपयदिवसानंतरं विट्-क्रिमिभस्माद्यवस्थां दृष्ट्वापि न विचारयतीत्यतो मूढ इति भावः॥ ४९॥

वार्धकावस्थामाह—

महापरिभवस्थानं जरां प्राप्यातिदुःखितः।
श्लेष्मणा पिहितोरस्को जग्धमन्नं न जीर्यति॥ ५०॥

महांश्चासौ परिभवश्चेति महापरिभवः, तस्य स्थानं अधिकरणं, जरां प्राप्यातिदुःखितस्सन् तिष्ठति श्लेष्मणापिहितं आच्छन्नं उरो वक्षो यस्य तादृशः, घटस्याभाववद्भूतलमितिव न्नित्यसाकांक्षत्वादेकदेशान्वयबोधः, यतस्तादृशो, तस्तस्य जग्धं भुक्तमन्नं न जीर्यति॥ ५०॥

सन्नदंतो मंददृष्टिः कटुतिक्तकषायभुक्।
वातभुग्नकटिग्रीवाकरोरुचरणोऽबलः॥ ५१॥

सन् अदंत इति पदच्छेदः, अदंतः न विद्यंते दंता यस्य सः, मंददृष्टिः मंदा विषयग्रहासमर्था दृष्टिः। दृष्टिपदं इंद्रियमात्रोपलक्षकं, यस्य सः, कटु कटु द्रव्यं तिक्तं तिक्तद्रव्यं कषायं कषायद्रव्यं तद्भुंङ्त इति कटुतिक्त-कषायभुक्। अत्र वार्धकदशायां श्लेष्मण आधिक्यादेतत्रयं भुंङ्ते इत्यर्थः

वातेन वायुना भुग्नं रुग्णं कटिग्रीवाकरोरुचरणं यस्य तादृशः, अबलस्सन्निति सर्वत्र संबध्यते तादृशो भवतीत्यर्थः ॥ ५१ ॥

गदायुत समाविष्टः परिभूतः स्वबंधुभिः ।
निश्शौचो मलदिग्धांग आलंगितवरोषितः ॥ ५२ ॥

गदो व्याधिः अयुतं दशसाहस्री, तादृशव्याधिवहुत्वे तात्पर्यम् तथा च गदायुतैस्समाविष्टो युक्तः स्वबंधुभिः परिभूतः तिरस्कृतः निःशौचः, शौच-शून्यः, मलेन, दिग्धं व्याप्तं अंगं यस्य सः, आलंगितवरोषितः आलंगिता वरा उत्तमा नारी येन सः, आलंगितवरः, उषितःस्थितःश्च । अत्र अतीतत्व-मविवक्षितं । तथा च युवदशायां तादृशोऽपि इदानीमेवंरूपेण तिष्ठतीति भावः ॥ ५२ ॥

ध्यायन्नसुलभान् भोगान्केवलं वर्ततेऽचलः ।
सर्वेन्द्रियक्रियालोपाद् हस्यते बालकैरपि ॥ ५३ ॥

असुलभान् तदानीं प्राप्तुमशक्यान् भोगान् ध्यायन् पूर्वोक्त तादृश-कामिन्यालंगनादि जन्य सुखादिकं ध्यायन् अचलः निश्चेष्टस्सन् केवलं भोगरहिततया वर्तते, सर्वेन्द्रिय क्रियालोपात् सर्वेषामिन्द्रियाणां क्रियायाः कर्मकलापादेश्च, यद्वा सर्वेषामिन्द्रियाणां यात्क्रिया विषयग्राहिणी प्रवृत्तिः सन्निकर्ष इति यावत् । तस्य लोपात् बालकैरपि हस्यते उपहस्यत इत्यर्थः ॥ ५३ ॥

ततो मृतिजदुःखस्य दृष्टांतो नोपलभ्यते ।
यस्माद् बिभ्यति भूतानि प्राप्तान्यपि परां रुजं ॥ ५४ ॥

ततो वार्धक दशाजनित दुःखानुभवानतरं मृतिजदुःखस्य मृतिः मरणं तज्जन्यदुःखस्य दृष्टान्तो नोपलभ्यते, तज्जातीयदुःखांतरानुभवाभावाद् दृष्टांतो नास्तीत्यर्थः। यस्मान्मरणजन्यदुःखात् परां रुजं अत्यंत रोगान्प्राप्ता-न्यपि भूतानि बिभ्यति भयं प्राप्नुवंति ॥ ५४ ॥

नीयते मृत्युना जंतुः परिष्वक्तोपि बंधुभिः ।
सागरान्तर्जलगतो गरुडेनेव पन्नगः ॥ ५५ ॥

बंधुभिः परिष्वक्तोपि आलिंगितोपि जंतुः प्राणी मृत्युना सागरांत-र्जलगतोपि पन्नगः गरुडेनेव सः यथा गरुडेन नीयते तद्वन्नीयत इत्यर्थः ॥ ५५ ॥

हा! कांते! हा! धनं पुत्राः! क्रंदमानः सुदारुणं।
मंडूक इव सर्पेण मृत्युना नीयते नरः॥ ५६ ॥

हेति विषादे, हा कांते हा धनं हा पुत्रा इति सुदारुणं यथा स्यात् तथा क्रंदमानः रुदन्नरः मंडूकः सर्पेणैव मृत्युना नीयत इत्यर्थः॥ ५६ ॥

मर्मसूत्कृष्यमाणेषु मुच्यमानेषु संधिषु।
यद् दुःखं म्रियमाणस्य स्मर्यतां तन्मुमुक्षुभिः॥ ५७ ॥

मर्मसु हृदयादि मर्मसु, वायुविशेषेण आकृष्यमाणेषु संधिषु करचरणादि संधिषु, मुच्यमानेषु परस्परं विशकलितेषु सत्सुम्रियमाणस्य मरणावस्थां प्राप्तस्य जंतोर्यद्दुःखं यादृशं दुःखं तन्मुमुक्षुभिः स्मर्यतां मुक्तौ सत्यां तादृशं दुःखं न भविष्यति। तदर्थं यतनीयमिति भावः॥ ५७ ॥

दृष्टावाक्षिप्यमाणायां संज्ञया ह्रियमाणया।
मृत्युपाशेन बद्धस्य त्राता नैवोपलभ्यते॥ ५८ ॥

दृष्टिपदं इन्द्रियमात्रोपलक्षकं, तेन लिंगशरीरं लक्ष्यते, तथा च दृष्टा-वाक्षिप्यमाणायां आकृष्यमाणायां, सत्यां ह्रियमाणयाऽपह्रियमाणया संज्ञया चेतनया, उपलक्षणे तृतीया, ह्रियमाणसंज्ञस्येत्यर्थः। मृत्युपाशेन बद्धस्य प्राणिनः त्राता नोपलभ्यत एवेत्यर्थः॥ ५८ ॥

संरुध्यमानस्तमसा महच्चित्तमिवाविशत्।
उपाहूतस्तदा ज्ञातीनीक्षते दीनचक्षुषा॥ ५९ ॥

तमसा अज्ञानेन संरुध्यमानः आव्रियमाणः महदुच्चैर्यथा स्यात्तथा उपाहूतः यतः तथा उपाहूतः ततश्चित्तं चेतना आविशत्प्राविशत् तमिति-शेषः। तदा तस्मिन् समये दीनचक्षुषा ज्ञाती नीक्षत इव। वस्तुतस्तु तदानीं ईक्षणस्य ज्ञानस्याभावात् इवेत्युक्तमिति ध्येयम्। आविशन्निति पाठे महदुपाहूतः सन् चित्तं चेतनामाविशन्निव, प्राप्नुवन्निव ज्ञाती नीक्षते। तथा

च तदानीं ईक्षणमात्रं चक्षुरुन्मीलनमात्रं न तु ज्ञातिभिरहमाहूत इति विशेष ज्ञानवानित्यर्थः इव शब्देन सूचितः, उदाहूत इति पाठेतु उत् उच्चैराहूतः महत् चित्तं महतीं प्रकृष्टां चेतना माविशन्निव, शेषं पूर्ववत्। उताहूत इति पाठेतु उत शब्दः अप्यर्थकः। तथा च आहूतोपीत्यर्थः ॥ ५९ ॥

अयःपाशेन कालस्य स्नेहपाशेन बंधुभिः।
आत्मानं कृष्यमाणं तमीक्षते परितस्तथा ॥ ६० ॥

कालेन कर्त्रा अयः पाशेन करणेन बंधुभिः ज्ञातिभिः स्नेहपाशेन च परितस्सर्वतस्तथा कृष्यमाणं आकृष्यमाणं तं स्वात्मानं ईक्षते प्राणीति शेषः ॥ ६० ॥

हिक्कया बाध्यमानस्य श्वासेन परिशुष्यतः।
मृत्युना कृष्यमाणस्य न खल्वस्ति परायणम् ॥ ६१ ॥

हिक्कया तत्कालीनवायुविशेष प्रयुक्त हृत्कंठयोर्वायुविशेषेण बाध्यमानस्य पीडयमानस्य श्वासेनोर्ध्वश्वासेन परिशुष्यतः परिशोषणवतः मृत्युना कृष्यमाणस्य परायणं रक्षको नास्ति। खलु निश्चये ॥ ६१ ॥

संसारयंत्रमारूढो यमदूतैरधिष्ठितः।
क्वयास्यामीति दुःखार्तः कालपाशेन योजितः ॥

किं करोमि क्व गच्छामि किं गृह्णामित्यजामि किम्।
इमिकर्तव्यतामूढः कृच्छ्राद्देहात्त्यजत्यसून् ॥ ६२ ॥

संसार यंत्रमारूढः संसारः संसरणं, गत्यागत्यादिरूपं तदेव यंत्रं तदारूढः तत्प्रयोजकादृष्टवशात् गमनागमनादिकं कुर्वाणः यमदूतैरधिष्ठितः प्राप्तः अतिदुःखार्तः तत्कालीनातिदुःखैरार्तः विकलः कालपाशेन योजितः बद्धोहं क्व यास्यामि ? किं करोमि ? क्व गच्छामि ? किं गृह्णामि ? किं त्यजामि ? इतिकर्तव्यतामूढः इतिकर्तव्यतानिश्चयरहितः कृच्छ्रात् अतिप्रयासात् देहादसून् प्राणान् त्यजति मुंचतीत्यर्थः ॥ ६२ ॥

यातनादेहसंबद्धो यमदूतैरधिष्ठितः।
इतो गत्वानुभवति या यास्ता यमयातनाः ॥ ६३ ॥

यातनादेहसंबद्धः यमयातनानुभवयोग्यदेहयुक्तः यमदूतैरधिष्ठितः प्राणी यायाः यमयातनाः संभवंति इतो गत्वा एतच्छरीरं विहाय तास्सर्वा अनुभवतीत्यर्थः ॥ ६३ ॥

तासु यल्लभते दुःखं तद्वक्तुं सहते कुतः ।
कर्पूरचंदनाद्यैस्तु लिप्यते सततं हि यत् ॥ ६४ ॥

तासु प्राप्यमाणासु यातनासु यद्दुःखं लभते, यद्दुखं प्राप्नोति तदेकैक-मपि दुःखं वक्तुं कुतः सहते, तद्दुःखं वक्तुं कोऽपि समर्थो नास्तीत्यर्थः । कर्पूरेत्यादि । कर्पूरचंदनाद्यैः कर्पूरैः चंदनैः, आद्यपदात् सुगंधद्रव्यांतर परिग्रहः, तैस्सततं यद्वपुर्लिप्यते ॥ ६४ ॥

भूषणैर्भूष्यते चित्रैस्सुवस्त्रैः परिवार्यते ।
अस्पृश्यं जायतेऽप्रेक्ष्यं जीवत्यक्तं सदा वपुः ॥ ६५ ॥

चित्रैर्नानाविधैः भूषणैर्भूष्यते अलंक्रियते, सुवस्त्रैः शोभनवस्त्रैः परिवार्यते संवेष्टयते तदेव वपुः जीवत्यक्तं जीवहीनं सत् अप्रेक्ष्यं प्रेक्षणा-योग्यं अस्पृश्यं स्पर्शनायोग्यं च जायत इत्यर्थः ॥ ६५ ॥

निष्कासयंति निलयात् क्षणं न स्थापयंति हि ।
दह्यते च ततः काष्ठैः तद्भस्म क्रियते क्षणात् ॥ ६६ ॥

तादृशं वपुः गृहान्निष्कासयंति दूरीकुर्वंति, क्षणमपि नस्थापयन्ती-त्यर्थः । दह्यत इत्यादि—ततो निष्कासानंतरं तद्वपुः काष्ठैः क्षणात् क्षण-मात्रेण दह्यते भस्मीक्रियते च ॥ ६६ ॥

भक्ष्यते वा सृगालेन गृध्र कुक्कुर वायसैः ।
पुनर्न दृश्यते सोऽथ जन्मकोटिशतैरपि ॥ ६७ ॥

तदभावे सृगालेन गृध्र कुक्कुर वायसैः भक्ष्यते । अत्र वा शब्दः अनुक्त-समुच्चयार्थः । एतदभावे क्रिमि विद्धो भवतीत्यर्थः । पुनरित्यादि—अथ दाहाद्यनंतरं सदेहो जन्मकोटिशतैरपि पुनर्नदृश्यते ॥ ६७ ॥

माता पिता गुरुजनः स्वजनो ममेति मायोपमे जगति कस्य भवेत् प्रतिज्ञा।
एको यतो व्रजति कर्मपुरस्सरोयं विश्रामवृक्षसदृशः खलु जीवलोकः॥ ६८॥

मातेति—माता पिता गुरुजनः स्वजनो ममेति प्रतिज्ञा मायोपमे मणिमंत्रादि—मायाविशेषप्रयुक्त—गजतुरगमायापदार्थसदृशे जगति कस्य भवेत्? इयं मम मातेत्यादि प्रतिज्ञा दृढनिश्चयः कस्य भवेत्? न कस्यापीत्यर्थः। यतः कारणात् अयं प्राणी कर्मपुरस्सरः प्राक्तनकर्मविशिष्टस्सन् एको व्रजति, यतः पूर्वोक्तान्मायिकान् मात्रादीन् क्षणभंगुरान् सर्वान्विहाय एको गच्छति। अतः दृढनिश्चयो नास्तीत्यर्थः। दृढतर निश्चयाभावे हेतुमाह—विश्रामेत्यादि-यतो-जीवो लोको जीवोलोक्यते ज्ञायते अस्मिन्निति जीवलोको देहः, विश्राम वृक्ष सदृशः विश्रामाय यो वृक्षः तत्सदृश इत्यर्थः—तथा च यथा विश्रामार्थं वृक्षसंबंधः क्षणभंगुरः तद्वज्जीवस्य देहसंबंधोपीति कथं तत्र दृढतरनिश्चयो भवतीत्यर्थः॥ ६८॥

सायं सायं वासवृक्षं समेताः प्रातः प्रातस्तेन तेन प्रयांति।
त्यक्त्वान्योन्यं तं च वृक्षं विहंगाः तद्वत्तद्वत् ज्ञातयोऽज्ञातयश्च॥ ६९॥

यथा विहंगाः सायं सायं वासवृक्षं वासार्थं वृक्षं समेताः प्राप्तास्संतः तं वृक्षमन्योन्यं परस्परं त्यक्त्वा तेन तेन स्वस्वमार्गेण प्रातः प्रयांति, ज्ञातयः अज्ञातयश्च तद्वद्वासवृक्षं वासरूपं स्थानं समेताः तद्विमुक्ताश्च भवंतीत्यर्थः॥ ६९॥

मृतिबीजं भवेज्जन्म जन्मबीजं भवेन्मृतिः।
घटयंत्रवदश्रांतोबंभ्रमीत्यनिशं नरः॥ ७०॥

जन्म उत्पत्तिः मृतिबीजं भवेत्, मृतिः मरणं जन्मबीजं भवेत्, तदुक्तं '**जातस्य च ध्रुवो मृत्युः ध्रुवं जन्म मतस्य च**'ेति नरो घटयंत्रवत् घटार्थं यंत्रं घटयंत्रं कुलालचक्रमिति यावत्, तद्वन्नरः प्राणी अश्रांतः बंभ्रमीति अविश्रांतः पुनः पुनः भ्रमतीत्यर्थः॥ ७०॥

ननु तर्हि प्राणिनां संसारजन्यदुःखशालिनां कथं निस्तार इत्यत आह—

गर्भे पुंसः शुक्लपाताद्यदुक्तं मरणावधि।
तदेतस्य महाव्याधेर्मत्तो नान्योस्ति भेषजम् ।। ७१ ।।

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु वैराग्ययोगोनाम अष्टमोऽध्यायः

गर्भे मातुरुदरे पुंसः शुक्लपातात् शुक्लपातमारभ्य मरणावधि-मरणमभिव्याप्य यद्दुःखमुक्तं तदेतस्य तादृशस्यैतस्य दुःखरूपस्य महाव्याधेर्भेषजं तादृशव्याध्युपशामकं मत्तोन्यो नास्ति, अहमेव एतादृशव्याधि-भेषजमित्यर्थः ।। ७१ ।।

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
अष्टमोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## नवमोऽध्यायः

अत्र रामकृत पांचभौतिक देहोत्पत्ति-स्थितिलयप्रश्नस्योत्तरमुक्त्वा पूर्वोक्तं विश्वजनकत्वं स्मारयन् गर्भोत्पत्यादिकं प्रति ममैव कारणत्वमिति प्रदर्शनपूर्वकं देहस्वरूप प्रश्नस्याप्युत्तरमाह भगवान्।

श्री भगवानुवाच—

देहस्वरूपं वक्ष्यामि शृणुष्वावहितो नृप!।
मत्तो हि जायते सर्वं मयैवैतत् प्रधार्यते ॥ १ ॥

हे नृप! देहस्वरूपं देहस्य रूपं अस्थिमांससिरादिकं वक्ष्यामि। त्वमवहितः एकचित्तस्सन् शृणुष्व, अत्र शृण्विति वक्तव्ये शृणुष्वेत्यात्मनेपदं आर्षम्। पूर्वोक्त विश्वोत्पत्यादि कारणत्वस्मारण प्रकारमाह—मत्तोहीत्यादिना—विश्वं मत्तो जायते, हिः प्रसिद्धौ एतद्विश्वं मयैव प्रधार्यते ध्रियत इत्यर्थः ॥ १ ॥

मय्येवेदमधिष्ठाने लीयते शुक्तिरूप्यवत्।
अहं तु निर्मलः पूर्णः सच्चिदानंदविग्रहः ॥ २ ॥

इदं विश्वं मय्यधिष्ठान एव लीयते नश्यतीत्यर्थः। तत्र दृष्टांतमाह—शुक्तिरूप्यवत्—व्याख्यातमेतत्। एवं चेत्तर्हि विकारित्वापत्तिरित्यत आह—अहंत्वित्यादि। अहं तु शुद्धं सनातनं ब्रह्म, तत्र हेतुमाह—निर्मल इत्यादि ॥ २ ॥

ननु तव शुद्धत्वात् कथं विश्वजनकत्वमित्यत आह—अनाद्यविद्येति—

असंगो निरहंकारः शुद्धं ब्रह्म सनातनम्।
अनाद्यविद्यायुक्तस्सन् जगत्कारणतां व्रजे ॥ ३ ॥

अनादिर्या अविद्या तद्युक्तस्सन् तत्सहायस्सन् जगत्कारणतां जगदुत्पत्यादिकारणत्वं व्रजे व्रजामि। व्रजामीति वक्तव्ये व्रज इत्यात्मनेपदमार्षम्। तथा च मम विवर्तोपादानत्वान्न विकारित्वमिति भावः ॥ ३ ॥

ननु विवर्तोपादानस्य तव ब्रह्मरूपस्यैकत्वात् कथं कार्यवैचित्र्यमित्यत आह—

अनिर्वाच्या महाविद्या त्रिगुणा परिणामिनी।
रजः सत्वं तमश्चेति तद्गुणाः परिकीर्तिताः ॥ ४ ॥

महाविद्या महती च सा अविद्या च मूलाज्ञानमिति यावत्। त्रिगुणा त्रयो गुणा यस्यां सा, अनिर्वाच्या अनिर्वचनीया, परिणामिनी जगत्परिणामिनी तथा चानिर्वचनीय महाविद्याया एव परिणामित्वं। तत एव कार्यवैचित्र्यं। न तु शुद्धस्य विवर्ताधिष्ठानस्य ब्रह्मणो विकारित्वमिति ध्येयम्। तत्र के त्रयो गुणा इत्यत आह—रज इत्यादि रजः। सत्वं तमश्चेत्येते त्रयो गुणाः तस्याः मायायाः गुणाः परिकीर्तिताः ॥ ४ ॥

तेषां गुणानां रूपं कार्यं चाह—

सत्वं शुक्लं समादिष्टं सुखज्ञानास्पदं नृणाम्।
दुःखास्पदं रक्तवर्णं चंचलं च रजो मतम् ॥ ५ ॥

तमः कृष्णं जडं प्रोक्तं उदासीनं सुखादिषु।

सत्वं शुक्लं स्फटिक मण्यादिवत् भास्वरत्वात् शुक्लरूपवत्। कार्यमाह—सुखज्ञानास्पदं सुखं च ज्ञानं च सुखज्ञाने तयोरास्पदं निदानं नृणां प्राणिनां, रजः रक्तवर्णं रक्तोवर्णो यस्य तत् पटाद्युपरंजकारुणद्रव्यादिवदुपरंजकत्वात्। रक्तरूपवत् तत्कार्यमाह—दुःखास्पदमिति। दुःखानामास्पदं स्थानं—चंचलं चांचल्यप्रयोजकं मतं सर्वेषां संमतम् ॥ ५ ॥

तमः कृष्णं अंधकारवदावरणशक्तिप्रधानत्वात्। ज्ञानविरोधित्वेन कृष्णरूपवत् तत्कार्यमाह—जडमित्यादि—जडं जडत्वप्रयोजकं, जडत्वं च प्रमादालस्यनिद्रादि, सुखादिषूदासीनं। विरोधिदुःखजनकमित्यर्थः। तथा च तत्तद्गुणानामुद्रेकवशात् तत्तत्कार्योत्कर्ष इति ध्येयम्। सत्वादीनां तत्तद्रूपवत्वे प्यपंचीकरणदशायां अयोग्यत्वान्नोपलभ्यते। परमते परमाण्वादि रूपवदिति द्रष्टव्यम्।

अतो मम समायोगाच्छक्तिः सा त्रिगुणात्मिका ॥ ६ ॥

अधिष्ठाने तु मय्येव भजते विश्वरूपताम्।
शुक्तौ रजतवद्रज्जौ भुजंगो यद्वदेव तु।। ७।।

अतो ममेत्यादि—अतो मायायाः जगत्परिणामित्वात् त्रिगुणात्मिका सा शक्तिः माया मम समायोगात् मत्संबंधवशात्।। ६।।

मय्येवाधिष्ठाने विश्वरूपतां विश्वस्वरूपतां भजते प्राप्नोतीत्यर्थः, परिणाम परिणामिनोरभेदादिति भावः। तथा च मत्संबंधवशादेव मायायाः विश्वजनकत्वम् न तु स्वातंत्र्येणेति ध्येयम्। मय्येवाधिष्ठाने माययाः विश्वजनकत्वमित्यत्र दृष्टान्तमाह—शुक्ताविंत्यादि।। ७।।

अत्र पांचभौतिक देहोत्पत्यादिकं प्रत्यपि ममैवासाधारणं कारणत्वमिति प्रदर्शयितुं आकाशादीनि पंचभूतानि मन्मायया जायंत इत्याह—आकाशादीनित्यादि—

आकाशादीनि जायंते मत्तो भूतानि मायया।
तैरारब्धमिदं सर्वं देहोऽयं पांचभौतिकः।। ८।।

यत इदं सर्वं भौतिकत्वेन प्रसिद्धं सर्वं, तैरेव आकाशादि पंचभूतैरारब्धम्, अतोयं गर्भस्थो देहः पांचभौतिकः पंचभूतैरारब्धः। तथा च भूतद्वारा गर्भस्थ देहं प्रत्यपि ममैव साधारणकारणत्वमिति।। ८।।

इदानीं देहस्वरूपमाह पितृभ्यामित्यादि—

पितृभ्यामशितादन्नात् षट्कोशं जायते वपुः।
स्नायवोऽस्थीनि मज्जा च जायंते पितृतस्तथा।। ९।।

माता च पिता च पितरौ। ताभ्यामशिताद् भुक्तादन्नात् षट्कोशं वपुर्जायते। षट्कोशं षण्णांस्नाय्वादीनां अग्रे वक्ष्यमाणानां कोशं आशयः, तादृशं वपुर्जायते। नपुंसकत्वं तु कोशोऽस्त्रीत्यादि दौर्गादवधेयम्। उक्तानां स्नाय्वादीनां पितृतो मातृतश्च क्रमेणोत्पत्तिप्रकारमाह—स्नायवोस्थीनीत्यादि—स्नायवो वस्नसाः '**अथवस्नसाः स्नायुः स्त्रिया**' मित्यमरः, वस्ते आच्छादयति कायं वस्नसा, हस्ताद्यंगं स्नायतीति स्नायुः। ष्णैवेष्टने।

त्वगंतर्वर्तितंतुसदृशसिराविशेषाः, अस्थीनि मज्जा धातुविशेषः एतानि त्रीणि पित्रृतो जायंत इत्यर्थः ॥ ९ ॥

त्वङ्मांसशोणितमिति मातृतश्च भवंति हि।
भावास्युः षड्विधास्तस्य मातृजाः पितृजास्तथा ॥ १० ॥

त्वक्च मांसं च शोणितं च त्वङ्मांसशोणितं—इति त्रीणि मातृतश्च भवंति, हिः प्रसिद्धौ। भावास्युरित्यादि—तस्य वपुषः मातृजाः पितृजाः तथा अन्ये रसादयश्चत्वारः। एवं मिलिताः षड्विधा भावास्युरित्यर्थः ॥ १० ॥

तत्र मातृजान् भावानाह—मृदव इत्यादि—

मृदवः शोणितं मोदो मज्जा प्लीहा यकृद् गुदम्।
हृन्नाभीत्येवमाद्यास्तु भावा मातृभवा मताः ॥ ११ ॥

शोणितं रक्तं मेदो वपा मज्जा धातुविशेषः, प्लीहा गुल्मः हृदो वामभागस्थ-पीतवर्णं मांसपिंडविशेषः, यकृत् दक्षिणपार्श्वस्थित मांसपिंड विशेषः। गुदमपानं। हृत् हृत्कमलं, नाभीत्येवमाद्या ये मृदवः कोमला भावा ते मातृभावाः मातृजा मताः संमताः ॥ ११ ॥

पितृजानाह—श्मश्रुलोमेत्यादि—

श्मश्रु लोम करस्नायु शिरा धमनयो नखाः।
दशनाः शुक्लमित्यादि स्थिराः पितृसमुद्भवाः ॥ १२ ॥

श्मश्रु पुंमुखे वृद्धिगतलोमविशेषः, कचः केशः, स्नायुः व्याख्यातं शिरा नाडी धमनयः अग्निबोधक धमनीसाम्याद्धमनयः सुषुम्नादयः नखाः दशना दंताः शुक्लं चरमधातुः इत्यादिस्थिरा दृढा ये भावाः ते पितृसमुद्भवाः पितृतो जायंत इत्यर्थः ॥ १२ ॥

भावांतरमाह—शरीरोपचितिरिति—

शरीरोपचितिर्वर्णा वृद्धिस्तृप्तिर्बलं स्थितिः।
अलोलुपत्वमुत्साह इत्यादीन्रसजान् विदुः ॥ १३ ॥

इच्छा द्वेषः सुखं दुःखं धर्माधर्मौ च भावना।
प्रयत्नो ज्ञानमायुश्चेंद्रियाणीत्येवमात्मजाः॥ १४॥

इच्छेत्यादि इच्छा रागः द्वेषः हिंसानुकूलव्यापारविशेषः सुखं दुःखं धर्मः अधर्मः भावना संस्कारः प्रयत्नः कृतिः ज्ञानं बुद्धिः आयुः परमायुः इन्द्रियाणि वक्ष्यमाणानीत्येवमात्मजा भावाः॥ १४॥

पूर्वोक्तानीन्द्रियाणि कानि ? इत्यपेक्षायामाह—ज्ञानेन्द्रियाणीत्यादि—

ज्ञानेन्द्रियाणि श्रवणं स्पर्शनं दर्शनं तथा।
रसनं घ्राणमित्याहुः पंच तेषां तु गोचराः॥ १५॥

श्रवणं श्रोत्रं, स्पर्शनं त्वक्, दर्शनं चक्षुः, रसनं जिह्वा, घ्राणं नासेति ज्ञानेन्द्रियाणि पंचेति शास्त्रादावाहुः॥ १५॥

शब्दः स्पर्शस्तथा रूपं रसो गंध इति क्रमात्।
वाक्करांघ्रि गुदोपस्थान्याहुः कर्मेन्द्रियाणि हि॥ १६॥

ज्ञानेन्द्रियाणां गोचराः विषयाः पंच, ते च शब्दस्पर्शरूपरसगंधाः इत्याहुरित्यनुषज्यते। ज्ञानेन्द्रियाणि पंच तद्विषयांश्चोक्त्वा कर्मेन्द्रियाणि तत्कार्याणि चाह—वागिति, वाक् वागिन्द्रियम्॥ १६॥

वचनादानगमन विसर्ग रतयः क्रमात्।
क्रियास्तेषां मनो बुद्धिरहंकार स्ततः परं॥ १७॥

वचनं शब्दव्यापारः, आदानमुपादानं, गमनं गतिः, विसर्गोमलोत्सर्गादिः, रतिः सुखविशेषः, एताः पंच तेषां कर्मेन्द्रियाणां क्रियाः कार्याणि। भावान्तरमाह—मनो बुद्धीत्यादिना। अत्र यद्यपि अंतःकरणस्य इन्द्रियतया पार्थक्येन भावांतर गणनानुपपत्तिः—

तथापि वेदांतनये मनसस्त्विन्द्रियत्वे मानाभावात् अहं सुखी अहं दुःखीत्यादि प्रत्यक्ष विषयत्वेनेंद्रियत्व-विरोधाच्च। "**मनष्षष्ठानींद्रियाणी**"**ति** भगवद्वचनात् मन आदाय षष्ठेन्द्रियत्व-विधानात् मनसः इन्द्रियत्वमवसीयते इति चेन्न—अनिंद्रियेणापि मनसा षट्संख्या पूरणा विरोधात्। यथा यजमानपंचमा इडां भक्षयंतीत्यत्र ऋत्विग्गत पंचत्व संख्यायाः अनृत्विजापि यजमानेन। एवं "**वेदानध्यापयामास महाभारत**

**पंचमीन** "त्यत्र वेदगतपंचत्व-संख्यायाः अवेदेनापि भारतेन पूरणं तथा प्रकृतेपि मन आदाय षट्संख्यापूरणं इति नविरोधः। "**इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्चपरं मनः**" इत्यादि श्रुतिः, "**इन्द्रियाणि पराण्याहुः इन्द्रियेभ्यः परं मनः**" इत्यादि भगवद्वचनमपि मनसोऽनिन्द्रियत्वे मानमिति ॥ १७ ॥

अंतःकरणमित्याहुः चित्तं चेति चतुष्टयम्।
सुखं दुःखं च विषयौ विज्ञेयौ मनसः क्रियाः ॥ १८ ॥

अंतःकरणेति—व्याख्यातमेतत्, सुखंदुःखं च तस्यांतःकरणस्य विषयौ मनसः अंतःकरणस्य क्रियाः ॥ १८ ॥

स्मृति-भीति-विकल्पाद्याः बुद्धिस्स्यान्निश्चयात्मिका।
अहं-ममे-त्यहंकारश्चित्तं चेतयते यतः ॥ १९ ॥

स्मृति-भीति-विकल्पात्मकं मनः, निश्चयात्मिकाबुद्धिः, अहं ममेत्याकारकोऽहंकारः, यतस्श्चेतयते चित्तमिति, एतत्सर्वं मनसोऽन्तःकरणस्य क्रियेति ॥ १९ ॥

भावांतरमाह—

सत्वाख्यमंतःकरणं गुणभेदात् त्रिधा मतम्।
सत्वं रजस्तम इति गुणाः सत्वात्तु सात्विकाः ॥ २० ॥

अंतःकरणं सत्वाख्यं, सत्वं आख्या नाम यस्य तत् सत्वाख्यमन्तःकरणं "**तदेतत् सत्वं येन स्वप्नं पश्यती**"ति श्रुत्या अंतःकरणस्य सत्व शब्देनाभिधानात्। तच्चांतःकरणं सत्वं रजस्तम इति गुणभेदात् त्रिविधं सत्वात्तु सात्विकाः सत्वात् सत्वरूपगुणात् सात्विका भावा जायंते ॥ २० ॥

अत्र सात्विकान् भावानाह—आस्तिक्येत्यादि—

आस्तिक्य-शुद्धि-धर्मैक-रुचि प्रभृतयो मताः।
रजसो राजसा भावाः कामक्रोधमदादयः ॥ २१ ॥

आस्तिक्यं परलोकोऽस्तीति बुद्धिः। शुद्धिः अंतःकरणस्य नैर्मल्यं। धर्मैकरुचिः धर्मे एका प्रकृष्टा रुचिः इच्छा तत्प्रभृतयः दानादयः दाक्षिण्ये-

त्यादयो मताः। सर्वसंमता भावाः क्वचिद्धर्मैकमति प्रकृतय इति पाठः। तत्र धर्मैकमति प्रकृतिः धर्मैकमति स्वभाव इत्यर्थः। अत्र आस्तिक्यादयो भावाः सत्वगुणोपाधिकाः, सुखदुःखादिकं तु अंतःकरणौपाधिकं न तु सत्वगुणोपाधिकमिति, अतएव सत्वाख्यमंतः करणमित्युक्तमिति द्रष्टव्यं, रजसोराजसा इति—कामक्रोधादयो भावाः अत्र आदिपदात् लोभमात्सर्यादीनां परिग्रहः, एते भावाः रजसोऽसाधारण-गुण-जन्यतया राजसा इति ॥ २१ ॥

**निद्रालस्य-प्रमौढ्यादि-वंचनाद्यास्तु तामसाः।**
**प्रसन्नेंद्रियतारोग्यानालस्याद्यास्तु सत्वजाः ॥ २२ ॥**

निद्रेत्यादि—निद्रा स्वप्नवहनाड्यंतःकरण संयोगः। स्वप्नरूपभ्रम जनकीभूतदोष विशेषो निद्रा। आलस्यं तत्तत्कार्यविशेषेऽलसता, प्रमौढ्यं प्रकृष्टो मोहः। आदिपदात् प्रमादादि परिग्रहः। वंचना परप्रतारणा—इत्यादयो भावाः तमोगुणप्रधानत्वेन तामसा इति। अत्र सिंह गुहावलोकनन्यायेनाह—प्रसन्नेंद्रियतेत्यादि—प्रसन्नेंद्रियता प्रसन्नानींद्रियाणि यस्य तस्य भावः प्रसन्नेंद्रियता। निर्दोषेंद्रियत्वमिति यावत्, आरोग्यं व्याधिराहित्यं अनालस्यं पूर्वोक्तालस्यविरहः, इत्यादयो भावाः सत्वगुणप्रधानत्वेन सात्विकाः। एतावता ग्रंथसंदर्भेण षढ्भावा निरूपिता इति ध्येयम् ॥ २२ ॥

अत्र स्थूलदेहस्य पंचजन्यभूतत्वेन पंचभूतगुणान् तदतिरिक्तगुणानादत्ते, इत्याशंकया आह—देहोमात्रात्मकेत्यादि—

**देहो मात्रात्मकस्तस्मादादत्ते तद्गुणानिमान्।**
**शब्दः श्रोत्रं मुखरता वैचित्र्यं सूक्ष्मता धृतिः ॥ २३ ॥**

देहः स्थूलो देहः यतो मात्रात्मकः, स्थूल पंचभूतात्मकः, तस्मादिमान् तद्गुणान् भूतगुणानादत्ते, कारणगुणो हि कार्ये गुणांतरमारभत इति—अत्र कस्माद् भूताद्देहः कंगुणमादत्ते? इत्यपेक्षायामाह—शब्द इत्यादि—शब्दो-वर्णात्मकोध्वन्यात्मकश्च। श्रोत्रं तद्ग्राहकमिंद्रियं, मुखरता वावदूकता तद्वैचित्र्यं स्पष्टास्पष्टादिरूपेण विलक्षणत्वं, सूक्ष्मता स्वल्पता, धृतिः धैर्यं धारणशक्तिर्वा ॥ २३ ॥

बलं च गगनाद्वायोः स्पर्शं च स्पार्शनेन्द्रियं।
उत्क्षेपणमवक्षेपाकुंचने गमनं तथा।। २४।।

प्रसारणमितीमानि पंच कर्माणि रूक्षतताम्।
प्राणापानौ तथाव्यान समानोदानसंज्ञकात्।। २५।।

बलं सामर्थ्यं एतान् गुणान् देह आदत्ते, वायुगुणानाह—स्पर्शं चेत्यादि स्पर्शं सुकुमारादिकं स्पार्शानेन्द्रियं, त्वगिन्द्रियं उत्क्षेपणेत्यादि—उत्क्षेपणं ऊर्ध्वक्षेपणं अवक्षेपणं अधःक्षेपणं आकुंचनं संकुचीकरणं गमनं भ्रमणरेचनादिकं प्रसारणं विकासीकरणमिति पंच कर्माणि रूक्षतां अस्निग्धतां शुष्कतां वा वायोर्देह आदत्त इत्यर्थः।। २४।।

प्राणेत्यादि प्राणमपानं तथा व्यानं उदानं च।। २५।।

नागं च कूर्मं कृकरं देवदत्तं धनंजयम्।
दशेति वायुविकृतीस्तथा गृह्णाति लाघवम्।। २६।।

एवं नागं कूर्मं कुकरं देवदत्तं धनंजयं तत्तत्संज्ञाकान् वायुविकृतीः दश, तथा लाघवं लघुता उत्प्लवनादि सामर्थ्यं गृह्णाति देह इत्यनुषज्यते।। २६।।

अत्र प्राणापानादीनां तत्तस्थानमाह—तेषामित्यादिना—

तेषां मुख्यतरः प्राणो नाभेः कंठादवस्थितः।
चरत्यसौ नासिकयोर्नाभौ हृदयपंकजे।। २७।।

तेषां प्राणादीनां मध्ये प्राणो मुख्यतरः श्रेष्ठतमः नाभेः कंठादवस्थितः नाभिं कंठं च व्याप्य तिष्ठतीत्यर्थः। ल्यब्लोपे कर्मणि पंचमी चरत्यसावियादि—असौ प्राणो नासिकयोः नासारंध्रयोः नाभौ हृदयपंकजे चरति।। २७।।

शब्दोच्चारण निश्वासोच्छ्वासादेरपि कारणम्।
अपानस्तु गुदे मेढ्रे कटि-जंघोदरेष्वपि।। २८।।

शब्दोच्चारणेत्यादि—शब्दोच्चारणं शब्दानामुच्चारणं, निश्श्वासः उच्छ्वासश्चेत्यादेरपि कारणं। सप्राण इति—अपानस्य स्थानमाह—अपानस्त्विवति। गुदे मेढ्रेकटिजंघोदरेष्वपि कटिजंघाविशिष्टोदरे इति मध्यमपदलोपी समासः। तथा च कटि देशे जंघयोः उदरे तिष्ठति ॥ २८ ॥

नाभिकंदे प्रेक्षणयो रूरु जानुषु तिष्ठति।
प्राणायाम धृति त्याग ग्रहणाद्यस्य कर्म च ॥ २९ ॥

(तस्य मूत्रपुरीषादि विसर्गः कर्म कीर्तिततम्।
व्यनोऽक्षि श्रोत्रगुल्फे च जंघाघ्राणेषु तिष्ठति ॥)

नाभि कंदे नाभिमूले प्रेक्षणयोश्चक्षुषोर्द्वयोः ऊरुजानुषु ऊरुविशिष्ट-जानुषु ऊरुषु जानुषु चेत्यर्थः। अस्यापानस्य धृतित्याग ग्रहणादि—धृतिः वायोस्तंभनं त्यागः रेचनं ग्रहणं पूरणं तद्रूपो यः प्राणायामः तदुक्तं **अमृतनादोपनिषदि "रुचिरं रेचनं चैव वायोराकर्षणं तथा। प्राणायामास्त्रयः प्रोक्ता रेचक पूरक कुंभका।"** इति। अस्या पानस्य कर्म कार्यं ग्रहणादीत्यादि पदात् तत्तत्स्थानस्थित-निबंधन-तत्तत्कार्य-परिग्रहः ॥ २९ ॥

समानस्य प्राणस्य स्थानं कार्यं चाह—

समानो व्याप्य निखिलं शरीरं वह्निना सह।
द्विसप्तति-सहस्रेषु नाडीरंध्रेषु संचरन् ॥ ३० ॥

भुक्तपीतरसान् सम्यक् आनयन् देहपुष्टिकृत्।
उदानः पादयोरास्ते हस्तयोरंगसंधिषु ॥ ३१ ॥

समानः समानाख्यः प्राणः द्विसप्तति-सहस्रेषु नाडीरंध्रेषु निखिलं शरीरं तावन्नाडीरंध्रावच्छिन्न-निखिलं शरीरमित्यर्थः। व्याप्य वह्निना जठरानलेन सह संचरन् भुक्तपीतरसान् भुक्तं पीतं च, यत् भुक्तं, यत्पीतं, ताभ्यां ये रसास्तान् सम्यगानयन् समानं कुर्वन् देहपुष्टिकृद् भवतीत्यर्थः। अतएव समानस्य व्यानाद्विशेषः। तस्य सकलनाड्यवच्छिन्न सकल शरीर व्यापकत्वात्। समानस्य तु द्विसप्तति सहस्रनाडीमात्रावच्छिन्न-शरीर-

व्यापकत्वादिति। अत एवास्यैव समानस्य सकलनाड्यवच्छिन्न-सकल शरीर व्यापकत्वेन व्यानसंज्ञेत्यतः व्यानस्य स्थानं कार्यं च पृथक्त्वेन नोक्त-मिति ध्येयम् ॥ ३० ॥

उदानस्य स्थानं कार्यं चाह—उदान इत्यादि। उदानाख्यः प्राणः पादयोर्हस्तयोरंगसंधिष्वास्ते तिष्ठति ॥ ३१ ॥

कर्मास्य देहोन्नयनोत्क्रमणादि प्रकीर्तितम्।
त्वगादि-धातूनाश्रित्य पंच नागादयः स्थिताः ॥ ३२ ॥

अस्योदानस्य देहोन्नयनोत्क्रमणादि देहस्य यदुन्नयनं ऊर्ध्वंगमनं उत्क्रमणमुल्लंघनं तदेव कर्म कार्यं परिकीर्तितमित्यर्थः। आदिपदाद्-भ्रमणादि परिग्रहः। अत्र पूर्वोक्तनागादीनां स्थानं कार्यं चाह—त्वगा-दीत्यादि। नागादयः पंच प्राणाः त्वगादिधातूनाश्रित्य स्थिताः तिष्ठंति ॥ ३२ ॥

तेषां यथाक्रमं तत्तत्कार्यमाह—उद्गारादीत्यादि—

उद्गारादि-निमेषादि-क्षुत्पिपासादिकं क्रमात्।
तंद्री-प्रभृति-शोकादि-तेषां कर्म प्रकीर्तितम् ॥ ३३ ॥

नागस्य कार्यमुद्गारादि, कूर्मस्य कार्यं निमेषादि, कुकरस्य कार्यं क्षुत्पिपासादि, देवदत्तस्य कार्यं तंद्री प्रभृति, धनंजयस्य कार्यं शोकादि। अत्र सर्वत्रादिपदान्नागादीनां योगशास्त्रानुसारेण तत्तत्कार्यं बोध्यमिति ॥ ३३ ॥

अत्राकाश-वायु-धर्मानुक्त्वा तेजोधर्मानाह—अग्नेस्त्वित्यादि—

अग्नेस्तु रोचकं रूपं दीप्तं पाकं प्रकाशताम्।
अमर्षतीक्ष्णसूक्ष्माणामोजस्तेजश्च शूरताम् ॥ ३४ ॥

मेधावितां तथा धत्ते जलात्तु रसनं रसम्।
शैत्यं स्नेहं द्रवं स्वेदं गात्रादि मृदुतामपि ॥ ३५ ॥

रोचकं रोचकाग्नि रूपं दीप्तं उद्दीप्तं उज्वलं रूपमित्यर्थः। पाकं पाचकाग्नि जठरानलमिति यावत्। प्रकाशतां प्रकाशं चक्षुरित्यर्थः, भावार्थो- न विवक्षितः। अमर्षः क्रोधः, तीक्ष्णं तीक्ष्णत्वं पराभिभावकत्वं, सूक्ष्मं सूक्ष्मत्वं कृशत्वं वा, अत्र द्वितीयास्थाने षष्ठी, ओजः बलं तेजः तेजस्वित्वं शूरतां शौर्यं मेधावितां शब्दार्थयोर्धारण-शक्तिविशेषं, अग्नेस्सकाशा- दादत्ते देह इत्यनुषज्यते। अत्र जलगुणानाह—जलात्त्वित्यादिना—रसनं रसग्राहकमिंद्रियं, रसं मधुरादि, शैत्यं शीतस्पर्शनत्वं, स्नेहं स्निग्धत्वं, द्रवं द्रवत्वं, स्वेदं देहे घर्मोदकं, गात्रादि मृदुतां गात्रादौ कोमलतां। आदिपदात् करचरणादि परिग्रहः, तथा च गात्रस्य शरीरस्य तदवयवानां करचरणादीनां मृदुतामपि जलाद्देह आदत्त इत्यर्थः॥ ३५॥

पृथिवीगुणानाह—भूमेरित्यादिना—

**भूमेर्घ्राणेंद्रियं गंधं स्थैर्यं धैर्यंच गौरवम्।**
**त्वगसृङ्मांसमेदोस्थि-मज्जा-शुक्लादि-धातवः॥ ३६॥**

घ्राणं गंधग्राहकमिंद्रियं, गंधः सौरभादि, स्थैर्यं स्थिरतां, धैर्यं धीरत्वं, गौरवं गुरुत्वं, भूमेः देह आदत्त इत्यर्थः। अत्र नागादि पंच प्राणानां आश्चर्य- भूतान् त्वगादि सप्तधातून् तदुत्पत्तिप्रकारं चाह—त्वगसृङ्मांसेत्यादिना॥ ३६॥

**अन्नं पुंसाशितं त्रेधा जायते जठराग्निना।**
**मलं स्थविष्ठो भागः स्यान्मध्यमो मांसतां व्रजेत्॥ ३७॥**

पुंसा अशितं भुक्तमन्नं जठराग्निना त्रेधा जायते। प्रकारत्रयमेव विवृणोति—मलमिति, स्थविष्ठः स्थूलो भागः मलं भवति। मध्यमो भावः मांसतां व्रजेत् मांसं भवतीत्यर्थः॥ ३७॥

**मनः कनिष्ठो भागः स्यात् तस्मादन्नमयं मनः।**
**अपां स्थविष्ठो मूत्रं स्यामध्यमो रुधिरं भवेत्॥ ३८॥**

कनिष्ठो भागः मनः स्यात्, तस्मान्मनो अन्नमयं स्यात्। अपां स्थविष्ठो भागो मूत्रं स्यात्, अपां मध्यमो भागो रुधिरं भवेत्॥ ३८॥

कनिष्ठ-भागः प्राणः स्यात् तस्मात्प्राणो जलात्मकः।
तेजसोऽस्थि स्थविष्ठं स्यान्मज्जा मध्यसमुद्भवः॥ ३९॥

अपां कनिष्ठो भागः प्राणः स्यात्। तस्माज्जलात्मकः प्राण इत्यर्थः, तेजसः स्थविष्ठो भागो अस्थि भवति, तेजसो मध्यभागसमुद्भवा मज्जा॥ ३९॥

अणिष्ठो वाङ्मता तस्मात् तेजोबन्नात्मकं जगत्।
लोहिताज्जायते मांसं मेदो मांससमुद्भवम्॥ ४०॥

तेजसोऽणिष्ठः कनिष्ठो भागः वाक् मता संमता, तस्मात्तेजोबन्नात्मकं जगत्, जगत् तेजआत्मकं। अबात्मकमन्नात्मकं चेति, जगत् गच्छतीति जगत्। जंगमशरीरमिति यावत्, लोहिताद्रक्तात्मकान्मांसं जायते, मांसान्मेदसः समुद्भवः॥ ४०॥

मेदसोऽस्थीनि जायंते मज्जा त्वस्थिसमुद्भवा।
नाड्योपि मांससंघाताच्छुक्लं मज्जासमुद्भवम्॥ ४१॥

मेदसो अस्थीनि जायंते, अस्थिभ्यो मज्जायाः समुद्भवः। द्विसप्तति सहस्रेषु नाडीरंध्रेष्विति पूर्वमुक्तं। तत्र सिंहावलोकनन्यायेन नाडीनामुत्पत्ति प्रकारमाह—नाड्योपीत्यादि, मांससंघातात् नाड्योपि जायंत इत्यर्थः। शुक्लं च चरम-धातुरूपं, मज्जायाः समुद्भवः यस्य तत् मज्जा समुद्भवं॥ ४१॥

अत्र अन्यानपि शरीरस्थान् धातूनाह—वातेत्यादि—

वातपित्तकफाश्चात्र धातवः परिकीर्तिताः।
दशांजलि जलं ज्ञेयं रसस्यांजलयो नव॥ ४२॥

दशांजलि परिमितं, जलं, रसस्य नवांजलयः॥ ४२॥

रक्तस्याष्टौ पुरीषस्य सप्त स्युः श्लेष्मणश्च षट्।
पित्तस्य पंच चत्वारो मूत्रस्यांजलयः स्मृताः॥ ४३॥

रक्तस्य अष्टौ अंजलयः, पुरीषस्य सप्तांजलयः, श्लेष्मणश्च षडंजलयः, शरीरे स्युः तिष्ठंतीत्यर्थः। पित्तस्येत्यादि—पित्तस्य पंचांजलयः, चत्वारो मूत्रस्यांजलयः, त्रयो वसाया अंजलयः ॥ ४३ ॥

वसाया मेदसो द्वौतु मज्जात्वंजलि संमितः।
अर्धांजलि ततः शुक्लं तदेव बलमुच्यते ॥ ४४ ॥

मेदसो द्वावंजली, मज्जात्वंजलिसंमितः, मज्जांजलिपरिमितः, शुक्ल मर्धांजलि, अंजलेः अर्धं अर्धांजलि तदेव शुक्लं बलमित्युच्यते ॥ ४४ ॥

अस्थ्नां शरीरे संख्या तु षष्टियुक्तं शतत्रयम्।
जलजानि कपालानि रुचकास्तरुणानि च ॥ ४५ ॥

अस्थ्नामित्यादि—अस्थ्नां षष्टीयुक्तं शतत्रयं षष्टयधिकशतत्रय-मित्यर्थः, तावत्संख्याकान्यस्थीनि शरीरे तिष्ठंतीत्यर्थः। तानि अस्थीनि पंचसंज्ञकानीत्याह—कानिचिदस्थीति जलजानि, कानि चित् कपालानि, कानि चित् रुचकाः, कानि चित् तरुणानि ॥ ४५ ॥

नवकानीति तान्याहुः पंचधास्थीनि सूरयः।
द्वे शते त्वस्थिसंधीनां स्यातां तत्र दशोत्तरे ॥ ४६ ॥

कानि चित् नवकानीति—पंचधास्थीनि सूरयः आहुः। अत्र शरीरे अस्थिसंधिं तत्संख्यां चाह—द्वे शत इत्यादिना—अस्थिसंधीनां तत्र शरीरे दशोत्तरे द्वे शते स्यातां तिष्ठत इत्यर्थः ॥ ४६ ॥

रौरवाः प्रसरास्तुंद-सेचनास्स्युरुलूखलाः।
समुद्रामंडला शंखावर्ता वायनकुंडलाः ॥ ४७ ॥

तत्र दशोत्तर शतद्वये प्राधान्येनाष्टविधत्वमाह—रौरवा इत्यादि। रौरवाः रौरवाख्याः प्रसराः, एवं तुंदसेचनाः, एवमुलूखलाः, समुद्राः, एवं मंडलाः एवं शंखावर्ताः, एवं वायनकुंडलाः ॥ ४७ ॥

इत्यष्टधा समुद्दिष्टाः शरीरे त्वस्थिसंधयः।
सार्धकोटित्रयं रोम्णां श्मश्रुकेशास्त्रिलक्षकाः ॥ ४८ ॥

इत्यष्टविधा अस्थिसंधयः शरीरे समुद्दिष्टाः। सार्धेत्यादि—रोम्णां सार्धकोटित्रयं, श्मश्रुकेशास्त्रिलक्षकाः, लक्षत्रयपरिमितं श्मश्रु, लक्षत्रय-परिमिताः केशा इत्यर्थः ॥ ४८ ॥

देहस्वरूपमेवं ते प्रोक्तं दशरथात्मज!।
यस्मादसारो नास्त्येव पदार्थो भुवनत्रये ॥ ४९ ॥

हे दशरथात्मज! एवं पूर्वोक्तप्रकारेण ते देहस्वरूपमुक्तं, यस्मा-दित्यादि-भुवनत्रये यस्माद्देहादसारः पदार्थो नास्ति ॥ ४९ ॥

देहेऽस्मिन्नभिमानेन न महोपायबुद्धयः।
अहंकारेण पापेन क्रियंते हंत सांप्रतम्।
तस्मादेतत्स्वरूपंतु विबोद्धव्यं मनीषिभिः ॥ ५० ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु शरीरनिरूपणंनाम
नवमोऽध्यायः

अस्मिन्नसारे देहे अभिमानेन देहात्माभिमानेन महोपाय-बुद्धयः महानुपायः मोक्षोपायः तद्विषयिण्यः बुद्धयः पापेन पापविशिष्टेनाहंकारेण सांप्रतं मोक्षयोग्य शरीरप्राप्तावपि न क्रियंते, तस्मादेतत्स्वरूपं देहस्य स्वरूपं मनीषिभिः पंडितैर्विबोद्धव्यं, बुद्ध्वा मोक्षार्थं यतनीयमिति ॥ ५० ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
नवमोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## दशमोऽध्यायः

श्रीराम उवाच—

भगवन्नत्र जीवोऽसौ जंतोर्देहेऽवतिष्ठते ।
जायते वा कुतो जीवः? स्वरूपं चास्य किं? वद ।। १ ।।

हे भगवन् अत्र देहेऽसौ पूर्वोक्त जीवः कुतः कथं वाऽवतिष्ठते ? कथं वा जायते ? अस्य जीवस्य किं वा स्वरूपम् ।। १ ।।

देहांते वा कुतो याति गत्वा वा कुत्र तिष्ठति ।
कथमायाति वा देहं ? पुनर्न यदि वा वद ।। २ ।।

देहांते पूर्वदेहत्यागानंतरं कुत्र याति ? गत्वा कुत्र वा तिष्ठति ? तत्र स्थित्वा कुतः पुनः देहांतरमायाति ? यदि वा नायाति । एतत्सर्वं कथम् इत्यत्रोत्तरं वदेति रामप्रश्ने श्रीभगवानाह—।। २ ।।

श्री भगवानुवाच—

साधु पृष्टं महाभाग! गुह्याद् गुह्यतमं हि तत् ।
देवैरपि सुदुर्ज्ञेयमिंद्राद्यैर्वा महर्षिभिः ।। ३ ।।

साधु पृष्टमित्यादि—हे महाभाग ! गुह्याद् गुह्यतमं यत् वय पृष्टं तत् साधु सुसमीचीनमित्यर्थः, इंद्राद्यैर्देवैरपि । अपि शब्दाद् गंधर्वादि परिग्रहः । महर्षिभिर्वा दुर्ज्ञेयमति कष्टेन ज्ञेयम् ।। ३ ।।

अन्यस्मै नैव वक्तव्यं मयापि रघुनंदन ! ।
त्वद्भक्त्याहं परं प्रीतो वक्ष्याम्यवहितः शृणु ।। ४ ।।

अन्यस्मै मयापि न वक्तव्यं, हे रघुनंदन! त्वद्भक्त्याहं परं प्रीतस्सन् तद्वक्ष्यामि, त्वमवहितोऽवधानविशिष्टस्सन् शृण्वित्यर्थः ।। ४ ।।

अत्र रामप्रश्ने पूर्वोक्तसच्चिदानंदरूपानुवादपूर्वकं ईश्वर उत्तरमाह—सत्यज्ञानेत्यादि—

सत्यज्ञानात्मकोऽनंतः सपरानंदविग्रहः।
परमात्मा परंज्योतिरव्यक्तो व्यक्तिकारणम् ॥ ५ ॥

सः परमात्मा सत्यज्ञानात्मकः, अनंतः न विद्यते अंतो नाशो यस्य तादृशः, परानंदविग्रहः, परो निरतिशयः आनंदः तत्स्वरूप इत्यर्थः। परं ज्योतिः स्वप्रकाशरूपः। अव्यक्तो दुर्ज्ञेयः, व्यक्तिकारणं व्यक्तिः अभिव्यक्तिः। तत्कारणं सकल प्रपंचाभिव्यक्ति कारणमित्यर्थः ॥ ५ ॥

नित्यो विशुद्धः सर्वात्मा निर्लेपोहं निरंजनः।
सर्वधर्मविहीनश्च न ग्राह्यो मनसापि च ॥ ६ ॥

नित्यः सार्वकालिकः, शुद्धः अविद्याकार्यरहितः, सर्वात्मा सर्वव्यापकः, निर्लेपो धर्माधर्मरहितः, निरंजनः असंगः, सर्वधर्मविहीनः निर्धर्मक इत्यर्थः। न ग्राह्यो मनसापि च मनसापि न ग्राह्यः चकाराद्वाचा न ग्राह्य इत्यर्थः। इदं, त्वसंस्कृतमनोविषयमिति द्रष्टव्यम् ॥ ६ ॥

नाहं सर्वेन्द्रियग्राह्यो सर्वेषां ग्राहकोऽह्यहम्।
ज्ञाताहं सर्वलोकस्य मम ज्ञाता न विद्यते ॥ ७ ॥

नाहमित्यादि—अहं सर्वेन्द्रियग्राह्यो न। मनसस्तु इंद्रियत्वाभावात् पृथगुपादानमिति ध्येयं, सर्वेषां ग्राहकोऽह्यहं सर्वेषां मनःप्रभृतीनां ग्राहकाणाम् अहं ग्राहकः, ज्ञाताहं सर्वलोकस्य सर्वस्य लोकस्य चराचरस्याहं ज्ञाता, साक्षिरूप इत्यर्थः, मम ज्ञाता न विद्यते, मद्विषयक ज्ञानवानन्यो नास्तीत्यर्थः ॥ ७ ॥

दूरः सर्वविकाराणां परिणामादिकस्य च ॥ ८ ॥

दूरः सर्वविकाराणां सर्वेषां विकाराणां विक्रियमाणानां दूरस्तदभावरूपः। "**प्रपंचोपरमः शिव**"इति श्रुतेः। एतेन निष्प्रपंचत्वंसूचितमिति ध्येयं। परिणामादिकस्य च परिणामादि षड्भाव विकारस्य दूरस्तद्रहित इत्यर्थः ॥ ८ ॥

यतो वाचो निवर्तंते अप्राप्य मनसा सह।
आनंदं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन॥ ९॥

यत इत्यादि षष्ठाध्याये व्याख्यातमेतत्॥ ९॥

यस्तु सर्वाणि भूतानि मय्येवेति प्रपश्यति।
मां च सर्वेषु भूतेषु ततो न विजुगुप्सते।॥ १०॥

यस्त्वित्यादि—यः सर्वाणि भूतानि मय्येव प्रपश्यति, प्रकर्षेण पश्यति, मय्येवाध्यस्तानि तादात्म्येन यः पश्यति, मां च सर्वभूतेषु यः पश्यति, स ततो ब्रह्माभिन्नत्वज्ञानात् न विजुगुप्सते किमपि न निन्दतीत्यर्थः॥ १०॥

यस्य सर्वाणि भूतानि ह्यात्मैवाभूद्विजानतः।
को मोहस्तत्र? कः शोक एकत्व मनुपश्यतः?॥ ११॥

यस्येत्यादि—एकत्वमनुपश्यत एकत्वप्रकारक ज्ञानवतः विजानत आत्म-स्वरूपविशेषज्ञानवतः यस्य सर्वाणि भूतानि स्वात्मैवाभूत् स्वात्म स्वरूपमभूत् तत्र पुरुषे को मोहः? कः शोकः? तत्र मोहः शोकश्च नास्तीत्यर्थः॥ ११॥

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥ १२॥

एष इत्यादि—एष परमात्मा सर्वेषु भूतेषु गूढः इंद्रियाग्राह्यः अतो न प्रकाशते। अतः इन्द्रियजन्यज्ञाने न भासते, किन्तु अग्र्यया बुध्या सूक्ष्मया श्रवणादिप्रयुक्तवृत्या सूक्ष्मदर्शिभिरद्वैतात्मविषयविचारशीलैः दृश्यते विषयीक्रियते॥ १२॥

अनाद्यविद्यया युक्तस्तथाऽप्येकोऽहमव्ययः।
अव्याकृत ब्रह्मरूपो जगत्कर्ता महेश्वरः॥ १३॥

अनाद्यविद्ययेत्यादि—अहमीश्वरः अनाद्यविद्यया युक्तस्सन् जगत्कर्ता तथाप्यव्याकृतब्रह्मरूपः अविकारि ब्रह्मस्वरूप इत्यर्थः। अविकारित्वे हेतुमाह—अव्यय इति॥ १३॥

ज्ञानमात्रे यथा दृश्यं इदं स्वप्ने जगत्रयम्।
तद्वन्मयि जगत्सर्वं दृश्यतेऽस्ति विलीयते।
नानाविद्यासमायुक्तो जीवत्वेन वसाम्यहम्॥ १४॥

ज्ञानमात्र इत्यादि—ज्ञानमात्रे ज्ञानस्वरूपे मयि, स्वप्ने इदं जगत्रयं यथादृश्यं, तद्वज्जगत्सर्वं मयि दृश्यते अस्ति विलीयते, तथा च मयि स्वप्न दृष्टप्रपंचस्य मिथ्यात्ववत् जाग्रद्दशायामपि मयि दृष्टप्रपंचस्य मिथ्यात्वमिति ध्येयं। नानेत्यादि—नानाविद्या, नानाविध शक्तिमती या अविद्या अनाद्यविद्या तत्समायुक्तः तत्प्रतिबिंबितस्सन् अहं जीवत्वेन वसामि, जीवतया व्यवहार विषयो भवामीत्यर्थः **"तथा-जायते वा कथं जीवः स्वरूपं वा अस्य किं वदेति"** रामप्रश्नद्वये सच्चिदानंदरूप परमात्मैव जीवः, अतएव पूर्वोक्त परमात्मस्वरूपानुवादपूर्वकमुत्तरमिति ध्येयम्॥ १४॥

पंच कर्मेंद्रियाण्येव पंच ज्ञानेंद्रियाणि च।
मनो बुद्धिरहंकारश्चित्तं चेति चतुष्टयम्॥ १५॥

ननूक्तरीत्या जीवस्य सच्चिदानंदरूपत्वेन न नश्यति नोत्पद्यते। तर्हि जीवो गच्छति म्रियते उत्पद्यते इत्यादि व्यवहारः कथमुपपद्यत इत्यत आह—पंचेत्यादि—पंच कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थ रूपाणि पंच ज्ञानेंद्रियाणि चक्षुस्त्वक् छोत्रघ्राणरसनानि मनो बुद्धिरहंकारश्चित्तं चेति चतुरवस्थमंतःकरणम्॥ १५॥

वायवः पंच मिलिता यांति लिंगशरीरताम्।
तत्राविद्यासमायुक्तं चैतन्यं प्रतिबिंबितम्॥ १६॥

वायवः पंच प्राणापान व्यानोदान समानाश्चेति, एते मिलिताः विशिष्टाः पदार्थाः लिंगशरीरतां यांति लिंगशरीरमिति व्यवहार विषयतां प्राप्नुवंतीत्यर्थः। तथा च तादृशलिंगशरीरमादाय गत्यागत्युत्पत्ति विनाशादि प्रत्ययो भविष्यतीति न विरोध इति भावः, तत्रेत्यादि—तत्र लिंगशरीरे अविद्यासमायक्तं अविद्याधिष्ठानं यच्चैतन्यं प्रतिबिम्बितम् ॥ १६॥

व्यावहारिक जीवस्तु क्षेत्रज्ञः पुरुषोऽपि वा।
स एव जगतां भोक्ताऽनाद्ययोः पुण्यपापयोः ॥ १७ ॥

स एव व्यावहारिकजीवः जीवत्वेन व्यवहारविषयः क्षेत्रज्ञः पुरुष इति चेति—स एवेत्यादि—स एव लिंगशरीर प्रतिबिंबितः जीवत्वेन व्यवहार-विषयः जगतां प्राणिनां अनाद्ययोः पुण्यपापयोः भोक्ता, यद्यपि पुण्य-पापयोः जन्यत्वान्नानाद्यत्वं, तथापि प्रवाहरूपेण तयोरनाद्यत्वं बोध्य-मिति ॥ १७ ॥

इहामुत्रगती तत्र जाग्रत्स्वप्नादि भोक्तृता।
यथा दर्पणकालिम्ना मलिनं दृश्यते मुखम् ॥ १८ ॥

इहामुत्रेति—इहास्मिन् लोके अमुत्र परस्मिन् लोके गती गमनमागमनं च तत्र लिंगशरीरावच्छिन्ने जीवे जाग्रत्स्वप्नादि भोक्तृत्वाज्जाग्रत्स्वप्नादौ जाग्रत्स्वप्नादि दशायां भोक्तृता भोगभागिता, आदिपदान्मूर्च्छादिपरिग्रहः। यथेत्यादि—दर्पणस्य कालिम्ना दर्पणस्थ मालिन्येन यथा प्रतिबिंबितं सुमुखं मलिनं दृश्यते मलिनतयोपलभ्यते ॥ १८ ॥

तद्वदंतःकरणगैर्दोषैरात्मापि दृश्यते ॥ १९ ॥

तद्वदात्मा निर्लेपोऽपि परमात्मा प्रतिबिंबितस्सन् अंतःकरणगैर्दोषैः अंतःकरणवृत्ति कामक्रोधादिरूपदोषैः दृश्यते तद्विशिष्टतया प्रतीयत इत्यर्थः ॥ १९ ॥

नन्वंतःकरणधर्माणां सुखदुःखकामक्रोधादीनां कथं परमात्मनि भाननम्—इत्यत आह—परस्परेत्यादि—

परस्पराध्यासवशात् स्यादंतःकरणात्मनोः।
एकीभावाभिमानेन परात्मा दुःखभागिव ॥ २० ॥

परस्पराध्यासवशात्, चैतन्यांतःकरणयोः परस्पराध्यासवशात् परस्पराध्यासमेव विवृणोति—अंतःकरणेत्यादिना—अन्तःकरणात्मनोरेकी-भावाभिमानेन एकीभावस्तादात्म्यं, तदभिमानेन परात्मा परमात्मा दुःख-भागिव लक्ष्यते, वास्तवतद्वत्वाभावः इवशब्देन द्योत्यत इति। अत्र दुःखपदं अंतःकरणधर्ममात्रोपलक्षकमिति ॥ २० ॥

मरुभूमौ जलत्वेन मध्याह्नार्कमरीचयः।
दृश्यंते मूढचित्तस्य न ह्यार्द्रास्तापकारकाः ॥ २१ ॥

मरुभूमावित्यादि—मध्याह्नार्कमरीचिकाः मरुभूमौ जलत्वेन दृश्यंते, मूढचित्तेनेति शेषः, तस्य मूढचित्तस्य ताः जलत्वेन गृहीताः मरीचयः तापकारकाः तापजनिकाः, न ह्यार्द्राः न जलकार्यकारिण्यः ॥ २१ ॥

तद्वदात्मापि निर्लेपो दृश्यते मूढचेतसाम्।
स्वाविद्यात्मात्मदोषेण कर्तृत्वादिक धर्मवान् ॥ २२ ॥

तद्वन्मूढचेतसां या स्वाविद्या, स्वविषयिणी अविद्या तदात्मा तत्स्वरूपोऽयं आत्मदोषः तेन निर्लेपोऽपि परमात्मा कर्तृत्वादिक धर्मवान् कर्तृत्वादि धर्मव्यवहारवान् भवतीत्यर्थः। कर्तृत्वादिकेत्यादिपदाद्भोक्तृत्वादि परिग्रहः, स्वार्थे कप्रत्ययः, तथा च यथा दोषवशात् मरीचिकायां स्वाभाविक तापकारित्वं, न तु जलकार्यकारित्वं, तद्वत्परमात्मनि निर्लेपत्वं। न तु वास्तवं कर्तृत्वादिकमिति भावः ॥ २२ ॥

अत्र जीवस्यावस्थान स्थानमाह—तत्रचेत्यादि—

तत्र चान्नमये पिंडे हृदि जीवोऽवतिष्ठते।
आनखाग्रं व्याप्य देहं तद्ब्रुवेऽवहितः शृणु ॥ २३ ॥

तत्र हृदि अन्नमयपिंडे अन्नमये शरीरे जीवोऽवतिष्ठते। ननु यदि-हृद्देशे जीवोऽवतिष्ठते, तर्हि करचरणाद्यवच्छेदेन सुखदुःखाद्युपलब्धिः कथं स्यात्? इत्यत आह—आनखेत्यादि—आनखाग्रं नखाग्राद्यवच्छिन्न शरीरदेशमभिव्याप्य देहेऽवतिष्ठते तथा च श्रुतिः—"**प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इति, स एष इह प्रविष्ट आनखाग्रेभ्य**" इति च। तद्ब्रुवे तत् आनखाग्रव्यापित्वं अहं ब्रुवे त्वमवहितः शृणु ॥ २३ ॥

सोऽयं तदभिमानेन मांसपिंडो विराजते।
नाभेरूर्ध्वं अधःकंठाद् व्याप्य तिष्ठति यस्तदा ॥ २४ ॥

सोयमित्यादि—यद्यस्मान्नाभेरूर्ध्वं कंठादधः देहं व्याप्य जीवः सदा तिष्ठति, अतस्तदभिमानेन जोवतादात्म्याभिमानेन मांसपिंडो विराजते

शोभते, तथा च तादृशाभिमानदशायामेव मांसपिंडस्य देहस्य विराज-मानत्वं तदभावदशायां मांसपिंडांतरवत् अविराजमानत्वं हेयत्वमिति भावः ॥ २४ ॥

तस्य मध्येऽस्ति हृदयं सनाळं पद्मकोशवत् ।
अधोमुखं च तत्रास्ति सूक्ष्मं सुषिरमुत्तमम् ॥ २५ ॥

तस्येत्यादि—तस्य मांसपिंडात्मकदेहस्य मध्ये सनाळं पद्मकोशवत् हृदयमस्ति—तिष्ठति। तत् कीदृशमित्यपेक्षायामाह—अधोमुखमिति। तत्र च सूक्ष्मं उत्तमं सुषिरं रंध्रमस्ति तिष्ठतीत्यर्थः ॥ २५ ॥

दहराकाशमित्युक्तं तत्र जीवोऽवतिष्ठते ॥ २६ ॥

दहराकाशेत्यादि—पूर्वोक्तं, सूक्ष्मसुषिरं तदेव दहराकाशमिति—तत्र दहराकाशे जीवोऽवतिष्ठते ॥ २६ ॥

अत्र पूवोक्तस्यैव जीवस्योपाधिना परिच्छिन्नत्वमाह—वालाग्रेत्यादि—

वालाग्र शतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानंत्याय कल्पते ॥ २७ ॥

वालः केशः, तस्य योऽग्रभागः तस्य यः शतभागः शतधा कल्पितस्य भागस्य यो भागः, एतेनातिसूक्ष्मत्वं प्रदर्शितमिति। स तादृशः सूक्ष्मो भागो जीवो विज्ञेयः, स च जीवः आनंत्याय अत्र स्वार्थेष्यङ्। अनंताय परमात्मरूपानंताय कल्पते समर्थो भवतीत्यर्थः ॥ २७ ॥

कदंबकुसुमोद्बुद्धकेसरा इव सर्वतः ।
प्रसृता हृदयान्नाड्यो याभिर्व्याप्तं शरीरकम् ॥ २८ ॥

कदंबेत्यादि—कदंब कुसुमे उद्बुद्धा ये केसराः त इव हृदयात् सर्वतः प्रसृताः नाड्यः तिष्ठंतीति शेषः। याभिर्नाडीभिः शरीरकं कुत्सितार्थे कः, तादृशं शरीरं व्याप्तमित्यर्थः ॥ २८ ॥

हितं बलं प्रयच्छंति यस्मात् तेन हिताः स्मृताः ।
द्वासप्तति सहस्रैस्ताः संख्याताः योगवित्तमैः ॥ २९ ॥

हितमित्यादि—यस्माद् द्वासप्तति सहस्रैः योगवित्तमैः संख्याताः नाड्यो हितं बलं च प्रयच्छंति तेन कारणेन ताः नाड्यो हिताः स्मृता इत्यर्थः ॥ २९ ॥

हृदयात्तास्तु निष्क्रान्ताः यथार्काद् रश्मयस्तथा ।
एकोत्तरं शतं तासां मुख्या विष्वङ्विनिर्गताः ॥ ३० ॥

हृदयेत्यादि—तासु पूर्वोक्त द्वासप्तति सहस्र नाडीषु ताः एकोत्तरशतं नाड्यः मुख्याः हृदयान्निष्क्रांताः निःसृताः यथा अर्कात्सूर्याद्रश्मयः निस्सृताः तथाविष्वग्विनिर्गताः परितो विनिर्गता इत्यर्थः ॥ ३० ॥

वहंत्यंभो यथा नद्यो नाड्यः कर्मफलं तथा ।
अनंतैकोर्ध्वगा नाडी मूर्धपर्यंतमंजसा ॥ ३१ ॥

वहंतीत्यादि—नद्यः यथांभो वहंति तथा नाड्यः कर्मफलं वहंति प्रापयंतीत्यर्थः । एका मूर्धपर्यंतं ब्रह्मरंध्रपर्यंतं ऊर्ध्वगा नाडी अनंता मुक्तिरूपा अनंतफलजनकत्वात् अनंता पूर्वोक्तास्तु कर्मफलप्रदाः । इयं तु मोक्षप्रदेति शेषः, तदुक्तं **छांदोग्ये 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानं अभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवंती'**ति ॥ ३१ ॥

प्रतींद्रियं दश दश निर्गता विषयोन्मुखाः ।
नाड्यः शमादिहेतुत्वात् स्वप्नादिफलभुक्तये ॥ ३२ ॥

प्रतींद्रियमित्यादि—ताः पूर्वोक्ता नाड्यः प्रतींद्रियं इन्द्रियाणि दश, पंचकर्मेन्द्रियाणि पंचज्ञानेंद्रियाणि, तत्र एकैकमिद्रियं प्रति एकैकमिंद्रियमभिमुखाः विषयोन्मुखास्सत्यः विषयग्रहणार्थमुन्मुखाः प्रवृत्ताः, शमादि हेतुत्वात्—शर्म पुण्यं आदिपदादधर्मः । तद्धेतुत्वात् शर्मादिरेव हेतुर्यत्रातत्वात् अदृष्टवशादित्यर्थः । स्वप्नादिफलभुक्तये स्वप्नजाग्रदाद्यवस्थाकालीनफलभोगार्थं निर्गता भवंति । तथा च पूर्वोक्तकर्मफलार्थ प्रवृत्ता इत्येतदनेनोक्तमिति ध्येयम् ॥ ३२ ॥

अत्र अनंतैका नाडी या उक्ता तांव्याचष्टे सुषुम्नेति—

सुषुम्नेति समादिष्टा तया गच्छन्हि मुच्यते।
तयोपचितचैतन्यं जीवात्मानं विदुर्बुधाः ॥ ३३ ॥

सानंता नाडी सुषुम्नेति समादिष्टेत्यर्थः। तया सुषुम्नया गच्छन्मुच्यते। अमृतत्वं प्राप्नोतीत्यर्थः। तयोपचितेति—तया सुषुम्नया नाड्या उपचितं संबद्धं यच्चैतन्यं अविद्यावच्छिन्नं चैतन्यं, बुधाः पंडिताः जीवात्मानं विदुरिति ॥ ३३ ॥

ननु जीवस्य व्यापकत्वे देहातिरिक्तस्थलेपि तदुपलंभापत्तिरित्याशंक्य दृष्टांतमुखेन परिहरति—यथेत्यादि—

यथा राहुरदृश्योऽपि दृश्यते चन्द्रमंडले।
तद्वत् सर्वगतोऽप्यात्मा लिंगदेहेऽपि दृश्यते ॥ ३४ ॥

यथान्यत्रादृश्योऽपि राहुः चन्द्रमंडले दृश्यते, चंद्रमंडलस्यैव व्यंजकत्वात् तदवच्छेदेनैव दृश्यते, तद्वत् सर्वगो व्यापकोऽप्यात्मा जीवात्मा लिंगदेहेपि अपि रेवकारार्थे, लिंगदेहस्य व्यंजकत्वात् तदवच्छेदेनैव दृश्यते सुखादि मत्तयोपलभ्यत इत्यर्थः ॥ ३४ ॥

दृश्यमाने यथा कुंभे घटाकाशोऽपि दृश्यते।
तद्वत् सर्वगतोऽप्यात्मा लिंगदेहेऽपि दृश्यते ॥ ३५ ॥

ननु लिंगशरीरावच्छेदेन जीवस्योपलभ्यमानत्वे अवच्छिन्नत्वेन परिच्छिन्नत्वापत्तिरित्यत आह—दृश्यमान इत्यादि—यथा दृश्यमाने कुंभे घटाकाशो दृश्यते परिच्छिन्नतयोपलभ्यते, तद्वत् सर्वगतोऽप्यात्मा लिंगदेह एव लिंगदेहावच्छेद एव दृश्यते। तथा च परिच्छिन्नत्वोपाध्यवच्छिन्नत्वनिबंधनः परिच्छिन्नत्वोपलंभः, न तु स्वाभाविकं परिच्छिन्नत्वमिति ॥ ३५ ॥

ननु जीवो गच्छतीति प्रागुक्तमनुपपन्नं। निश्चलस्य गमनासंभवात् इत्यत आह—निश्चल इत्यादि—

नीयमाने यथा कुंभे घटाकाशोऽपि नीयते।
तद्वत् सर्वगतोऽप्यात्मा लिंगदेहे विनिर्गते ॥ ३६ ॥

निश्चलः परिपूर्णोऽपि गच्छतीत्युपचर्यंते।

निश्चल इति, परिपूर्णः सर्वगः। अतएव निश्चलोऽपि गच्छतीत्युपचर्यंते, लिंगशरीरसंबंधवशादुपचर्यंते, गच्छतीति व्यवह्नियत इत्यर्थः। तथा च लिंगशरीरस्य गत्यादिमत्वौपाधिकमेव जीवस्य गत्यादिमत्वमिति भावः ॥ ३६ ॥

अत्र जीवस्य लिंगशरीरसंबंधनिबंधनमवस्थाभेदमाह—जाग्रदित्यादि—

जाग्रत्काले यथा ज्ञेयमभिव्यक्त-विशेषधीः।
व्याप्नोति निष्क्रियः सर्वान् भानुर्दशदिशो यथा ॥ ३७ ॥

निष्क्रियोऽपि जीवः जाग्रत्काले जाग्रद्दशायां यथा ज्ञेयं तत्तज्ज्ञान-योग्यं विषयं प्राप्याभिव्यक्तविशेषधीः अभिव्यक्ता विशेषाविषय-विशेषाः यया, तादृशी धीः यस्य तादृशो निष्क्रियोऽपि जीवः स सर्वान्विषयान् व्याप्नोति, सर्वविषयकज्ञानवान्भवतीत्यर्थः। तत्र दृष्टांतमाह—भानुरित्यादि यथा भानुर्दश दिशोव्याप्नोति स्वकिरणपरंपराद्वारा, तथा स्वप्रकाश-रूपोपि जीवः वृत्तिद्वारा सर्वान् विषयान् व्याप्नोतीत्यर्थः। अत्र तथा ज्ञोऽयमिति पाठे, यथा भानुर्दश दिशो व्याप्नोति तथा ज्ञोऽयं, जानातीतिज्ञः क्षेत्रज्ञो जीव इति यावत्, सर्वान् विषयान् व्याप्नोतीत्यर्थः ॥ ३७ ॥

नाडीभिर्वृत्तयो यांति लिंगदेहसमुद्भवाः।
तत्तत्कर्मानुसारेण जाग्रद्भोगोपलब्धये ॥ ३८ ॥

नाडीभिरित्यादि—तत्तत्कर्मानुसारेण तत्तददृष्टानुसारेण जाग्रद्भोगोप-लब्धये तत्प्राप्तये लिंगदेहसमुद्भवाः वृत्तयः अंतःकरणवृत्तयः नाडीभिः नाडीद्वारा यांति प्राप्नुवंतीत्यर्थः ॥ ३८ ॥

इदं लिंगशरीराख्यं आमोक्षं न विनश्यति।
आत्मज्ञानेन नष्टेऽस्मिन् साविद्ये स्वशरीरके ॥ ३९ ॥

आत्मस्वरूपावस्थानं मुक्तिरित्यभिधीयते ॥ ४० ॥

ननु स्थूलशरीरस्येव लिंगशरीरस्यापि संसारदशायां नाशोऽस्तु, जीवस्य तन्निबंधनगमनागमनादिव्यवहारो न स्यात्-इत्यत आह—इद-मित्यादि—इदं लिंगशरीराख्यं लिंगशरीरमित्याख्या अभिधा यस्य तत् तथा च लिंगशरीरमित्याख्यामात्रं, परिभाषामात्रं, भोगोपयोगित्वात् शरीर-मित्युपचर्यंते। तत्तु आमोक्षान्मोक्षपर्यंतं न विनश्यति। आत्मज्ञानेन तत्व-ज्ञानेन अस्मिन् साविद्ये अविद्यासहिते स्वशरीरक लिंगशरीरे कुत्सिते नष्टे सति आत्मस्वरूपावस्थानं, आत्मस्वरूपमेवावस्थानं तद्रूपकैवल्यमुक्ति-रित्यभिधीयते, तज्ज्ञैरितिशेषः ॥ ४० ॥

स्वस्वरूपावस्थानमित्यत्र दृष्टांतमाह—

उत्पादिते घटे यद्वद् घटाकाशत्वमृच्छति।
घटे नष्टे यथाऽकाशः स्वरूपेणावतिष्ठति ॥ ४१ ॥

घटे उत्पन्ने सति यद्वत् यथा महाकाशः घटाकाशत्वं घटावच्छिन्ना-काशत्वं ऋच्छति प्राप्नोति, घटे नष्टे सति आकाशः स्वरूपेणावतिष्ठते आकाशस्वरूपमेवावतिष्ठत इत्यर्थः ॥ ४१ ॥

इदानीं लिंगशरीरौपाधिकीं जीवस्य स्वप्नावस्थामाह—जाग्रदित्यादि—

जाग्रत्कर्मक्षयवशात् स्वप्नभोग उपस्थिते।
बोधावस्थां तिरोधाय देहाद्याश्रयलक्षणम् ॥ ४२ ॥

कर्मोद्भावित संस्कारः तत्र स्वप्नरिरंसया।
अवस्थां च प्रयात्यन्यां मायावी वात्ममायया ॥ ४३ ॥

जाग्रत्कर्मक्षयवशात् जाग्रत्कालीनभोगजनकं यत्कर्म अदृष्टं तस्य क्षयवशात् क्षये सति, स्वप्नभोगे उपस्थिते स्वप्नकालीनो यो भोगः सुखदुःखसाक्षात्कारः तस्मिन् तज्जनकेऽदृष्टे उपस्थिते उद्बुद्धे सति देहाद्याश्रयलक्षणं देहादीनां विषयाणां यः आश्रयः उपलंभः स एव लक्षणं ज्ञापकं यस्याः, तादृशीं बोधावस्थां तिरोधाय अभिभूय कर्मोद्भावित संस्कारः कर्मणा प्राक्तनकर्मणा उद्भावितः उत्पादितो यस्संस्कारः सः यस्य तादृशः सन्, तत्र लिंगशरीरे स्वप्नरिरंसया स्वप्नकालीन भोगेच्छया

आत्ममायया मायावीव अन्यामवस्थां प्रयाति स्वप्नावस्थां प्राप्नोतीत्यर्थः ॥ ४३ ॥

घटादि विषयान् सर्वान् बुद्ध्यादि करणानि च।
भूतानि कर्मवशतो वासनामात्रवस्थितान् ॥ ४४ ॥

घटादीत्यादि—बुद्ध्यादिकरणानि बुद्धिकरणानि ज्ञानेंद्रियाणि, आदि पदात्कर्मकरणादि कर्मेंद्रियाणि भूतानि पंच, पंच भूतानि कर्मवशतः कर्म अदृष्टं तद्वशतः तत्सहकारेण वासनामात्रवस्थितान् वासना पूर्वपूर्वाध्यास निबंधनः संस्कारः, तया वासनया मातरि साक्षिणि अवस्थितान् अध्यस्तान् ॥ ४४ ॥

एतान् पश्यन् स्वयंज्योतिः साक्ष्यात्मा व्यवतिष्ठते।
अत्रांतःकरणादीनां वासनाद्वासनात्मता ॥ ४५ ॥

एतान् घटादिविषयान् स्वयंज्योतिः स्वप्रकाशरूपः आत्मा जीवः साक्षी सन् पश्यन् वतिष्ठते, अत्रेत्यादि—अत्र स्वप्नदशायां अंतःकरणादीनां वासनात् पूर्वपूर्ववासनावशात् वासनात्मता वासनोत्थत्वेन तत्परिणामत्वात् वासनात्मतेत्यर्थः ॥ ४५ ॥

वासनामात्रसाक्षित्वं तेन तत्र परात्मनः।
वासनाभिः प्रपंचोऽत्र दृश्यते कर्मचोदितः ॥ ४६ ॥

तत्रस्वप्नदशायां परात्मनश्चैतन्यस्य वासनामात्रसाक्षित्वं प्रपंचमात्रस्यैव वासनात्मकत्वेन, मात्रशब्दोऽत्र कृत्स्नार्थकः, प्रपंचमात्रस्यसाक्षित्वं स्वप्रकाशतया भासकत्वमित्यर्थः। वासनाभिरित्यादि। अत्र स्वप्नदशायां वासनाभिः पूर्वपूर्वाध्यासनिबंधनसंस्कारैः कर्मचोदितः कर्म अदृष्टं, तेन चोदितः उत्पादितः प्रपंचो दृश्यत इत्यर्थः ॥ ४६ ॥

जाग्रद्भूमौ यथा तद्वत् कर्तृकर्मक्रियात्मकः।
निश्शेष बुद्धिसाक्ष्यात्मा स्वयमेव प्रकाशते ॥ ४७ ॥

वासनामात्र साक्षित्वं साक्षिणः स्वाप उच्यते ॥

जाग्रद्भूमौ जाग्रद्दशायां यथा कर्तृकर्मक्रियात्मको व्यवहारः, तद्वत् स्वप्नेऽपि तादृशो व्यवहार इत्यर्थः। निश्शेषेत्यादि—निश्शेषा या बुद्धिः तत्साक्षी तत्प्रकाशकः आत्मा, अतः स्वयमेवप्रकाशते, स्वस्यैव सर्वप्रकाशकत्वात्। तस्य प्रकाशकांतरं नास्तीत्यभिप्रायः, अतः साक्षिणस्तस्य वासनामात्र साक्षित्वं। यदा इंद्रियव्यापारोपरमः, तदा स्वाप इत्युच्यत इत्यर्थः ॥ ४७ ॥

भूतजन्मनि यद्भूतं कर्म तद्वसनावशात्।
नेदीयस्त्वाद्वयस्याद्ये स्वप्नं प्रायः प्रपश्यति ॥ ४८ ॥

भूत जन्मनि भूतं अतीतं जन्म तस्मिन् यद्भूतं यज्जातं कर्म अदृष्टं। तद्वासनावशात् आद्ये वयसि बाल्यदशायां प्रायः प्रायशः नेदीयस्त्वात् निकटवर्तित्वात् स्वप्नं पश्यति। निकटवर्तित्वं च स्वकीयावस्थांतरापेक्षयेति बोध्यम् ॥ ४८ ॥

मध्ये वयसि कार्कश्यात् कारणानामिहार्थितः।
प्रायेण वीक्षते स्वप्नं वासनाकर्मणो वशात् ॥ ४९ ॥

मध्ये वयसि यौवनदशायां, कारणानां ज्ञानकर्मेन्द्रियाणां, कार्कश्यात् नानाविधव्यापारकत्वात्, आर्थितः प्रार्थितः मम एवं भवतु—इत्यादि—प्रार्थना विषयः स्वयमेव वासनाकर्मवशात्, वासना पूर्वपूर्वसंस्कारः तद्विशिष्टं यत्कर्म, तद्वशात् तत्सहकारात् प्रायेण स्वप्नं वीक्षते पश्यतीत्यर्थः ॥ ४९ ॥

इदानीं वार्धकावस्थायां स्वप्नमाह—

इयासुः परलोकं तु कर्मविद्यादि संभृतं।
भाविनो जन्मतो रूपं स्वप्ने आत्मा प्रपश्यति ॥ ५० ॥

परलोकमियासुः परलोकगमनयोग्यः वार्धकावस्थ इति यावत्। तादृश आत्मा कर्म विद्यादि, संभृतं पूर्वपूर्वकृतं यत्कर्म यागादि-विद्या-पूर्वपूर्वाभ्यस्ता या विद्या वेदशास्त्रशिल्पादि, तैः संभृतं तत्संपादनयोग्यं, भाविनो जन्मनो अनुरूपं भविष्यत्कालीनं यज्जन्म तस्य यद्रूपं तस्मिन् भविष्यति यद्यद् भविष्यति तत्स्वरूपं तत्सूचकं स्वप्ने पश्यतीत्यर्थः ॥ ५० ॥

इदानीं सदृष्टांतं सुषुप्त्यवस्थामाह—

यद्वत् प्रपतनाच्छ्येनः श्रांतो गगनमंडले।
आकुंच्य पक्षौ यतते नीडे निलयनायनीः ॥ ५१ ॥

श्येनः पक्षी गगनमंडले प्रपतनात् प्रकृष्टं पतनं प्लवनोत्प्लवनादि। तस्मात् श्रांतः सन् पक्षौ द्वावाकुंच्य संकोच्य नीडे कुलाये नीः नयति आत्मानमिति विलयनाय नीः निश्शेषेण लयनं लयः श्रमस्येत्यर्थात् ॥ ५१ ॥

एवं जाग्रत्स्वप्नभूमौ श्रांत आत्माभिसंचरन्।
आपीतकरणग्रामः कारणेनैति चैकताम् ॥ ५२ ॥

एवं जाग्रत्स्वप्नभूमौ जाग्रत्स्वप्नदशायां अभिसंचरन् तत्तद्विषयानुभव जनकीभूतं व्यापारं कुर्वन् श्रांतः तन्निबंधन श्रमवान् आत्मा जीवः आपीत करणग्रामः आपीतः विलीनः करणग्रामः ज्ञानकर्मकरणसमूहः, यस्य तादृशः सन्, कारणेन परमात्मना एकतामेति प्राप्नोति तथा च श्रुतिः—'**सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति**' ॥ ५२ ॥

नाडीमार्गैरिंद्रियाणां आकृष्यादाय वासनाः।
सर्वं ग्रसित्वा कार्यं च विज्ञानात्मा प्रलीयते ॥ ५३ ॥

इंद्रियाणां नाडीमार्गैः तत्तदिंद्रियसंचारयोग्य नाडीमार्गैः इंद्रियाण्याकृष्य तत्तद्विषय संबंधानुकूलव्यापारान् निर्वर्त्य सर्वकार्यं शरीरादिग्रसित्वा विनाश्य वासनाः तत्तत्प्रकारक संस्काराः, ताः पुनरुत्थानार्थमादाय तद्विशिष्टस्सन् विज्ञानात्मा जीवः प्रलीयते परमात्मनि-अंतःकरण रूपोपाधिविलयात् परमात्मस्वरूपतया तिष्ठतीत्यर्थः ॥ ५३ ॥

ईश्वराख्येऽव्याकृतेऽथ तथा सुखमयो भवेत्।
कृत्स्नप्रपंच-विलयः तथा भवति चात्मनः ॥ ५४ ॥

अथ उपाधिविलयानंतरं अव्याकृते विकार रहिते ईश्वराख्ये परमात्मनि तथा सुखमयो भवेत् तत्स्वरूपो भवेत् तथात्मनो जीवस्य कृत्स्न प्रपंचविलयश्च भवतीत्यर्थः। अत्र पूर्वश्लोके कार्यकरणसंघातस्य

लयः उक्तः, इदानीं प्रपंच सामान्यस्य लयकथनात् सामान्य विशेष भावेनो-पादानात् न पौनरुक्त्यमिति बोध्यम् ॥ ५४ ॥

अत्र सुषुप्तिकालीन परमानंदानुभवस्य योषित्संसर्गजन्य सुखवैलक्षण्य प्रदर्शनपूर्वकं तत्स्वरूपमाह—

योषितः काम्यमानायाः संभोगांते यथा सुखम् ।
स आनंदमयो बाह्यो नांतरः केवलस्तथा ॥ ५५ ॥

काम्यमानायाः कामनाविषयीभूतायाः योषितः, संभोगांते, यथा, यादृशं सुखं भवति, तत्तथा, तादृशानंदवत् सुषुप्तिकालीन, आनंदः न भवति सुषुप्तिकालीनानंदः कीदृश इत्यपेक्षायां आह—स इत्यादि—सः सुषुप्ति-कालीनः आनंदमयः आनंदः स्वरूपार्थे मयट् । अबाह्यः बाह्यो न, वृत्यनपेक्षः, आंतरः केवलः इतरनिरपेक्षः, स्वप्रकाशरूप इत्यर्थः ॥ ५५ ॥

प्राज्ञात्मानं समासाद्य विज्ञानात्मा तथैव सः ॥
विज्ञानात्मा कारणात्मा तथा तिष्ठन्नथापि सः ॥ ५६ ॥

विज्ञानात्मा जीवः तथैव प्राज्ञात्मानं परमात्मानं समासाद्य प्राप्य तेन समं एकीभूय स विज्ञानात्मा तथा तिष्ठन् स्वरूपे तिष्ठन् कारणात्मा कारणं चैतन्यं तत्स्वरूपतया व्यवह्रियत इत्यर्थः ॥ ५६ ॥

ननु सुषुप्तिकाले अंतःकरणवृत्यभावे कथं सुखानुभवः? तदभावे कथं सुषुप्त्यनंतरं सुखमहमस्वाप्सं—न किंचिदवेदिष—मिति परमार्शः ? इत्यत आह—

अविद्यासूक्ष्मवृत्यानुभवत्येव सुखं यथा ।
अज्ञानमपि साक्ष्यादिवृत्तिभिश्चानुभूयते ॥ ५७ ॥

अविद्यासूक्ष्मवृत्या, अविद्या मूलाज्ञानं, तस्याः या सूक्ष्मावृत्तिः परिणामविशेषः, तया यथा सुखं परमानंदरूपमनुभवति, अज्ञानमपि, अविद्यां अपि साक्ष्यादिवृत्तिभिः साक्षी परमात्मा, आदिः यासां वृत्तीनां ताभिः अविद्यावृत्तिभिः अनुभूयते अनुभवतीत्यर्थः ॥ ५७ ॥

तथाहं सुखमस्वाप्सं नैव किंचिदवेदिषम् ।
इत्येवं प्रत्यभिज्ञापि पश्चात्तस्योपपद्यते ॥ ५८ ॥

तथा "**सुखमहमस्वाप्सं, न किंचिदवेदिषं,**" इत्येवं प्रत्यभिज्ञापि: तस्य सुषुप्तस्य पश्चादुपपद्यत इत्यर्थः ॥ ५८ ॥

अत्र जाग्रत्स्वप्न-सुषुप्ताख्यं अवस्थात्रयं पूर्वोक्तमुपसंहरन् इहामुत्रलोकयोः सुषुप्त्यनंतरं सृष्टिप्रकारमाह—

जाग्रत्स्वप्नसुषुप्त्याख्य मेवेहामुत्रलोकयोः ।
पश्चात् कर्मवशादेव विष्फुलिंगा यथानलात् ॥ ५९ ॥

जायंते कारणादेव मनोबुध्यादिकानि तु ॥ ६० ॥

इहामुत्रलोकयोः इहलोके अमुत्र परलोके च, पश्चात् प्रपंच विलयानंतरं कर्मवशाददृष्टवशादेव, कारणात् परमात्मस्वरूपात् मनोबुध्यादिकानि जायंते, तत्र दृष्टांतमाह—विष्फुलिंगाः यथानलादित्यादि—व्याख्यातमेतत्—द्वितीयाध्याये ॥ ६० ॥

ननु परमात्मनि जीवात्मनो लये तत्स्वरूपतापत्तौ कथं पुनः सृष्टिरित्यत आह—पय इति—

पयःपूर्णो घटो यद्वत् निमग्नः सलिलाशये ।
तैरेवोद्धृत आयाति विज्ञानात्मा तथेत्यजात् ॥ ६१ ॥

विज्ञानात्मा जीवः, यथा विलीनः अविद्यापूर्वपूर्ववासनाविशिष्टः विलीनस्तथा अविद्याविशिष्ट एव, अजात्परमात्मनः सकाशात् एति, निर्गच्छति, तथा मूलाविद्याविशिष्टस्यैव विलयात् सुषुप्तिकालेप्यविद्या पूर्वपूर्ववासनादि सत्वात् अत्यंतैक्याभावाच्च न पुनः सृष्ट्यनुपपत्तिरिति भावः, तत्र दृष्टांतमाह—पय इत्यादि—यद्वत् यथा सलिलाशये जलाधारे तटाकादौ निमग्नः पयपूर्णः घटः उद्धृतस्सन् तैरेव पयोभिः सहैवायाति, तद्वदित्यर्थः ॥ ६१ ॥

विज्ञानात्मा कारणात्मा तथाऽतिष्ठत्तथापि सः ।
दृश्यते सर्वमेष्वेव नष्टेष्वायात्यदृश्यताम् ॥ ६२ ॥

विज्ञानात्मा जीवः कारणात्मा सन् सर्वं व्याप्य अतिष्ठत् सर्वात्मकतया अतिष्ठदित्यर्थः, अतः एषु अंतःकरणादिषु सत्स्वेव दृश्यते, अहमिति व्यवह्रियते, नष्टेष्वंतःकरणेषु अदृश्यतां याति अदृश्यतां प्राप्नोति अहमिति व्यवहारविषयो न भवतीत्यर्थः॥ ६२॥

एकाकारोर्यमा तत्तत्कार्येष्वेवं परः पुमान्।
कूटस्थो दृश्यते तद्वद् गच्छत्यागच्छतीति सः॥ ६३॥

आर्यमा सूर्यः एकाकारोपि तत्तत्कार्येषु जलविशिष्टशरावादिषु यथा गच्छत्यागच्छतीति दृश्यते, तद्वत् कूटस्थः एकाकारः परः पुमान् कार्येष्वंतःकरणादिषु गच्छत्यागच्छतीव दृश्यते, तथा च उपाधिगमनागमनादि निबंधनमेव गमनागमनादिकमिति ध्येयम्॥ ६३॥

मोहमात्रांतरायत्वात् सर्वं तस्योपपद्यते।
देहाद्यतीते आत्मापि स्वयंज्योतिः स्वभावतः॥ ६४॥

मोहः अज्ञानं मात्रा वासनादिः स एवांतरायो व्यवधायको यस्य तत्वात् तस्यात्मनः सर्वं गमनागमनादिकं उपपद्यते, देहाद्यतीते देहादौ अतीते आत्मा जीवः स्वभावतः स्वयंज्योतिः सन् तिष्ठतीत्यर्थः॥ ६४॥

एवं जीवस्वरूपं ते प्रोक्तं दशरथात्मज !॥ ६५॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु जीवस्वरूपनिरूपणं नाम
दशमोऽध्यायः

हे! दशरथात्मज एवमुक्तक्रमेण ते तव जीवस्वरूपं प्रोक्तमिति॥ ६५॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
जीवस्वरूपनिरूपणं नाम
दशमोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## एकादशोऽध्यायः

अत्र पूर्वाध्याये जीवस्य लिंगशरीरनिबंधन गत्यागत्यादिकं सामान्यतो निरूप्येदानीं तदेव विविच्य प्रदर्शयितुं प्रतिजानीते—श्री भगवानुवाचेत्यादिना—श्री भगवानुवाच—

देहांतरगतिं तस्य परलोकगतिं तथा।
वक्ष्यामि नृपशार्दूल ! मत्तः शृणु समाहितः ।। १ ।।

हे नृपशार्दूल! तस्य जीवस्य देहांतरगतिं देहांतरप्राप्ति-प्रकारं तथा परलोकगतिं परलोकप्राप्ति-प्रकारं वक्ष्यामि तत् त्वं समाहितस्सन् शृणु ।। १ ।।

अत्र गत्यागत्यादि-प्रकारं—वक्तुं प्रथमं देहधारण प्रकारमाह—भुक्तं पीतमित्यादिना—

भुक्तं पीतं यतस्तत्र तद्रसादामबंधनम् ।
स्थूलदेहस्य लिंगस्य तेन जीवनधारणम् ।। २ ।।

भुक्तं पीतं भुक्तं अन्नादि, पीतं जलादि, तद्रसात् तत्परिणामविशेषात् यतो यस्मात् स्थूलदेहस्य लिंगदेहस्य च आम निबंधनं आमेन मलविशेषेण बंधनं, तयोः दृढ बंधनं तेन तादृशदृढबंधनेन, तत्र, देहे जीवनधारणं भवतीत्यर्थः ।। २ ।।

व्याधिना जरया वापि पीडचते जाठरोऽनलः ।
श्लेष्मणा तेन भुक्तान्नं पीतं वा नपचत्यलं ।। ३ ।।

व्याधिनेत्यादि—व्याधिना वातपित्तज्वरादिना जराया वा श्लेष्मणाप्युल्बणेन जाठरोऽनलः जठरसंबंधी भुक्तपीताद्याहारपरिणामजनकोनलः पीडचते मंदीक्रियते, तेन मंदेन जठरानलेन भुक्तान्नं भुक्तं यदन्नं

पीतं च यत् तत् न पचति सविशेषजरणसमर्थं यथा भवति तथा न जीर्यतीत्यर्थः ॥ ३ ॥

भुक्तपीतरसाभावात् तदा शुष्यंति धातवः ।
भुक्तपीतरसेनैव देहे लिंपंति नित्यशः ॥ ४ ॥

भुक्तेत्यादि—तदा मंदजठरानल समये भुक्त पीतयोर्यो रसः परिणामविशेषः तदभावात् धातवः सप्त शुष्यंति क्षीणतां प्राप्नुवंतीत्यर्थः । भुक्तपीतरसेनैव भुक्तपीतयोर्यो रसः तेनैव धातवः देहे नित्यशः प्रत्यहं लिंपंति वृद्धिं प्राप्नुवंति ॥ ४ ॥

समीकरोति यस्तस्मात् समानो वायुरुच्यते ।
इदानीं तद्रसाभावात् आमबंधनहानितः ॥ ५ ॥

समीकरोतीत्यादि—यो वायुः समीकरोति भुक्तपीतरसान् देहे सर्वत्र यथायोग्यं समानयति, सम्यगानयति अतः स वायुः समान इत्युच्यते । अत्र देहे धारण प्रकारमुक्त्वा तत्त्यागप्रकारमाह इदानीमित्यादि । इदानीं रसविशेषाभावनिबंधनं-धातुवैषम्य-समये तद्रसाभावात् तादृशपरिणामविशेषाभावात्, आमबंधनहानितः तादृश परिणामविशेषस्यैव देहबंधन हेतुत्वात्, तदभावाद्देहबंधन रूपकार्याभावात् देहः स्थूलो देहः गौरवतः गुरुत्वात् स्वयमेव आशु शीघ्रं पतति, लिंगं लिंगशरीरं तनोः स्थूलदेह सकाशात् व्रजेत् निर्गच्छतीत्यर्थः ॥ ५ ॥

तत्र दृष्टांतमाह परिपक्वेत्यादि—

परिपक्वरसत्वेन यथा गौरवतः फलम् ।
स्वयमेव पतत्याशु तथा लिंगं तनो व्रंजेत् ॥ ६ ॥

यथा फलं परिपक्वरसत्वेन परिपक्वः परिपूर्णः रसः परिणामो यस्य तादृशत्वेन गौरवतो गुरुत्वात् स्वयमेव पतति तथा स्थूलदेहोऽपीत्यर्थः ॥ ६ ॥

तत्तत्स्थानादपाकृष्य हृषीकाणां तु वासनाः ।
आध्यात्मिकाधिभूतानि हृपद्मे चैकतां गतः ॥ ७ ॥

तत्तदित्यादि—हृषीकाणां इन्द्रियाणां याः वासनाः संस्काररूपाः ताः तत्तत्स्थानात् यस्य यस्य इन्द्रियस्य यद्यत् स्थानं तत्तत्स्थानात् तथा आध्यात्मिकादि भूतानि आध्यात्मिकानि आत्मनि अधिकृत्य तिष्ठंति यानि अधिभूतानि भावि शरीरारंभकाणि भूतानि सूक्ष्माणि तान्यपाकृष्य हृत्पद्मे एकतां गतः तैस्समं जलपांसुवन्मिश्रितः सन् विज्ञानात्मा उपसर्जं-तीत्यग्रेतनेनान्वयः ॥ ७ ॥

ततोर्ध्वगः प्राणवायुः संयुक्तो नववायुभिः।
ऊर्ध्वोच्छ्वासी भवत्येष तथा तेनैकतां गतः ॥ ८ ॥

ततोर्ध्वगेत्यादि—ततोर्ध्वगः प्राणवायुः ततः विस्तृतः यः ऊर्ध्वं गच्छती-त्यूर्ध्वगः। प्राणवायुः प्राणरूपो वायुः उदान इति यावत्। सः नव वायुभिः प्राणापान नागादि नववायुभिः संयुक्तः संयुक्तः सन् ऊर्ध्वोच्छ्वासी भवति ऊर्ध्वोच्छ्वास रूपो भवतीत्यर्थः तथा पूर्वोक्त प्रकारेण तेन ऊर्ध्वगेन वायुना एकतां गतः जलपांसुवन्मिश्रितस्सन्नित्यर्थः ॥ ८ ॥

चक्षुषोर्वाथ मूर्ध्नो वा नाडीमार्गं समाश्रितः।
विद्याकर्मसमायुक्तो वासनाभिश्च संयुतः ॥ ९ ॥

चक्षुषोर्वेत्यादि—चक्षुषोर्वा नाडीमार्गं मूर्ध्नोवा नाडीमार्गं समाश्रित-स्सन् विद्याकर्मसमायुक्तः विद्या पूर्वपूर्वजन्मन्यभ्यस्ता विद्या, कर्म, अदृष्टं तदुभयसमायुक्तः वासनाभिश्च संयुतस्सन् ॥ ९ ॥

प्रज्ञात्मानं समाश्रित्य विज्ञानात्मोपसर्जति ॥ १० ॥

प्रज्ञात्मानं परमात्मानं समाश्रित्य विज्ञानात्मा जीवः उपसर्जंति गच्छतीत्यर्थः ॥ १० ॥

अत्र जीवस्य गमनागमनं चौपाधिकमित्येतत् सदृष्टांतमाह—यथे-त्यादि—

यथा कुंभो नीयमानो देशाद्देशांतरं प्रति।
खपूर्ण एव सर्वत्र स आकाशोऽपि तत्रतु।
घटाकाशाख्यतां याति तद्वल्लिगं परात्मनः ॥ ११ ॥

देशाद्देशांतरं प्रति नीयमानः कुंभः खपूर्ण एव खं आकाशः तद्विशिष्ट एव नीयते स आकाशोऽपि तत्र तिष्ठति, तथा च घटस्य गमनेन औपाधिकं

आकाशस्य गमनं यथा तथा जीवस्यापि लिंगशरीरगमनेन औपाधिकं गमनमिति ॥ ११ ॥

पुनर्देहांतरं याति यथाकर्मानुसारतः ।
आ मोक्षात् संचरत्येवं मत्स्यः कूलद्वयं यथा ॥ १२ ॥

पुनर्देहांतरमित्यादि—यथाकर्मानुसारतः यथाकर्म प्राक्तनमाचरितं यादृशं यादृशं कर्म, तदनुसारेण आ मोक्षात् मोक्षपर्यंतं लिंगशरीरं तत्र तत्र संचरति मत्स्यो यथा कूलद्वयं संचरति तद्वदित्यर्थः ॥ १२ ॥

अत्र यथाकर्मानुसारत इत्युक्तं—तत्र केन कर्मणा कुत्र गच्छतीत्यपेक्षायां आह—पापेत्यादि—

पापभोगाय चेद् गच्छेद् यमदूतैरधिष्ठितः ।
यातनादेहमाश्रित्य नरकानेव केवलम् ॥ १३ ॥

पापभोगाय पापजन्य दुःखभोगाय यदि गच्छेत् तदा यमदूतैरधिष्ठितः यमदूतैराक्रांतस्सन् यातनादेहमाश्रित्य यातनोपयोगिनं देहं प्राप्य केवलं नरकानेव गच्छति, प्राप्नोतीत्यर्थः ॥ १३ ॥

इष्टापूर्तानि कर्माणि योऽनुतिष्ठति सर्वदा ।
पितृलोकं प्रयात्येष याममाश्रित्य बर्हिषः ॥ १४ ॥

इष्टेत्यादि—इष्टं यागादि, पूर्तं तटागादि, इदमुपलक्षणं, दत्तमपि बोध्यं, तादृशानि कर्माणि यः सर्वदा अनुतिष्ठति करोति एषः तादृशः पुरुषः याममाश्रित्य यामं यमदूतमाश्रित्य बर्हिषः उपाश्रित श्रौताद्यग्नेः प्रभावात् पितृलोकं पितृलोकाख्यं स्वर्गविशेषं व्रजति, प्राप्नोतीत्यर्थः । धूममाश्रित्यबर्हिषः इति पाठे बर्हिषः सकाशात् धूममाश्रित्येत्यर्थः ॥ १४ ॥

अत्र पितृयानमार्गमाह—धूममित्यादि—

धूमं रात्रिं गतः कृष्णपक्षं तस्माच्चदक्षिणं ।
अयनं च ततो लोकं पितॄणां च ततः परं ॥ १५ ॥

धूमं धूमाभिमानिनीं देवतां अत्र व्रजेदिति सर्वत्रानुषज्यते । ततो रात्रिं तद्गतस्सन् कृष्णपक्षाभिमानिनीं देवतां, तस्मात् कृष्णपक्षाद्

दक्षिणायनं तदभिमानिनीं देवतां ततो दक्षिणायनात् पितॄणां लोकं व्रजेदित्यर्थः। तथा च श्रुतिः "**अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवंती**"त्यादि ॥ १५ ॥

चन्द्रलोके दिव्यदेहं प्राप्य भुङ्क्ते परां श्रियम्।
तत्र चन्द्रसमानोऽसौ यावत्कर्म-फलं वसेत् ॥ १६ ॥

चन्द्रेत्यादि—अत्र पूर्वोक्तं ततःपरमित्यत्रापि संबध्यते। तथा च पितृलोकप्राप्त्यनंतरं चन्द्रलोके दिव्यं देहं चंद्रलोकीय-भोगोपयोगिदेहं प्राप्य परां श्रियं भुङ्क्ते परां प्रकृष्टां श्रियं लक्ष्मीं प्रकृष्टभोग्यमिति यावत्। तद्भुङ्क्ते तत्र चन्द्रलोके चन्द्रसमानः चन्द्रसमानैश्वर्यस्सन् असौ तादृश कर्मा यावत्कर्मफलं यावत्कालपर्यंतं तत्तत्कर्मफलं तत्तत्कर्मजन्य-फलभोगः तावत्पर्यंतं वसेदित्यर्थः ॥ १६ ॥

तथैव कर्मशेषेण यथेतं पुनराव्रजेत्।
वपुर्विहाय जीवत्व मासाद्याकाशमेति सः ॥ १७ ॥

तथैवेत्यादि—कर्मशेषेण प्राक्तन कर्मशेषेण यथा इतं गतं तथा पुनरा-व्रजेत् पुनरागच्छतीत्यर्थः, अत्रागमनप्रकारमाह—वपुरित्यादि—चन्द्रलोकीय भोगानंतरं वपुर्दिव्यं शरीरं विहाय जीवत्वमासाद्य दिव्यशरीरानवच्छिन्न जीवस्वरूपः सः आकाशमेति। आकाशाभिमानिनीं देवतां प्राप्नोति ॥ १७ ॥

आकाशाद् वायुमागत्य वायोरंभो व्रजत्यथ।
अद्भ्यो मेघं समासाद्य ततो वृष्टिर्भवेदसौ ॥ १८ ॥

आकाशाभिमानिदेवताप्राप्त्यनंतरं वायुमागत्य वाय्वभिमानि-देवतां प्राप्य वायोरनंतरं अंभो व्रजति। अंभोभिमानिदेवतां प्राप्नोति। अथ अंभःप्राप्यनंतरं, मेघं समासाद्य ततो वृष्टिर्भवेदसौ, असौ जीवः ततो मेघप्राप्त्यनंतरं वृष्टिर्भवेत्। वृष्ट्यभिमानिदेवतासंबद्धो भवेदित्यर्थः ॥ १८ ॥

ततो धान्यानि भक्ष्याणि जायते कर्मचोदितः।
योनि मन्ये प्रपद्यंते शरीरत्वाय देहिनः ॥
मुक्ति मन्येऽनुसंयांति यथाकर्म यथाश्रुतम् ॥ १९ ॥

ततो वृष्टिप्राप्त्यनंतरं धान्यानि अन्नानि भक्ष्याणि इतराणि भक्ष्याणि कर्मचोदितः तत्तत्कर्मणा प्रेरितो जीवो जायते। प्रधान विशेष्यापेक्षया एकवचनमिति ध्येयं, योनीत्यादि—यथाकर्म यथा अदृष्टं तदनुसारेण अन्ये जीवाः योनिं प्रपद्यन्ते। तत्तत्कर्मानुसारेण तत्तद्योनिं प्राप्नुवंतीत्यर्थः। यथाश्रुतं यथाश्रवणादिकं तदनुसारेणान्ये जीवाः चन्द्रलोके स्थित्वा मुक्तिं संयांति। प्राप्नुवंतीत्यर्थः। अत्र "**स्थाणुमन्ये प्रपद्यंत**" इति क्वाचित्कः पाठः द्वितीयाध्याये व्याख्यात इति॥ १९॥

ततोऽन्नत्वं समासाद्य पितृभ्यां भुज्यते परम्।
ततः शुक्लं रजश्चैव भूत्वा गर्भोऽभिजायते॥ २०॥

ततस्तदनंतरमन्नत्वं समासाद्य अन्नत्वं प्राप्य पितृभ्यां माता च पिताच पितरौ, ताभ्यां संभुज्यते। ततस्तदनंतरं शुक्लं रजश्च शुक्लं चरमधातुः रजो रक्तं, तत्स्वरूपो भूत्वा गर्भोभिजायते गर्भो भवतीत्यर्थः॥ २०॥

ततः कर्मानुसारेण भवेत् स्त्रीपुन्नपुंसकम्।
एवं जीवगतिः प्रोक्ता मुक्तिं तस्य वदामि ते॥ २१॥

ततस्तदनंतरं कर्मानुसारेण स्त्री पुन्नपुंसकं भवेत्। स्त्री पुन्नपुंसकानि भवंतीत्यर्थः। बहुवचनस्थाने एकवचनमार्षमिति बोध्यम्। एवमित्यादि—एवमुक्तप्रकारेण जीवगतिः जीवस्य गतिः आगतिश्च प्रोक्ता। इदानीं ते तव तस्य जीवस्य मुक्तिं वदामि। त्वमवहितः शृण्विति शेषः॥ २१॥

यस्तु शान्त्यादियुक्तस्सन् सदा विद्यारतो भवेत्।
स याति देवयानेन ब्रह्मलोकावधिं नरः॥ २२॥

यस्तु शान्त्यादियुक्तः साधनचतुष्टयसंपत्तिमान् सदा विद्यारतो भवेत् अत्र विद्या उपासना, तत्र रत आसक्तो भवेत् स नरो देवयानेन देवयानमार्गेण ब्रह्मलोकावधिं ब्रह्मलोकं याति गच्छतीत्यर्थः॥ २२॥

अत्र देवयानमार्गमाह—

अर्चिर्भूत्वा दिनं प्राप्य शुक्लपक्षमथो व्रजेत्।
उत्तरायण मासाद्य संवत्सरमथो व्रजेत्॥ २३॥

अर्चिर्भूत्वा आदित्यार्चिरभिमानिदेवतासंबद्धो भूत्वेत्यर्थः। एव-मुत्तरत्रापि दिनादौ सर्वत्रायमर्थो बोद्धव्यः, दिनं प्राप्य शुक्लपक्षं व्रजेत्। अथो शुक्लपक्ष—प्राप्त्यनंतरं उत्तरायणमासाद्य संवत्सरं व्रजेत्॥ २३॥

आदित्यचन्द्रलोकौ तु विद्युल्लोकमतःपरम्।
अथ दिव्यः पुमान् कश्चित् ब्रह्मलोकादिहैति सः॥ २४॥
दिव्ये वपुषि संधाय जीवमेवं नयत्यसौ।
ब्रह्मलोके दिव्यदेहे भुक्त्वा भोगान्यथेप्सितान्॥ २५॥
तत्रोषित्वा चिरं कालं ब्रह्मणा सह मुच्यते।
विद्याकर्मविहीनोऽयं तृतीयं स्थानमेति सः॥ २६॥

अथो संवत्सरप्राप्यनंतरं आदित्यचन्द्रलोकौ आदित्यस्य लोकं चन्द्रस्य लोकं च क्रमेण व्रजेदित्यर्थः। अतःपरं आदित्यचन्द्रलोकप्राप्त्यनंतरं विद्यु-ल्लोकं व्रजेत्। अथ तस्य जीवस्य विद्युल्लोक प्राप्त्यनंतरं कश्चित् पुमानिह विद्युल्लोके ब्रह्मलोकादेति आगच्छतीत्यर्थः॥ २४॥

सोऽसौ पुमान् दिव्ये वपुषि ब्रह्मलोक भोगयोग्यशरीरे एनं जीवं-संधाय स्थापयित्वा ब्रह्मलोकं नयतीत्यर्थः। ब्रह्मलोक इत्यादि—ब्रह्मलोके दिव्यदेहे तादृश भोगोपयोगि देहावच्छेदे यथेप्सितान् भोगान् इच्छानु-सारिणः भोगान् भोग्यपदार्थान् भुक्त्वा तत्र चिरकालमुषित्वा स्थित्वा ब्रह्मणा हिरण्यगर्भेण सह मुच्यते मुक्तिभाग्भवतीत्यर्थः। अत्र विद्याकर्म-विहीनानां तृतीयं स्थानमाह—विद्याकर्मेति—विद्यया कर्मणा वा विहीनो यः सः तृतीयं स्थानमेति प्राप्नोति। तथा च श्रुतिः—तदेतत्तृतीयं स्थानं जायस्व म्रियस्वेत्यादि॥ २६॥

पापभोगाय वै गच्छेदित्यादि पूर्वमुक्तं—तत्र सिंहगुहावलोकनन्यायेन तत्पश्चाद्भाविनीमवस्थामाह—

भुक्त्वात्र नरकान् घोरान् महारौरवरौरवान्।
पश्चात् प्राक्तनशेषेण क्षुद्रजंतुर्भवेदसौ॥ २७॥

तत्र नरकान् घोरान् अति दुःसहान् महारौरवरौरवान् महारौरव रौरवाख्यान् नरकान् भुक्त्वा पश्चात् तादृश भोगानंतरं प्राक्तनशेषेण प्राक्तनकर्मशेषेणासौ जीवः क्षुद्रजंतुर्भवेत्॥ २७॥

क्षुद्रजंतूनेवाह—

यूकामशकदंशादिजन्मासौ लभते भुवि।
एवं जीवगतिःप्रोक्ता किमन्यच्छ्रोतुमिच्छसि ?॥ २८॥

यूकामशकदंशादयः तेषां जन्म लभत इत्यर्थः। एवं पूर्वोक्त क्रमेण जीवगतिः प्रोक्ता जीवस्य स्वरूपस्थितिगत्यागत्यादिमत्वप्रश्ने उत्तरं दत्तं, अन्यत्किं श्रोतुमिच्छसि ? तद्वदेत्यर्थः॥ २८॥

श्रीराम उवाच—

भगवन्! यत्त्वया प्रोक्तं फलं तु ज्ञानकर्मणोः।
ब्रह्मलोके चन्द्रलोके भुङ्क्ते भोगानिति प्रभो॥ २९॥
गंधर्वादिषु लोकेषु कथं भोगस्समीरितः।
देवत्वं प्राप्नुयात् कश्चित् कश्चिदिन्द्रत्वमेव च॥ ३०॥
एतत्कर्मफलं वास्तु? विद्याफलमथापि वा?।
तद् ब्रूहि गिरिजाकांत! तत्र मे संशयो महान्॥ ३१॥

भगवन्नित्यादि—भगवन्! ज्ञानकर्मणोः ज्ञानस्य कर्मणश्च यत्फलं त्वया प्रोक्तं ब्रह्मलोके चन्द्रलोके भोगान् भुङ्क्ते गंधर्वादिषु लोकेषु कथं भोगः केन रूपेण भोगो भवति ? तत्र कश्चन देवत्वं प्राप्नुयात् प्राप्नोति, कश्चित् इन्द्रत्वमेति, प्राप्नोति एतत्कर्मफलं वा विद्याफलं वा ? हे गरिजाकांत ! तद् ब्रूहि। मम तत्र तद्विषये महान् संशय इत्यर्थः॥ ३१॥

श्री भगवानुवाच—

तद्विद्या-कर्मणोरेवानुसारेण फलं भवेत्।
युवा च सुंदरः शूरो नीरोगो बलवान् भवेत्॥ ३२॥
सप्तद्वीपां वसुमतीं भुङ्क्ते निष्कंटकं यदि।
स प्रोक्तो मानुषानंदस्तस्माच्छतगुणो मतः॥ ३३॥

श्री भगवानुवाचेत्यादि—तत्पूर्वोक्त गंधर्वलोक भोग-गंधर्वत्वदेवत्वेन्द्रत्वादिप्राप्तिरूपं फलं विद्याकर्मणोः अनुसारेणैव, यादृशी विद्या यादृशं

ज्ञानं यादृशं कर्म तयोरनुसारेणैव तादृशं देवत्वगन्धर्वत्वादि तादृश-भोगादिरूपं फलं भवेदित्यर्थः। तादृशज्ञानाधिक्य-निबंधनं उत्तरोत्तरं सुखाधिक्यमाह—युवेत्यादि—युवा यौवनस्थः सुंदरः अति रमणीय रूपवान् शूरः युद्धे अनिवर्ती अतिशौर्यवान् नीरोगः न विद्यते रोगो व्याध्यादि यस्य तादृशो बलवान् यो भवेत् सप्तद्वीपां वसुमतीं भुङ्क्ते निष्कंटकं यथा स्यात्तथा सप्तद्वीपावच्छिन्नां वसुमतीं यदि भुनक्ति तदा तस्य यः आनंदः सः मानुषानंदः प्रोक्तः ॥ ३३ ॥

मनुष्यस्तपसा यस्तु गंधर्वो जायतेऽस्य तु।
तस्माच्छतगुणो देवगंधर्वाणां न संशयः ॥ ३४ ॥

मनुष्येत्यादि—यस्तु मनुष्यस्तपसा गंधर्वो जायते अस्य मनुष्य गंधर्वस्य यः आनंदः सः तस्मान्मानुषानंदात् शतगुणो मतः श्रुतिसंमत इत्यर्थः। तस्मान्मनुष्यगंधर्वानंदात् देवगंधर्वाणां यः आनंदः सः शतगुणो न संशयः। श्रुतिसिद्धत्वात् संशयो नास्तीत्यर्थः ॥ ३४ ॥

एवं शतगुणानंद उत्तरोत्तरतो भवेत्।
पितॄणां चिरलोकानां अज्ञातसुरसंपदाम् ॥ ३५ ॥

एवमित्यादि—एवं पूर्वोक्त क्रमेणोत्तरोत्तरं पितॄनारभ्य ब्रह्मानंद-पर्यंतं शतगुणानंदो भवेदित्यर्थः, पितॄणामित्यादि चिरलोकानां पितॄणां आजान पितॄणां अग्निष्वात्तादि पितॄणां अज्ञातसुरसंपदां अज्ञाता सुराणां देवानां संपद्यैस्तेषां पितॄणां देवगंधर्वानंदापेक्षया शतगुण आनंद इत्यर्थः ॥ ३५ ॥

देवतानामथेंद्रस्य गुणास्तद्वत्-प्रजापतेः।
ब्रह्मणश्चैवमानंदाः पुरस्तादुत्तरोत्तरम् ॥ ३६ ॥

देवेत्यादि—देवतानां तथा इन्द्रस्य तद्वत्प्रजापतेः हिरण्यगर्भस्य ब्रह्मणश्च एतेषामुत्तरोत्तरं पुरस्तात् पूर्वस्मात् पूर्वस्मात् आनंदाः गुणाः शतगुणा इत्यर्थः। "**गुरोस्तद्व**"दिति पाठे गुरोर्बृहस्पतेरित्यर्थः ॥ ३६ ॥

ज्ञानाधिक्यात् सुखाधिक्यं नान्यदस्ति सुरालये।
श्रोत्रियो वृजिनोऽकामहतो यश्च द्विजो भवेत् ॥ ३७ ॥

ज्ञानेत्यादि—अत्र सुरालये देवानामालये ज्ञानाधिक्यात् सुखाधिक्यं सुखाधिक्ये ज्ञानाधिक्यमेव, नियामकं-नान्यदस्ति अन्यन्नियामकं नास्ति, यश्च द्विजः श्रोत्रियः श्रोत्रिय शब्दार्थस्तु मनुनोक्तः "**जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते**" एकां वा शाखामधीते स श्रोत्रियः। तादृशोऽवृजिनः वृजिनं पापं तद्रहितः, अकामहतः कामनारहितः निस्स्पृहः एतादृशो यो भवेत्॥ ३७॥

तस्याप्येवं समाख्याता आनंदाश्चोत्तरोत्तरम्॥ ३८॥

तस्यापीति—एवं पूर्वोक्त क्रमेणोत्तरोत्तरं ये आनंदाः समाख्याताः ते सर्वे तस्यापि एतादृश द्विजस्यापीत्यर्थः॥ ३८॥

आत्मज्ञानात् परं नास्ति तस्माद् दशरथात्मज।<br>
ब्राह्मणः कर्मभिर्नैव वर्धतेनैव हीयते॥ ३९॥

आत्मज्ञानेत्यादि—हे दशरथात्मज! यस्माज्ज्ञानाधिकयात् सुखाधिक्यं तस्मादात्मज्ञानात् परमुत्कृष्टं नास्तीत्यर्थः। ब्राह्मण इत्यादि—ब्रह्मवेत्तीति ब्राह्मणः। तादृशः कर्मभिः धर्माधर्मजनकैः कर्मभिः न वर्धते नैव हीयते धर्माधर्मजन्य सुखदुःखभाङ् न भवतीत्यर्थः॥ ३९॥

न लभ्यः पातकेनैव कर्मणा ज्ञानवान् यदि।<br>
तस्मात् सर्वाधिको विप्रो ज्ञानवानेव जायते॥ ४०॥

न लभ्य इत्यादि—यदि विप्रो ज्ञानवान् भवति तदा पातकेन कर्मणा पापजनकेन कर्मणा न लभ्यः न स्पृश्यः, ज्ञानवशात् पातकं ज्ञानिनं न स्पृशतीत्यर्थः। उपसंहरति तस्मादित्यादि—ज्ञानवान् विप्रः सर्वाधिको जायते सर्वेभ्योऽधिको भवतीत्यर्थः॥ ४०॥

अत्र कर्मफलमपि तदनुकूलज्ञान तारतम्य निबंधन तारतम्यवदित्याह—ज्ञात्वेत्यादि—

ज्ञात्वा यः कुरुते कर्म तस्याक्षय्यफलं भवेत्॥ ४१॥

यः कर्मण अंगोपांगानि ज्ञात्वा कर्म कुरुते तस्याक्षय्यं फलं भवेत्। अन्यस्य तादृशं फलं न भवतीत्यर्थः॥ ४१॥

यत्फलं लभते मर्त्यः कोटिब्राह्मण-भोजनैः ।
तत्फलं समवाप्नोति ज्ञानिनं यस्तु भोजयेत् ॥ ४२ ॥

यत्फलमित्यादि—कोटि ब्राह्मण भोजनैः यादृशं फलं लभते ज्ञानिनं ब्रह्मज्ञानिनं एकं यस्तु भोजयेत् सः तादृशं फलमवाप्नोतीत्यर्थः ॥ ४२ ॥

ज्ञानवंतं द्विजं यस्तु द्विष्यते च नराधमः ।
स शुष्यमाणो म्रियते यस्मादीश्वर एव सः ॥ ४३ ॥

ज्ञानवंतमित्यादि—ज्ञानवंतं आत्मवंतं द्विजं यो नराधमः द्विष्यते द्वेष्टीत्यर्थः, सः शुष्यमाणः अतिदुःखितः सन् म्रियते, यस्मात् स आत्मज्ञानी ईश्वर एव तस्मात् ॥ ४३ ॥

उपासको नयात्येव यस्मात् पुनरधोगतिम् ।
उपासनरतो भूत्वा तस्मादास्व सुखी भव ॥ ४४ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु एकादशोऽध्यायः

उपासेत्यादि—यस्मात्कारणादुपासको भगवदुपासनावान् अधोगतिं नरकं न याति तस्मात् कारणात् हे नृप ! त्वमपि उपासनारतो भूत्वा सुखी आस्व तिष्ठ "**तस्माद्वा स्वसुखी नृपे**"ति पाठे वा शब्दोनुक्त-समुच्चयार्थकः तथा च, श्रवणादिकं समुच्चिनोतीत्यर्थः ॥ ४४ ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
एकादशोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## द्वादशोऽध्यायः

श्रीराम उवाच—

भगवन्! देवदेवेश नमस्तेस्तु महेश्वर!।
उपासनाविधिं ब्रूहि देश–कालंच तस्य तु।
अङ्गानि नियमांश्चैव मयि तेऽनुग्रहो यदि॥ १॥

हे भगवन्! देवदेवेश देवानां यो देवः ब्रह्मा, तस्यापीश-हे महेश्वर! ते तुभ्यं नमोऽस्तु। "**उपासनारतो भूत्वे**"ति त्वया, यदुक्तं तत्र उपासना-विधिं उपासनाप्रकारं तस्याः उपासनयाः देशश्च कालश्च देशकालौ। तयोः यः समाहारः देशकालं, तद्द्वयं चकाराद्उपास्यपरिग्रहः, तं, अङ्गानि तदङ्गानि पूर्वाङ्गानि, उत्तराङ्गानि, च नियमान् उपासनोपयोगिनियमान् चकारादङ्गाङ्गपरिग्रहः, मयि ते तव यद्यनुग्रहः तर्हि ब्रूहीत्यर्थः॥ १॥

ईश्वर उवाच—

शृणु राजन्! प्रवक्ष्यामि देशं कालमुपासने।
सर्वाकारोऽहमेवैकः सच्चिदानन्दविग्रहः॥ २॥

हे राम! उपासने देशं कालं उपासनोपयोगिदेशं, कालंचेत्यर्थः। इदमुपलक्षणं, तत्प्रकारांगादि कर्मापि बोध्यम्, "**देशकालमुपासन**"मिति पाठे उपासनमित्युपलक्षणं, तत्प्रकारं तदङ्गादिकमपि बोध्यम्, अत्र उपास्यस्य उपासनाप्रकारमाह। सर्वाकारोहमित्यादि–अहमेकः सच्चिदानन्द-विग्रहः सच्चिदानन्दरूपः सर्वाकारः सकलदेवस्वरूपः॥ २॥

ननु तव सच्चिदानन्दरूपत्वे कथं सर्वाकारत्वमिति अत आह—

मदंशेन परिच्छिन्ना देहाः सर्वदिवौकसाम्॥ ३॥

ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव राजेन्द्र! यजन्त्यविधिपूर्वकम्॥ ४॥

यतः सर्वदिवौकसां सर्वेषां देवानां देहाः मदंशेन परिच्छिन्नाः मन्माया-प्रतिबिंबितेन जीवेन परिच्छिन्नाः विशिष्टाः, अतो बिम्बप्रतिबिम्बयो-रैक्येन मम सर्वाकारत्वमित्यर्थः। मम सर्वाकारत्वात् अन्यदेवतोपासन-मपि ममैवेत्याह "**ये त्वन्यदेवते**"त्यादि ; हे राजेन्द्र! ये तु भक्ताः भक्ति-युक्ताः श्रद्धयान्विताः सन्तः अन्यदेवता यजन्ते उपासते, यद्वा ये अन्यदेवता-भक्ताः अन्यासु देवतासु भक्तिः येषां ते, श्रद्धयान्विताः सन्तो ये यजन्ते, ते अर्थात्ता एव देवता यजन्ते, ते जनाः मामेव यजन्ति अविधिपूर्वकं मदीयो-पासनायां यो विधिः सत्वादि रूपेण यद्विधानं तत्पूर्वकं न भवति, तत्राप्यह-मेवोपास्य इत्यर्थः ॥ ४ ॥

यस्मात् सर्वमिदं विश्वं मत्तो न व्यतिरिच्यते।
सर्वक्रियाणां भोक्ताहं सर्वस्याहं फलप्रदः ॥ ५ ॥

यस्मादिदं विश्वं मत्तो न व्यतिरिच्यते, सर्वं मदात्मकं, अतः सर्व-क्रियाणां सर्वासां क्रियाणां यागादीनां यागादिनिर्वाहकहविर्विभागा-दीनां अहं भोक्ता, अत एव सर्वस्य तादृश क्रियाशालिनः अहं फलप्रदः, तत्तत्कर्मानुसारेणाहं फलं प्रयच्छामीत्यर्थः ॥ ५ ॥

नन्विन्द्राद्याकारेण य उपासते तेषां फलदातृत्वं तव कथमित्यत आह—

येनाकारेण ये मर्त्या मामेवैकमुपासते।
तेनाकारेण तेभ्योऽहं प्रसन्नो वाञ्छितं ददे ॥ ६ ॥

येनाकारेण विष्णुत्वादिरूपेण ये मर्त्या उपासते ते मामेकमेवोपासते, तेनाकारेण विष्ण्वाद्याकारेण तेभ्यः तादृशोपासकेभ्यः अहं प्रसन्नः सन् वाञ्छितमभिलषितं फलं ददे प्रयच्छामि ॥ ६ ॥

विधिनाऽविधिनावापि भक्त्या ये मामुपासते।
तेभ्यः फलं प्रयच्छामि प्रसन्नोऽहं न संशयः ॥ ७ ॥

विधिना विधिबोधित प्रकारेण, अविधिना तत्प्रकारं विना, वा शब्दः अपि शब्दश्चानास्थायां, भक्त्या मद्विषयिण्या मां ये उपासते तेभ्यः तादृश भक्तियुक्तोपासकेभ्यः अहं प्रसन्नः सन् फलं प्रयच्छामि, अत्र-संशयो नास्ति ॥ ७ ॥

मद्भक्तेरवितर्क्यः प्रभाव इति दर्शयन्नाह—

अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः॥ ८॥

सुदुराचारोऽप्यन्यन्त दुराचारोऽपि अनन्यभाक् पृथक्त्वेन देवतान्तर भक्तिमकुर्वन् मामेव परमेश्वरं भजते तर्हि साधुः स एव स मन्तव्यः, यतोऽसौ सम्यग् व्यवसितः शोभन मध्यवसानं कृतवान् इत्यर्थः॥ ८॥

मद्भक्तास्तु मत् प्रसादेन कृतार्था भवन्तीत्याह—

स्वजीवत्वेन यो वेत्ति मामेवैकमनन्यधीः।
तं न स्पृशन्ति पापानि ब्रह्महत्यादिकान्यपि॥ ९॥

यः अनन्यधीः अनन्या नास्ति मद्व्यतिरेकेण अन्यत् कारणं काम्यं यस्याः तादृशी धीर्यस्य तादृशः सन् स्वजीवत्वेन जीवाभिन्नत्वेन यो मामेकं वेत्ति जानाति, तं ब्रह्महत्यादिकान्यपि पापानि न स्पृशन्ति, तस्य ब्रह्म-हत्यादिकान्यपि पापानि नोत्पद्यन्त इत्यर्थः॥ ९॥

अत्रोपासनाविधिमाह—

उपासाविधयस्तत्र चत्वारः परिकीर्तिताः।
संपदारोपसंवर्गाध्यासा इति मनीषिभिः॥ १०॥

तत्रोपासनाप्रश्ने उपासनाविधयो मनीषिभिः विद्वद्भिः चत्वारः परिकीर्तिताः सम्पदारोपसंवर्गाध्यासा इति चत्वारः॥ १०॥

तत्र प्रथमतः संपद्विधिमाह—

अल्पस्य वाधिकत्वेन गुणयोगाद्विचिन्तनम्।
अनन्तं वै मन इति सम्पद् विधिरुदीरितः॥ ११॥

अल्पस्यैकस्य मनसः गुणयोगात् नानाविधवृत्तिरूपगुणयोगात् अधिकत्वेनानेकत्वेन विचिन्तनं यत् (परिचिन्तनं) परिभावनं, तत् कीदृश-मित्यत आह, अनन्तमित्यादि—तथा चानन्तं वै मनः, अनन्ता वै विश्वे-देवाइत्यादि—एतादृशरूपेण यच्चिन्तनं सः संपद्विधिरुदीरितः संपदुपासना बोधक विधेरयमर्थ इत्यर्थः॥ ११॥

विधावारोप्य योपासा सारोपः परिकीर्तितः।
यद्वदोङ्कारमुद्गीथमुपासीतेत्युदाहृतः ॥ १२ ॥

आरोपरूपोपासनामाह—विधावित्यादि—विधौ विधिविषये अधिष्ठाने इति यावत्, तत्र या गुणानारोप्योपासा तत्तद्गुण विशिष्टत्वेनोपासनमिति यावत्। सः आरोपः परिकीर्तितः। अत्र दृष्टान्तमाह—यद्वदोङ्कारेत्यादि "**ओङ्कारमुद्गीथमुपासीते**"त्यनेन रूपेणाऽऽरोप उदाहृतः शास्त्रादौ ॥ १२ ॥

अध्यासोपासाविधिमाह—

आरोपो बुद्धिपूर्वेण य उपासाविधिश्च सः।
योषित्यग्निमतिर्यद्वदध्यासः स उदाहृतः ॥ १३ ॥

बुद्धिपूर्वेणाऽऽहार्यतया य आरोपः स उपासाविधिः अध्यास उदाहृतः। अत्र दृष्टान्तमाह—"**योषितीत्यादि**"। योषिति अग्निमतिरग्निज्ञानं यद्वत् यथेत्यर्थः ॥ १३ ॥

संवर्गोपासनामाह—क्रियेति—

क्रियायोगेन चोपासाविधिः संवर्ग उच्यते।
संवर्गवायुः प्रलये भूतान्येकोऽवसीदति ॥ १४ ॥

क्रियायोगेन तत्तत्कार्यविशेषेण य उपासाविधिः स संवर्ग उच्यते, तथा चाह भाष्यकारः—संहरणात् संहननात् स्वात्मीभावात् वायुः संवर्ग इति, प्रलये प्रलयसमये तादृशो वायुः संवर्ग एकः स भूतानि पञ्चभूतानि अवसीदति नाशयतीत्यर्थः ॥ १४ ॥

अत्र अन्तरुपासनमाह—

उपसंगम्य बुद्ध्या यदासनं देवतात्मना।
तदुपासन मन्तःस्यात् तद्बहिः संपदादयः ॥ १५ ॥

देवतात्मना देवतास्वरूपेण बुद्धचा उपसंगम्य आत्मानं वशीकृत्य यदासनमवस्थानं तदन्तरुपासनमिति, पूर्वोक्ताः संपदादयस्तु बहिरुपासना इत्यर्थः ॥ १५ ॥

अत्र सर्वस्यामेवोपासनायां विजातीयज्ञानराहित्य विशिष्ट सजातीय-ज्ञानसन्ततिरपेक्ष्यत इत्याह—

ज्ञानान्तरानन्तरित सजातिज्ञानसन्ततेः।
संपन्नदेवतात्मत्वमुपासनमुदीरितम् ॥ १६ ॥

ज्ञानान्तरं स्वविजातीयविज्ञानं स्वविषयातिरिक्त-विषयविषयकं, तेनानन्तरिता तद्व्यवधानरहिता या सजातीयज्ञान सन्ततिः, ततः संपन्न-देवतात्मत्वं प्राप्तदेवतास्वरूपत्वं उपासकस्य यदुपासनं सामान्यमुपासन-मुदीरितं इत्यर्थः ॥ १६ ॥

संपदादिषु बाह्येषु दृढबुद्धिरुपासना।
उपासनमितिप्रोक्तं तदङ्गानि ब्रुवे शृणु ॥ १७ ॥

तीर्थक्षेत्रादि-गमन-श्रद्धां तत्र परित्यजेत्।
स्वचित्तैकाग्रता यत्र तत्रासीत सुखं द्विजः ॥ १८ ॥

बाह्येषु संपदादिषु यदुपासनं दृढबुद्धिः अस्मादवश्यं फलं भविष्यतीति निश्चयात्मिका बुद्धिः सैवोपासनं प्रोक्तं, प्रकृष्टमुपासनमित्यर्थः, तादृशो-पासनायां यान्यङ्गानि तानि ब्रुवे त्वं शृणु ॥ १७ ॥

तत्रोपासनाविधौ तीर्थक्षेत्रगमनादि-श्रद्धां तत्र तत्र गन्तव्यमिति मनोवृत्तिविशेषं परित्यजेत्, यत्र स्वचित्तैकाग्रता स्वकीयचित्तस्य विषयान्तर संचारराहित्यं तत्र सुखं यथा स्यात्तथा तत्र द्विजोऽधिकारी आसीतेत्यर्थः ॥ १८ ॥

अत्रोपासनाया मासनादिकमाह—कंबल इत्यादि—

कंबले मृदु तल्पे वा व्याघ्रचर्मणि वा स्थितः।
विविक्त देशे नियतः समग्रीवशिरस्तनुः ॥ १९ ॥

अत्याश्रमस्थः सकलानीन्द्रियाणि निरुध्य च।
भक्त्याथ स्वगुरुं नत्वा योगं विद्वान् प्रयोजयेत् ॥ २० ॥

तथा च कंबलादावासने स्थितः विविक्ते निर्जने देशे नियतः समग्रीवा शिरस्तनुः समा ग्रीवा यत्र तादृशं शिरो यस्यां तनौ, तादृशी तनुर्यस्य तादृशः ॥ १९ ॥

अत्याश्रमस्थ इत्यादि—अति अधिको ब्रह्मचारि-गृहस्थ-वानप्रस्थ-कुटीचक-बहूदक-हंसेभ्यः-परमहंसलक्षणः आश्रमः, तस्मिन् तिष्ठतीत्यत्याश्रमस्थः। इदंच कैवल्योपनिषद्भाष्ये द्रष्टव्यम्। तादृशः सकलानीन्द्रियाणि ज्ञानकर्मेन्द्रियाणि निरुद्धय स्वस्वविषयेभ्योऽवरुध्य भक्त्या देववद्भक्त्या स्वगुरुं स्वस्योपदेष्टारं गुरुं नत्वा नमस्कृत्य, विद्वान् पातंजलादि-सकल-योगशास्त्रार्थाभिज्ञः सन् योगं योगाभ्यासं प्रयोजयेत् प्रयुञ्जीत ॥ २० ॥

अत्र मनसो वृत्तिनिरोधं विना ज्ञानकर्मेन्द्रियाणि न वश्यानि भवन्तीत्यन्वयव्यतिरेकाभ्यां दर्शयति—यस्त्विति।

यस्त्वविज्ञानवान् भवत्यव्यक्त-मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥ २१ ॥

विज्ञानी यस्तु भवति यत्नेन मनसा सह।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः॥ २२ ॥

यः अविज्ञानवान् योगशास्त्रजन्यज्ञानाभाववान् अव्यक्तमनसा व्यक्तं स्फुटं निर्मलमिति यावत्। तद्भिन्नमनसा विशिष्टः यो भवति, तस्य सर्वाणि इन्द्रियाणि सदा अवश्यानि भवन्ति। दृष्टान्तमाह—दुष्टेत्यादि ॥ २१ ॥

यत्नेन मनसा निर्मलेन मनसा सहितस्य विज्ञानिनः तस्येन्द्रियाणि वश्यानि भवन्ति। तत्र दृष्टान्तमाह—सदश्वा इत्यादि ॥ २२ ॥

यस्त्व विज्ञानवान् भवत्यमनस्कः सदाऽशुचिः।
न च तत्पदमाप्नोति संसारमपि गच्छति ॥ २३ ॥

यः अविज्ञानवान् (भवति) शास्त्रजन्यज्ञानाभाववान् अमनस्कः निर्मलान्तःकरणरहितः भवति अत एव सदा अशुचिः, आन्तरशौचस्यैव शौचत्वात्, तादृशः तत्पदं तादृशं परमं पदं नाप्नोति संसारमपि गच्छतीत्यर्थः ॥ २३ ॥

विज्ञानी यस्तु भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद् भूयो न जायते ॥ २४ ॥

यस्तु विज्ञानी शास्त्रजन्यज्ञानवान् समनस्को निर्मलान्तःकरणः अत एव सदा शुचिः तादृशो यः तत् फलं तादृशं परमं पदं अवाप्नोति । यस्मात् तादृश पदप्राप्त्यनन्तरं भूयो न जायते पुनः संसारी न भवतीत्यर्थः ॥ २४ ॥

विज्ञान-सारथिर्यस्तु मनः-प्रग्रह एव च ।
सोऽध्वनः पारमाप्नोति ममैव परमं पदम् ॥ २५ ॥

यस्तु विज्ञानसारथिः शास्त्रजन्यज्ञानमेव सारथिः सहायो यस्य तादृशः, मनसः प्रग्रहो निग्रहो यस्य तादृशः, अध्वनः गत्यागत्यादिशालिनः संसारस्येति यावत्, पारमन्तमाप्नोति, तत् कीदृशमित्यत आह—ममैव परमं पदं मत्स्वरूपं परमं पदमित्यर्थः ॥ २५ ॥

हृत्पुण्डरीकं विरजं विशुद्धं विशदं तथा ।
विशोकञ्च विचिन्त्यात्र ध्यायेन्मां परमेश्वरम् ॥ २६ ॥

हृत्पुण्डरीकं हृदयकमलं विरजं निर्दोषं विचिन्त्य भावयित्वा तत्र विशुद्धं विगतसमस्तरागादिदोषं, विशदं निर्मलं विशोकं विगतशोकं अदुःखं आनन्दपूर्णहृदयं परमेश्वरं परमैश्वर्यवन्तं मां ध्यायेत् ॥ २६ ॥

अचिन्त्यरूपमव्यक्तमनन्तममृतं शिवम् ।
आदिमध्यान्तरहितं प्रशान्तं ब्रह्मकारणम् ॥ २७ ॥

एकं विभुं चिदानन्दमरूपमजमद्भुतम् ।
शुद्धस्फटिकसंकाशमुमादेहार्धं धारिणम् ॥ २८ ॥

व्याघ्रचर्माम्बरधरं नीलकण्ठं त्रिलोचनम् ।
जटाधरं चन्द्रमौलिं नागयज्ञोपवीतिनम् ॥ २९ ॥

व्याघ्रचर्मोत्तरीयञ्च वरेण्यमभयप्रदम् ।
पराभ्यामूर्ध्वहस्ताभ्यां बिभ्राणं परशुं मृगम् ॥ ३० ॥

अचिन्त्यरूपं वाङ्मनसातीतत्वेन प्रत्ययसन्तत्यविषयं अव्यक्तंशब्दाद्यशेषविशेषशून्यत्वान्नस्पष्टं, अनन्तं नाशरहितं अमृतं निरतिशयानन्दरूपं शिवं मङ्गलरूपं, आदिमध्यान्तरहितं उत्पत्ति परिच्छेद विनाशवर्जितं, प्रशांतं अविद्यादिदोषरहितं, ब्रह्म बृहत्, सर्वस्मादभ्यधिकं कारणं जगज्जन्मादिकारणं, एकमद्वितीयं, विभुं व्यापिनं समर्थं वा चिदानन्दं स्वयंप्रकाशमानं, निरतिशयानन्दं, अरूपं चिदानन्दव्यतिरिक्तरूपरहितं, अजं उत्पत्तिरहितं, अद्भुतमाश्चर्यकरं "शुद्धस्फटिकसङ्काशमुमादेहार्धधारिण" मित्यादिरूपं वरेण्यं वरप्रदहस्तवन्तं, अभयप्रदमभयप्रदहस्तवन्तं पराभ्यां ऊर्ध्वबाहुभ्यां परशुं मृगञ्च बिभ्राणम् ।। ३० ।।

कोटि मध्याह्नसूर्याभं चन्द्रकोटि सुशीतलम् ।
चन्द्रसूर्याग्निनयनं स्मेरवक्त्र सरोरुहम् ।। ३१ ।।

भूति भूषित सर्वाङ्गं सर्वाभरणभूषितम् ।।

एतादृशं मां ध्यायेदिति पूर्वतनेनान्वयः ।। ३१ ।।

एवमात्मारणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञाननिर्मथनाभ्यासात् साक्षात् पश्यति मां जनः ।। ३२ ।।

आत्मारणिं कृत्वा आत्मानं अन्तःकरणं, अरणिं वह्निजनकं, अत्र संस्कृतं काष्ठं कृत्वा विधाय, अधरारणित्वेन चिन्तयित्वेत्यर्थः। प्रणवमोङ्कारमुत्तरारणिं, अत्रापि चकारः कृत्वेत्येतदनुवृत्यर्थः। ज्ञाननिर्मथनाभ्यासात् ज्ञानस्य सर्वात्मकोऽहमस्मीत्येवंरूपस्य निर्मन्थनं युक्तिभिर्विलोडनं, तस्याभ्यासः आवृत्तिरूपः ज्ञाननिर्मथनाभ्यासः तस्मात्, जनो मां साक्षात् पश्यति मद्विषयकापरोक्षज्ञानवान् भवतीत्यर्थः ।। ३२ ।।

वेदवाक्यैरलभ्योऽहं नाशान्तेनापि चेतसा ।
ध्यानेन वृणुते यो मां सर्वदाहं वृणोमि तम् ।। ३३ ।।

अहं वेदवाक्यैः श्रवणमननादिरहितवेदवाक्यैः अलभ्यः शास्त्रैरन्यैरलभ्यः, चेतसा असंस्कृतान्तःकरणेनापि न लभ्यः, किन्तु ध्यानेन यो मां सर्वदा वृणुते उपास्ते तमहं वृणोमि अनुगृह्णामीत्यर्थः ।। ३३ ।।

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेन लभेत माम्॥ ३४॥

दुश्चरितात् पापाचरणात् अविरतः, अत्र सप्तम्यर्थे पंचमी, तथाचाविरतपापाचरणवानित्यर्थः, एतादृशो यो न, यः अशान्तो न, यः असमाहितो न, यः अशान्तमानसो न, सः प्रज्ञानेन प्रकृष्टज्ञानेन मां लभते॥ ३४॥

जाग्रत् स्वप्नसुषुप्त्यादि प्रपञ्चो यः प्रकाशते।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते॥ ३५॥

जाग्रत् स्वप्नसुषुप्त्यादिरूपः प्रपञ्चो यस्मात् एतादृशो यः प्रकाशते स्वप्रकाशरूपो भवति, तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः संसाररूपसर्वबन्धैः प्रमुच्यते॥ ३५॥

त्रिषु धामसु यद् भोग्यं भोक्ता भोगश्च यद्भवेत्।
तज्ज्योतिर्लक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः॥ ३६॥

जाग्रत्स्वप्नसुषुप्तिषु धामसु स्थानेषु यत् प्रसिद्धं भोग्यं स्थूल प्रविविक्तानन्दस्वरूपं भोक्ता विश्वतैजसप्राज्ञाख्यः, भोगश्च स्थूल प्रविविक्तानन्दभोगोऽपि यदुक्तं त्रिधाम भोज्यादि प्रपञ्चजातं भवेत् तज्ज्योतिः तस्य प्रकाशकज्योतिः तज्ज्योतिर्लक्षणः तत्प्रकाशकस्वरूपः साक्षी चिन्मात्रः सदाशिवोऽहं। अथवा त्रिषु धामसु स्वर्गमर्त्यपातालेषु यद्भोग्यं भोगविषयं भोक्ता भोगश्चैतत् सर्वं यद्भवेत् तत्सर्वं ज्योतिर्लक्षणः चिन्मात्रः सदाशिवोऽहं॥ ३६॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
सर्वाध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च
॥ ३७॥

एकः अद्वितीयः, देवः स्वयं प्रकाशः सर्वभूतेषु गूढः प्रच्छन्नः सर्वव्यापी सर्वव्यापकः, सर्वभूतान्तरात्मा सर्वेषां भूतानां अन्तरात्मा परमात्मा अन्तर्यामिरूपः, सर्वाध्यक्षः सर्वं द्रष्टा, सर्वभूताधिवासः सर्वेषां भूताना-

मधिवासः अधिष्ठानरूपः, साक्षी असङ्गः सन् द्रष्टा, चेता चेतनः केवलः शुद्धचैतन्यरूपः अत एव निर्गुणः ॥ ३७ ॥

एकोऽवात्सीत् सर्वभूतान्तरात्मा ह्येकं बीजं नित्यदा यः करोति ।
तं मां नित्यं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्
॥ ३८ ॥

सर्वभूतान्तरात्माप्येकः अद्वितीयः सन् अवात्सीत् तिष्ठति, यः एकं, बीजं कारणं सन् नित्यदा नित्यं करोति जनयति, तं तादृशं मां ये धीराः अनुपश्यन्ति, तेषां धीराणां शाश्वती शान्तिः संसारनिवृत्तिः इतरेषांतु-नेत्यर्थः ॥ ३८ ॥

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः
॥ ३९ ॥

यथा एकोऽग्निः भुवनं जगत् प्रविष्टः सन् रूपं रूपं यस्य यस्य वस्तुनो यादृशं यादृशं रूपं तादृश तादृश प्रतिरूपो बभूव, तद्गतदोषैर्नलिप्यते । तथा सर्वभूतान्तरात्माप्येकः लोकदुःखैर्न लिप्यते यतोऽहं बाह्य असङ्गः ॥ ३९ ॥

वेदेह यो मां पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
स एव विद्वानमृतोऽत्र भूयो नान्यस्तु पन्था अयनाय विद्यते
॥ ४० ॥

हिरण्यगर्भं विदधामि पूर्वं वेदांश्च तस्मै प्रहिणोमि योऽहम् ।
तं देवमीड्यं पुरुषं पुराणं निश्चित्य मां मृत्युमुखात् प्रमुच्यते
॥ ४१ ॥

पूर्वं सर्गादौ हिरण्यगर्भं हिरण्यगर्भाख्यं विदधामि, तस्मै हिरण्य-गर्भाय वेदांश्च प्रहिणोमि उपदिशामि, तं तादृशं पुराणं पुरुषमीड्यं स्तुत्यं मां निश्चित्य मृत्युमुखात् प्रमुच्यते संसारान्मुक्तो भवतीत्यर्थः ॥ ४१ ॥

एवं शान्त्यादि युक्तः सन् वेत्ति मां यस्तु तत्त्वतः।
निर्मुक्त-दुःखसंतानः सोऽन्ते मय्येव लीयते ॥ ४२ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु उपासनाप्रपञ्चोनाम
द्वादशोऽध्यायः

एवं पूर्वोक्त प्रकारेण शान्त्यादि युक्तः सन् यो मां तत्त्वतो वेत्ति, स निर्मुक्त दुःखसंतानः सन् अन्ते अन्तसमये मय्येव लीयते, मत्स्वरूपो भवतीत्यर्थः ॥ ४२ ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टांङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
उपासनाप्रपञ्चोनाम
द्वादशोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## त्रयोदशोऽध्यायः

सूत उवाच—

एवं श्रुत्वा कौसलेयस्तुष्टो मतिमतां वरः।
पप्रच्छ गिरिजाकांतं सुभगं मुक्तिलक्षणम् ॥ १ ॥

कौसलेयो रामः एवं पूर्वोक्तं श्रुत्वा तुष्टः सन् सुभगं सुमनोहरं गिरिजाकांतं मुक्तिलक्षणं पप्रच्छ ॥ १ ॥

श्रीराम उवाच—

भगवन्! करुणाविष्टहृदय! त्वं प्रसीद मे।
स्वरूपलक्षणं मुक्तेः प्रब्रूहि परमेश्वर! ॥ २ ॥

करुणाविष्टहृदय, हे भगवन्! मे मम त्वं प्रसीद। मुक्तेः स्वरूप-लक्षणं ब्रूहि। स्वरूपं लक्षणमिति पाठे मुक्तेः स्वरूपं तल्लक्षणं च ब्रूहीत्यर्थः ॥ २ ॥

श्रीभगवानुवाच—

सालोक्यमपि सारूप्यं सार्ष्ट्यं सायुज्यमेव च।
कैवल्यं चेति तां विद्धि मुक्तिं राघव! पंचधा ॥ ३ ॥

सालोक्यं सारूप्यं सार्ष्ट्यं सायुज्यं कैवल्यं चेत्यनेक प्रकारेण हे राघव! तां मुक्तित्वेन व्यवह्रियमाणं पंचधा विद्धि। अत्र कैवल्यं सायुज्यं चेति नामभेदात् पंचधेत्युक्तं, वस्तुतस्तु सायुज्यमेव कैवल्यमिति न स्वरूप-भेद इति ध्येयं, तदुक्तं **सूतसंहितायां** मुक्तिखंडे ईश्वर उवाच "**भद्रं भद्रं महाविष्णो त्वया पृष्टं जगद्धितं। वदामि संग्रहेणाहं तच्छृणु श्रद्धया सह। बहुधा श्रूयते मुक्तिर्वेदांतेषु विचक्षण! एका सालोक्यरूपोक्ता द्वितीया कमलेक्षण! सामीप्यरूपा सारूप्या तृतीया कमलेक्षण! अन्या सायुज्यरूपोक्ता सुखदुःख विवर्जिता। सर्वद्वंद्वविनिर्मुक्ता सत्यविज्ञान-**

**रूपिणी। षड्भाव विक्रियाहीना शुभाशुभ विवर्जिता। केवलं ब्रह्म-रूपोक्ता सर्वदा सुखलक्षणा। न हेया नाप्युपादेया सर्वसंबंधवर्जिता। न दृष्टा न श्रुता विष्णो ! न चा स्वाद्या न तर्किता । सर्वाचरणनिर्मुक्ता न विज्ञेया निराश्रया। वाच्यावाच्यविनिर्मुक्ता लक्ष्यलक्षणवर्जिता। सर्वेषां प्राणिनां साक्षादात्मभूता स्वयं प्रभा। प्रतिबंधविनिर्मुक्ता सर्वदा-परमार्थतः। पुंविचारदशायां तु प्रतिबद्धास्वमायया। एषैव परमा-मुक्तिः प्रोक्ता वेदार्थ वेदिभिः। अन्याश्च मुक्तयः सर्वा अपराः परिकीर्तिताः। जन्मनाशाभिभूताश्च तारतम्येन संस्थिताः। स्पर्धयोपहृता नित्य परतंत्राश्च सर्वदा। सुखोत्तरा अपि श्रेष्ठा दुःखयुक्ताश्च सर्वदा। एताश्च मुक्तयोऽन्येषां केषां चिदधिकारिणां। विश्रांतिभूमयः साक्षान् मुक्तेः प्रोक्ताः क्रमेणवै "** ।। ११ ।। इति ।।

एतेनापि परममुक्तावपि तारतम्यं स्वीकुर्वंतो माध्वा निरस्ताः। अत एव अत्रापि शिवगीतायां मुक्तिं पंचधा विभज्यापि चतसृणामेवमुक्तीनां पृथक् पृथक् लक्षणस्योक्तत्वात् सायुज्यरूपायाः मुक्तेः स्वातंत्र्येण लक्षणस्या-नुक्तत्वाच्च कैवल्यमेव सायुज्यमुक्तिरिति अभिप्राय उन्नीयत इति। न च पंचधेत्यनेन विरोध इति वाच्यं। नामभेदनिबंधनव्यवहारभेदाय पंचधेत्युक्तमिति ध्येयम् ।। ३ ।।

तत्र प्रथमतः सालोक्यस्य लक्षणमाह—

मां पूजयति निष्कामः सर्वदा ज्ञानवर्जितः।
स मे लोकान् समासाद्य भुङ्क्ते भोगान् यथेप्सितान् ।। ४ ।।

यो निष्कामः फलाभिसंधिरहितः ज्ञानवर्जितः मत्स्वरूपज्ञानरहितः सर्वदा मां पूजयति सः मे मम लोकांन्समासाद्य प्राप्य यथेप्सितानभिलाषोप-नीतान् भोगान् भुङ्क्ते ।। ४ ।।

सारूप्यस्य लक्षणमाह—

ज्ञात्वा मां पूजयेद्यस्तु सर्वकामविवर्जितः।
मया समानरूपस्सन् मम लोके महीयते ।। ५ ।।

यः सर्वकामविवर्जितो मां ज्ञात्वा तत्तद्गुणविशिष्टतया ज्ञात्वा

पूजयेत् पूजां करोति सः मया समानरूपस्सन् मम लोके महीयते पूजितो भवतीत्यर्थः ॥ ५ ॥

साष्टर्यस्य लक्षणमाह—

इष्टापूर्तादि कर्माणि मत्प्रीत्यै कुरुते तु यः।
यत्करोति यदश्नाति यज्जुहोति ददाति यत् ॥ ६ ॥

यत्तपस्यति तत्सर्वं यः करोति मदर्पणम्।
मल्लोके स श्रियं भुङ्क्ते मत्तुल्यं प्राभवं भजन् ॥ ७ ॥

यः इष्टादिपूर्तादिकर्माणि—इष्टं यागादि, पूर्तं तटाकादि, तदादीनि तत्प्रभृतीनि दानादिकर्माणि मत्प्रीत्यै मत्प्रीतिमुद्दिश्य कुरुते अथ च यत्करोति यत्कर्म करोति, यदश्नाति यद्भुङ्क्ते, यज्जुहोति यद्धवनं करोति, यद्ददाति यत्तपस्यति तत्सर्वं मदर्पणं करोति सः मल्लोके मत्तुल्यं प्राभवं मत्तुल्यप्रभुत्वं भजन् श्रियं भुङ्क्ते ॥ ७ ॥

कैवल्य मुक्तिस्वरूपमाह—

यस्तु शान्त्यादि युक्तस्सन् मामात्मत्वेन पश्यति।
स जायते परंज्योतिरद्वैतं ब्रह्म केवलम् ॥ ८ ॥

यः शान्त्यादियुक्तः शमदमादियुक्तस्सन् मामात्मत्वेन स्वरूपत्वेन पश्यति सः परंज्योतिरद्वैतं केवलं ब्रह्म जायते ॥ ८ ॥

अतः स्वरूपावस्थानं मुक्तिरित्यभिधीयते।
सत्यं ज्ञानमनंतं सदानंदं ब्रह्म केवलम् ॥ ९ ॥

सर्वधर्मविहीनं च तस्माद्वाचामगोचरः।
सजातीय विजातीय पदार्थानामसंभवात् ॥ १० ॥

अतो मुक्तिः कैवल्यरूपा परममुक्तिः स्वरूपावस्थानमित्यभिधीयते, स्वरूपमेवाह—सत्यमित्यादिना—सत्यं कालत्रयाबाध्यं ज्ञानं ज्ञानस्वरूपं, अनंतं अंतरहितं सदानंदं सर्वदा स्वरूपं केवलमद्वैतं ब्रह्म व्यापकमित्यर्थः ॥ ९ ॥

सर्वधर्मविहीनं च चो हेतौ, तथाच यतः केवलं ब्रह्म सर्वधर्मविहीनं सर्वैर्धर्मैर्विहीनं, तस्मात् तद्ब्रह्म वाचामगोचरं शक्त्या वाग्विषयं न भवतीत्यर्थः, सर्वधर्मविहीनत्वमेवाह—सजातीयेत्यादिना—सजातीयाः स्वसमानजातीयाः विजातीया ये पदार्थाः तेषामसंभवो यतः तदुक्तं "**वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः। वृक्षान्तरात् सजातीयोविजातीयः फलादितः**" इति तद्वद्ब्रह्म व्यापीत्यर्थः ॥ १० ॥

उपसंहरति—

अतस्तद्व्यतिरिक्तानामद्वैतमिति संज्ञितम्।
मत्वा रूपमिदं राम ! शुद्धं यदभिधीयते ॥ ११ ॥

तद्व्यतिरिक्तानां सजातीय विजातीय व्यतिरिक्तानां अत्र वहुत्वमविवक्षितं, तद्व्यतिरिक्तस्येत्यर्थः। अद्वैतमिति संज्ञितं अद्वैतमिति संज्ञेत्यर्थः। मत्वेत्यादि—हे राम! इदं शुद्धं रूपं मत्वा यदभिधीयते तदद्वैतसंज्ञितमिति ॥ ११ ॥

ननु तव सजातीय-विजातीय-पदार्थराहित्यमेव न संभवति। स्थावर जंगमादीनां त्वय्येव प्रतीयमानत्वादित्यत आह—

मय्येव दृश्यते सर्वं जगत् स्थावरजंगमम्।
व्योम्नि गंधर्वनगरं यथा दृष्टे न दृश्यते ॥ १२ ॥

सत्यं। स्थावरजंगमात्मकं सर्वं जगत् मय्येव दृश्यते। किंतु व्योम्नि आकाशे गंधर्वनगरं यथा दृष्टे सति पुनः न दृश्यते तद्वज्जगत् प्रपंचोऽपि दृष्टे सति पुनः मयि न दृश्यते, "**यथा दृष्टं न दृश्यते**" इति पाठस्सुगम एव ॥ १२ ॥

तदेव प्रतिपादयति—

अनाद्यविद्यया विश्वं सर्वं मय्येव कल्प्यते।
निवर्तते च मय्येव मय्येवेदं विलीयते ॥ १३ ॥
मम स्वरूपज्ञानेन यदाऽविद्या प्रणश्यति।
तदैक एव वर्तेऽहं मनोवाचामगोचरः ॥ १४ ॥

अनादिर्या अविद्या तया सर्वं विश्वं मयि कल्प्यते, मय्येव निवर्तते, मय्येव विलीयते, यद्यपि निवर्तत इत्यनेनैव विलयस्य प्राप्तत्वात् विलीयत इति व्यर्थं, तथापि निवर्तत इत्यनेन आत्यंतिकी निवृत्तिरभिधित्सिता, विलीयत इत्यनेन सूक्ष्मरूपतया तत्रैवावस्थानमित्यतो न वैय्यर्थ्यमिति ध्येयम् ॥ १३ ॥

ममेत्यादि—मम स्वरूपज्ञानेन तत्वज्ञानेन यदा अविद्या मूलाज्ञानं प्रणश्यति तदा मनो-वाचा-मगोचरः अहमेक एव वर्ते, निष्प्रपंचतया तद्रूपेण तिष्ठामीत्यर्थः ॥ १४ ॥

अत्र सर्वमुक्तौ स्वस्वरूपमाह—

सदैवं परमानंदः स्वप्रकाशश्चिदात्मना ।
न कालः पंचभूतानि न दिशो विदिशश्च न ॥ १५ ॥

मदन्यन्नास्ति यत्किञ्चित् तदा वर्तेऽहमेकलः ॥

तदा सर्वमुक्तिसमये अहं परमानंदः चिदात्मना स्वप्रकाशः धान्येन धनवानित्यादि वदभेदे तृतीया । एकलो वर्ते इत्यन्वयः, एक एव तिष्ठा-मीत्यर्थः, मदन्यत् यत्किंचिन्नास्ति, तदेवाह—न काल इत्यादिना—न कालः मदतिरिक्तः कालो नास्तीत्यर्थः, पंचभूतानि आकाशादीनि पंचभूतानि न संति, न दिशः प्राच्यादि दिशो न संति, न विदिशश्च आग्नेयादि विदिशोऽपि न संति, अत्र सर्वत्र तदेत्यनुषज्यत इति ॥ १५ ॥

ननु तव स्वरूपज्ञानमज्ञाननिवर्तकमित्युक्तं तादृशस्वरूपज्ञानं सर्वदा कुतो न भवतीत्यत आह—

न संदृशे तिष्ठति मे स्वरूपं न चक्षुषा पश्यति मां तु कश्चित् ।
हृदा मनीषा मनसाभिक्लृप्तं ये मां विदुस्तेह्यमृता भवंति ॥ १६ ॥

मे मम स्वरूपं संदृशे संदर्शने दृष्टौ ग्राह्यतया न तिष्ठति । रूपादि विरहादिति भावः, अत एवाह—न चक्षुषेति—मां तु चक्षुषा कश्चिदपि न पश्यति । ननु तर्हि द्रष्टव्य ग्राहकेंद्रिय-ग्राह्यत्वाभावात् अग्राह्यमेव स्यादित्यत आह—हृदेत्यादि—हृदा अंतःकरणेन मनीषा मनसा मनीषा विशिष्टमनसा मनीषा च श्रवणमननादि जन्यवृत्तिविशेषः, मनसा संकल्प-

विकल्पोपलक्षित निश्चयात्मकेन अभिक्लृप्तं, विषयीकृतं, तथा च श्रवणमननादिजन्यवृत्तिविशेषसहकारेण निश्चयात्मकांतःकरणेन ये मां विदुः जानंति ते अमृताः भवंति, मुक्ता भवंतीत्यर्थः, अतो न दुर्ज्ञेयत्वमिति भावः ॥ १६ ॥

श्रीराम उवाच—

कथं भगवतो ज्ञानं शुद्धं मर्त्यस्य जायते ?।
तत्रोपायं हर! ब्रूहि मयि तेऽनुग्रहो यदि ॥ १७ ॥

हे हर ! भगवतस्तव शुद्धं चित्स्वरूपविज्ञानं मर्त्यस्य कथं जायते ? तत्रोपायं ब्रूहि मयि यदि तव ते अनुग्रहः, तथा च श्रवणादिजन्यवृत्तिविशेषः, कथं वा तत्स्वरूपज्ञानं? तत्रोपायं ब्रूहीति रामप्रश्नस्य फलितोऽर्थः ॥ १७ ॥

तत्रोत्तरमाह भगवान्—भगवानुवाच—

विरज्य सर्वभूतेभ्य आ विरंचिपदादपि ।
घृणां वितत्य सर्वत्र पुत्रमित्रादिकेष्वपि ॥ १८ ॥

श्रद्धालुर्मुक्तिशास्त्रेषु वेदांतज्ञानलिप्सया ।
उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥ १९ ॥

सर्वभूतेभ्यः सर्ववस्तुभ्यः आविरंचिपदादपि हिरण्यगर्भपदवीमभिव्याप्प, विरज्य, वैराग्यं कृत्वा पुत्रमित्रादिकेष्वपि सर्वत्र घृणां जुगुप्सां निन्दां वितत्य विस्तार्य दृढीकृत्येति यावत् ॥ १८ ॥

मुक्तिशास्त्रेषु मुक्तिप्रयोजकशास्त्रेषु, श्रद्धालुः श्रद्धावान् उपायनकरो भूत्वा वेदांतज्ञानलिप्सया ब्रह्मविदं गुरुं व्रजेत्, तथा च श्रुतिः "**समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं**" आचार्यमुपसर्पंतीति ॥ १९ ॥

सेवाभिः परितोष्यैनं चिरकालं समाहितः ।
सर्ववेदांतवाक्यार्थं श्रृणुयात् सुसमाहितः ॥ २० ॥

सर्ववेदांतवाक्यानां मयि तात्पर्यनिश्चयम् ।
श्रवणं नाम तत्प्राहुः सर्वे ते ब्रह्मवादिनः ॥ २१ ॥

समाहितस्सन् चिरकालमेनं गुरुं सेवाभिः परितोष्य सुसमाहितस्सन् सर्वं वेदांत वाक्यार्थं श्रृणुयादित्यर्थः ॥ २० ॥

श्रवणस्वरूपमाह—सर्वेत्यादि, मयि ब्रह्मणि सर्ववेदांतवाक्यानां तात्पर्यनिश्चयं सर्वे ते ब्रह्मवादिनः श्रवणं नाम तत्प्राहुः ॥ २१ ॥

मननस्वरूपमाह—

लोहमण्यादिदृष्टांतयुक्तिभिर्यद् विचिंतनम् ।
तदेव मननं प्राहुः वाक्यार्थस्योपबृंहणम् ॥ २२ ॥

लोहमण्यादि दृष्टांत युक्तिभिर्यद्विचिंतनं वाक्यार्थस्य वेदांत-वाक्यार्थ-स्योपबृंहणं व्यवस्थापनं तन्मननं प्राहुः, तथा श्रुतिः "**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् वाचारंभणं विकारो नामधेयं लोहमित्येव सत्य**"मित्यादि ॥ २२ ॥

निदिध्यासनमाह सार्धश्लोकेन—

निर्ममो निरहंकारः समः संगविवर्जितः ।
सदा शांत्यादि युक्तस्सन् आत्मनात्मानमीहते ।
यत्सदा ध्यानयोगेन तन्निदिध्यासनं स्मृतम् ॥ २३ ॥

निर्ममो ममेत्यभिमानशून्यः, निरहंकारः अहमित्यभिमानरहितः, समः शत्रुमित्रोदासीनेषु सर्वत्र समदृष्टिः संगवर्जितः सदा शांत्यादि युक्तस्सन् सदा ध्यानयोगेन ध्यानरूपेणोपायेन आत्मना स्वस्वरूपेण आत्मानमीक्षते, यदात्मविषयकमीक्षणं, तन्निदिध्यासनं स्मृतमिति ॥ २३ ॥

श्रवणादिरूपमुपायमुक्त्वा साक्षात्काररूप—फलमाह—

सर्वकर्मक्षयवशात् साक्षात्करोपि चात्मनः ।
कस्य चिज्जायते शीघ्रं चिरकालेन कस्यचित् ॥ २४ ॥
कूटस्थानीह कर्माणि कोटिजन्मार्जितान्यपि ।
ज्ञानेनैव विनश्यंति न तु कर्मायुतैरपि ॥ २५ ॥

सर्वकर्मक्षयवशात् सर्वेषां कर्मणां तत्वज्ञानप्रतिबंधकीभूत दुरितानां क्षयवशात् कस्यचित्पुरुषस्य, शीघ्रं साक्षात्कारो जायते। कस्यचित् शेष-दुरितवतः चिरकालेन साक्षात्कारो जायत इत्यर्थः ॥ २४ ॥

कोटिजन्मार्जितान्यपि :कूटस्थानि प्रारब्धातिरिक्तानि यानि कर्माणीह जीवे तानि सर्वाणि ज्ञानेनैव विनश्यंति। ननु कर्मणां कर्मनाशकत्वमपि स्यात् न तु ज्ञानैकनाश्यत्वमित्यत आह—नत्विति—कर्मायुतैरपि कर्माणि न नश्यंतीत्यर्थः ॥ २५ ॥

ज्ञानादूर्ध्वं तु यत्किंचित् पुण्यं वा पापमेव वा।
क्रियते बहु वाल्पं वा न तेनायं विलिप्यते ॥ २६ ॥

ज्ञानादूर्ध्वं तत्वज्ञानानंतरं पुण्यं वा पापमेववा बहु वाल्पंवा यत्किंचित्क्रियते तेन कर्मणायं तत्वज्ञानी न लिप्यते, तत्कर्मफलभाङ् न भवतीत्यर्थः ॥ २६ ॥

ननु प्रारब्धातिरिक्तकर्मणां ज्ञाननाश्यत्वेपि प्रारब्धरूपकर्मणां विद्यमानत्वात् परममुक्त्यनुपपत्तिरित्यत आह—

शरीरारंभकं यत्तु प्रारब्धं कर्म तन्मतम्।
तद्भोगेनैव नष्टं स्यान्नतु ज्ञानेन नश्यति ॥ २७ ॥

शरीरारंभकं यत्कर्म तत्प्रारब्धं मतं संमतं, तत्प्रारब्धात्मकं कर्म भोगेनैव नष्टं भवति, न तु तत्वज्ञानेन नश्यति, तथा च प्रारब्धात्मकं यत्कर्म तद्भोगादेव नश्यति, तदतिरिक्तानि यानि कर्माणि तानि तु तत्वज्ञानादेव नश्यंति, तत्वज्ञानानंतरं धर्माधर्मयोरनुत्पादात् न परमुक्त्यनुपपत्तिरिति भावः ॥ २७ ॥

अत्र जीवन्मुक्त्यवस्थामाह—

निर्मोहो निरहंकारो निर्लेपः संगवर्जितः ॥ २८ ॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि।
यः पश्यन्संचरत्येव जीवन्मुक्तोऽभिधीयते ॥ २९ ॥

निर्मोहः मोहो मिथ्याज्ञानं तद्रहितः, निरहंकारः अहमित्यध्यासरहितः, निर्लेपः सर्वभूतेष्वात्मानं पश्यति आत्मनि च सर्वभूतानि च पश्यन् संचरति व्यवहरति एष पुरुषः जीवन्मुक्त इत्यभिधीयते ॥ २९ ॥

अहिनिर्ल्वयिनी यद्वद् द्रष्टुः पूर्वं भयप्रदा।
ततोऽस्य न भयं किंचित्तद्वद्द्रष्टुरयं जनः॥ ३०॥

यथा अहिनिर्ल्वयिनी सर्पत्वक्, पूर्वं सर्पविशिष्टत्वेन द्रष्टुर्भयप्रदा भयजनिका तद्रष्टा तज्जन्यभयजन्यदुःखवान् भवतीत्यर्थः। ततः तस्याः सर्पसंबंधज्ञानाभावदशायां तस्यैव द्रष्टुः यथा न किंचिद्भयं, अयं जीवन्मुक्तो-जनः तद्वत् शरीरादिष्वहं ममेत्यभिमानरूपसंबंधदशायां तद्वशाद् भय-जन्यदुःखवान्भवति, तदभावदशायां किंचिदपि भयजन्यदुःखवान्नभवती-त्यर्थः "**आनंदं ब्रह्मणो विद्वान्नबिभेति कुतश्चनेति**" श्रुतेः॥ ३०॥

यदा सर्वे प्रमुच्यंते कामा येऽस्य वशं गताः।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्॥ ३१॥

अस्य जीवन्मुक्तस्य कामास्सर्वे वशंगताः यदा प्रमुच्यंते भोगान्नश्यंति, अथ कामनाशानंतरं मर्त्यः जीवन्मुक्तः अमृतो भवति परममुक्तिमान् भवती-त्यर्थः, एतावदनुशासनं शास्त्रप्रतिपाद्यमित्यर्थः, तथा च श्रुतिः—"**तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्य**" इत्यादि॥ ३१॥

मोक्षस्य नहि वासोस्ति न ग्रामांतरमेव वा।
अज्ञानहृदयग्रंथिनाशो मोक्ष इति स्मृतः॥ ३२॥

मोक्षस्य स्वर्गादिवत् स्थानांतरं नास्तीत्यर्थः, किंतु अज्ञानरूप-हृदयग्रंथिनाश एव मोक्ष इत्यर्थः। तथा च श्रुतिः—"**न तस्य प्राणा-उत्क्रामंति, अत्रैव समवलीयंते अत्र ब्रह्म समश्नुते**" इति च॥ ३२॥

वृक्षाग्राच्च्युतपादो यः स तदैव पतत्यधः।
तद्वज्ज्ञानवतो मुक्तिर्जायते निश्चितापि तु॥ ३३॥

तीर्थे चंडालगेहे वा यदि वा नष्टचेतनः।
परित्यजन् देहमेवं ज्ञानादेव विमुच्यते॥ ३४॥

वृक्षाग्रात् च्युतपादो यः सः झटिति अधः पतति, तद्वद् ज्ञानवतः निश्चिता मुक्तिर्जायत इत्यर्थः॥ ३३॥

स जीवन्मुक्तः तीर्थे चंडालगेहे वा यदि वा यत्र कुत्रचिन्नष्टचेतनः

देहं परित्यजन् ज्ञानादेव विमुच्यते, तीर्थचंडालगेहादीनां अविशेषादिति भावः ॥ ३४ ॥

संवीतो येन केनाश्नन् भक्ष्यं वाऽभक्ष्यमेव वा ।
शयानो यत्र कुत्रापि सर्वात्मा मुच्यतेऽत्र सः ॥ ३५ ॥

स जीवन्मुक्तः येन केन वस्त्रादिना उत्कृष्टेन वापकृष्टेन वस्त्रादिना संवीतः भक्ष्यं वा अभक्ष्यं वा अश्नन् यत्र कुत्रापिदेशे शयानः सर्वात्मा सर्वात्मकः स मुच्यते ॥ ३५ ॥

क्षीरादुद्धृतमाज्यं यत् क्षिप्तं पयसि तत्पुनः ।
न तेनैवैकतां याति संसारे ज्ञानवांस्तथा ॥ ३६ ॥

क्षीराद् दुग्धात् उद्धृतमाज्यं यत् पुनः पयसि क्षिप्तमपि तेन क्षीरेण समं एकतां न याति, तथा ज्ञानवानपि पुनः संसारे न मनः बध्नातीत्यर्थः । "**न स पुनरावर्तत**" इति श्रुतेः ॥ ३६ ॥

नित्यं पठति योऽध्यायं इमं राम ! शृणोति वा ।
स मुच्यते देहबंधादनायासेन राघव ! ॥ ३७ ॥

हे राम ! इममध्यायं यः नित्यं पठति शृणोति वा, सः अनायासेन देहबंधात् विमुच्यत इत्यर्थः ॥ ३७ ॥

ततः संशयचित्तस्त्वं नित्यं पठ महीपते ! ।
अनायासेन तेनैव सर्वथा मोक्षमाप्स्यसि ॥ ३८ ॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु त्रयोदशोऽध्यायः

ततः तस्मात् संशयचित्तः संशयाविष्टचित्तः त्वं यदि, इममध्यायं नित्यं पठ, तेन पाठेन सर्वथा मोक्षं आप्स्यसीत्यर्थः ॥ ३८ ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौळिमंडन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
त्रयोदशोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## चतुर्दशोऽध्यायः

श्रीराम उवाच—

भगवन्! यदि ते रूपं सच्चिदानंदविग्रहम्।
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्॥ १॥

सर्वधर्मविहीनं च मनोवाचामगोचरम्।
सर्वव्यापितयात्मानमीक्षते सर्वतः स्थितम्॥ २॥

आत्मविद्या तपोमूलं तद् ब्रह्मोपनिषत् परम्।
अमूर्तं सर्वभूतात्माकारं कारणकारणम्॥ ३॥

यत्तदद्रेश्यमग्राह्यं तद्ग्राह्यं वा कथं भवेत्?।
अत्रोपायमजानानस्तेन खिन्नोऽस्मि शङ्कर! ॥ ४॥

हे भगवन्! ते रूपं स्वरूपं, यदि सच्चिदानन्दविग्रहं सच्चिदानन्दः विग्रहः स्वरूपं यस्य तत्, निष्कलं निरवयवं, निष्क्रियं क्रियारहितं, शान्तं निष्प्रपंच स्वरूपं, निरवद्यं दोषरहितं, निरञ्जनं अविद्यासंबंधरहितम्॥ १॥

सर्वधर्मविहीनं मनोवाचामगोचरमिति पदद्वयं व्याख्यातम्। सर्वव्यापितया सकल कालदेशव्यापकतया सर्वतः स्थितं सर्वाधिष्ठानतया स्थितं आत्मानमीक्षते स्वप्रकाशतया जानातीत्यर्थः॥ २॥

आत्मविद्या अध्यात्मविद्या, तपः तपांसि च तेषां मूलं त्वामादायैव सर्वं प्रवर्तत इत्यर्थः। ततः परं ब्रह्म उपनिषत् उपनिषद्गम्यं अमूर्तं सर्वभूतात्माकारं सर्वेषां भूतानां प्राणिनां अन्तरात्मस्वरूपं कारणकारणं कारणं पंचभूतादि, तस्यापि कारणमित्यर्थः॥ ३॥

यत् पूर्वोक्तं रूपं अद्रेश्यं अदृश्यं दर्शनायोग्यं तदग्राह्यमपि ग्रहणायोग्यमपि तत्तादृशं स्वरूपं बाह्यं ग्राह्यमित्यर्थः। ग्राह्यमिति पाठस्तु सुगमः। वा एव, कथं भवेत्, अतः एतादृशस्वरूपस्य तव ग्रहणे उपाय-

मजानतः उपायं नजानामि, तेन उपायज्ञानविरहेण हे शङ्कर! खिन्नोऽस्मि, भिन्नोऽस्मीति पाठे चञ्चलोऽस्मीत्यर्थः ॥ ४ ॥

श्रीभगवानुवाच—

श्रृणु राम! प्रवक्ष्यामि तत्रोपायं महाभुज!।
सगुणोपासनाभिः तु चित्तैकाग्र्यं विधाय च ॥ ५ ॥

स्थूलारुन्धतिकान्यायात् तत्र चित्तं प्रवर्तयेत्।
तस्मिन्नन्नमये पिण्डे स्थूलदेहे तनूभृताम् ॥ ६ ॥

जन्मव्याधि जरामृत्युनिलये वर्तते दृढा।
आत्मबुद्धिरहंमानात् कदाचिन्नैव हीयते ॥ ७ ॥

हे राम! तत्र मत्स्वरूपदर्शने उपायं प्रवक्ष्यामि वदामि, त्वं श्रृणु, उपायमेवाह—सगुणेत्यादि—सगुणोपासनाभिः भगवतो लीलाविग्रहनिबन्धन तत्तद्गुणविशिष्टत्वेनोपासनाभिः ध्यानादिभिः चित्तैकाग्र्यं चित्तस्य अन्तःकरणस्य ऐकाग्र्यं विषयान्तर संचार(राहित्यं) रहितत्वं विधाय संपाद्य ॥ ५ ॥

यथा स्थूलक्रमेणारुन्धतिकां अरुन्धतीं पश्यति तद्वत् तत्र तादृश-मत्स्वरूपे चित्तमन्तःकरणं प्रवर्तयेत्। अत्र स्थूलारुन्धतीन्यायेन सूक्ष्मं प्रदर्शयितुं अन्नमयादिकोशत्वेनोपासनाप्रकारमाह—तस्मिन्नित्यादिना— तस्मिन् तनूभृतां शरीरिणां स्थूलदेहेऽन्नमये पिण्डे ॥ ६ ॥

जन्मव्याधि जरामृत्यूनां निलये अहंमानात् अहमित्याभिमानात् आत्म-बुद्धिः अतिदृढा वर्तते, कदाचित् तत्वज्ञानं विना न हीयते न दूरीक्रियते ॥ ७ ॥

जन्ममृत्यू षड्भावविकाराश्च स्थूलदेहस्य न त्वात्मन इति प्रदर्शयति—

आत्मा न जायते नित्यो म्रियते वा कथञ्चन।
संजायतेऽस्ति विपरिणमते वर्धतेऽपि च ॥ ८ ॥

क्षीयते नश्यतीत्येते षड् भावा वपुषः स्मृताः।
आत्मनो न विकारित्वं घटस्थनभसो यथा ॥ ९ ॥

आत्मा न जायते कथंचन कदाचिदपि नोत्पद्यते, न वा म्रियते, यतः स नित्यः अनादिनिधनः, संजायते अस्ति विपरीणमते वर्धते क्षीयते नश्यतीत्येते-षड् भावाः वपुषः स्थूलदेहस्य स्मृताः, विकारित्वादिकमात्मनो नास्ति यथा घटस्थनभसः न विकारित्वं, किन्तु घटस्य, तद्वदित्यर्थः ॥ ९ ॥

एवमात्मा वपुस्तस्मादिति संचिन्तयेद्बुधः ।
मूषानिक्षिप्तहेमाभःकोशः प्राणमयोऽत्रतु ॥ १० ॥

एवं पूर्वोक्त प्रकारेण तस्मात् पूर्वोक्ताद्धेतोः अयमात्मा-इदं वपु-रिति पृथक् पृथग्भावेन चिन्तयेत् (इत्यर्थः) अथवा तस्मात् पूर्वोक्ताद्धेतोः आत्मा अवपुः न वपुरिति चिन्तयेत् इत्यर्थः ।

वर्ततेऽन्तरतो देहे बद्धः प्राणादिवायुभिः ।

अत्र देहे अन्तरतः अन्तः प्राणमयः कोशः मूषानिक्षिप्तहेमाभः प्राणादि वायुभिर्बद्धः प्रतिबद्धः सन् वर्तते ॥ १० ॥

कर्मेन्द्रियैः समायुक्तः चलनादिक्रियात्मकः ॥ ११ ॥

क्षुत्पिपासापराभूतो नायमात्मा जडो मतः ।
चिद्रूप आत्मा येनैव स्वंदेहमभिपश्यति ॥ १२ ॥

कर्मेन्द्रियैः समायुक्तः चलनादिक्रियात्मकः क्षुत्पिपासाभ्यां पराभूतः वशीकृत इत्यर्थः । अयं कोशः आत्मा न, यतः सः जडः अचेतनः ॥ ११ ॥

चिद्रूप आत्मा येन प्राणमयकोशेनैव स्वकीयं देहमभिपश्यति ॥ १२ ॥

आत्मैवाहं परं ब्रह्म निर्लेपः सुखनीरधिः ।
न तदश्नाति किञ्चैनं न तदश्नाति कश्चन ॥ १३ ॥

अहमेवात्मा परं ब्रह्म, निर्लेपः अविद्यासंबंधरहितः, सुखनीरधिः सुखसमुद्रः, तत् परं ब्रह्म न किञ्चिदश्नाति, एनं परमात्मानं न कश्चन अश्नाति ॥ १३ ॥

अत्र मनोमयकोशमाह—

ततः प्राणमये कोशे कोशोऽस्त्येव मनोमयः।
स संकल्पविकल्पात्मा बुद्धीन्द्रिय-समायुतः॥ १४॥

ततः तदनंतरं प्राणमये कोशे मनोमयः कोशोऽस्ति, सः मनोमयः कोशः संकल्पविकल्पात्मा बुद्धीन्द्रिय समायुतः, बुद्धीन्द्रियाणि चक्षुरादीनि, तत्समायुक्तः तत्सहकृतः॥ १४॥

मनोमयकोशस्य धर्मानाह—

कामः क्रोधस्तथा लोभो मदो मात्सर्यमेव च।
मोहश्चेत्यरिषड्वर्गो ममतेच्छादयोऽपि वा॥ १५॥

मनोमयस्य कोशस्य धर्मा एतस्य तत्र तु।
या कर्मविषया बुद्धिः वेदशास्त्रार्थनिश्चिता॥ १६॥

सातु ज्ञानेन्द्रियैः सार्धं विज्ञानमयकोशतः।
इह कर्त्तृत्वाभिमानी स एव तु न संशयः॥ १७॥

इहामुत्रगतिस्तस्य स जीवो व्यावहारिकः।
व्योमादि सात्विकांशेभ्यो जायन्ते धीन्द्रियाणितु॥ १८॥

कामोऽभिलाषः, क्रोधो हिंसादिजनकव्यापारविशेषः, लोभ इच्छाविशेषः, मोहो मिथ्याज्ञानं, मात्सर्यं परगुणासहिष्णुता, मदो गर्वः, ममता ममेत्येतदव्ययं ममेत्यभिमान इत्यर्थः। इत्येते अरिषड्वर्गाः, इच्छादयोऽपि चान्याः नानाविधाः इच्छाश्च मनोमयकोशस्य धर्माः॥ १५॥

या कर्मेत्यादि—या कर्मविषया कर्मजननी वेदशास्त्रार्थनिश्चिता वेदशास्त्रार्थैर्निश्चिता दृढा या बुद्धिः सा ज्ञानेन्द्रियैः सार्धं विज्ञानमयकोशतः, प्रथमार्थे तसिः, सा बुद्धिः विज्ञानमयकोश इत्यर्थः। इह विज्ञानमयकोशे कर्तृत्वाभिमानी सः व्यावहारिको जीवः। अत्र संशयो नास्तीत्यर्थः॥ १७॥

इह अस्मिन् लोके अमुत्र परलोके तस्य जीवस्य गतिः गमनमागमनं च, अत्र विज्ञानमयकोशान्तर्गत ज्ञानेन्द्रियाणामुत्पत्ति प्रकारमाह—व्योमा-

दीत्यादि, व्योमादिसात्विकांशेभ्यः व्योमादीनां पंचभूतानां सात्विकांशेभ्यः ज्ञानेन्द्रियाणि जायन्ते ॥ १८ ॥

तत्र ज्ञानेन्द्रियाणां मध्ये एकैकस्योत्पत्ति प्रकारमाह--

व्योम्नः श्रोत्रं भुवो घ्राणं जलाज्जिह्वाथ तेजसः।
चक्षुर्वायो स्त्वगुत्पन्ना तेषां भौतिकता ततः ॥ १९ ॥

व्योम्नः आकाशात् श्रोत्रं, भुवः घ्राणं, जलाज्जिह्वा, तेजसश्चक्षुः, वायोस्त्वगिति। ततः भूतप्रकृतिकत्वात् तेषामिन्द्रियाणां भौतिकतेत्यर्थः ॥ १९ ॥

व्योमादीनां समस्तानां सात्विकांशेभ्य एव तु।
जायेते बुद्धिमनसी बुद्धिश्चेन्निश्चयात्मिका ॥ २० ॥

अत्र व्योमादीनां समस्तानां सात्विकांशेभ्यः बुद्धिमनसी जायेते, बुद्धिश्च निश्चयात्मिका ॥ २० ॥

कर्मेन्द्रियोत्पत्तिप्रकारमाह--

वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि तु।
व्योमादीनां रजोंशेभ्यः व्यस्तेभ्यस्तान्यनुक्रमात् ॥ २१ ॥

व्योमादीनां व्यस्तेभ्य एकैकेभ्यः रजोंऽशेभ्यः तानि वागादीनि कर्मेन्द्रियाणि जायन्त इत्यर्थः ॥ २१ ॥

समस्तेभ्यो रजोंशेभ्यः पंचप्राणादि वायवः।
जायन्ते सप्तदशकमेवं लिङ्गशरीरकम् ॥ २२ ॥

अत्र व्योमादीनां पंचभूतानां समस्तेभ्यो रजोंशेभ्यः प्राणादि पंच-वायवो जायन्ते। एवं सप्तदशकं लिङ्गशरीरमित्यर्थः ॥ २२ ॥

एतल्लिङ्गशरीरं तु तप्तायःपिण्डवद् यतः।
परस्पराध्यासयोगात् साक्षि चैतन्यसंयुतम् ॥ २३ ॥

तदानन्दमयः कोशो भोक्तृत्वं प्रतिपद्यते।
विद्याकर्मफलादीनां भोक्तेहामुत्र स स्मृतः ॥ २४ ॥

यदाध्यासं विहायैषः स्वस्वरूपेण तिष्ठति।
अविद्यामात्र संयुक्तः साक्ष्यात्मा जायते तदा ॥ २५ ॥

परस्पराध्यासयोगात् साक्षिचैतन्यसंयुतं साक्षिचैतन्येन एकीभूतं, यतः, प्रथमार्थे तसिः। तप्तायःपिण्डवत् यत् लिङ्गशरीरं ॥ २३ ॥

तत् आनन्दमयः कोशो भोक्तृत्वं प्रतिपद्यते, भोक्तृत्व-व्यवहारभाग् भवतीत्यर्थः। सः आनन्दमयः कोशः इहामुत्र विद्याकर्मफलादीनां भोक्ता स्मृत इत्यर्थः ॥ २४ ॥

चैतन्यस्य साक्षिरूपत्वमाह—यदेत्यादि—यदा अध्यासं परस्पराध्यासं विहाय एष आत्मा अविद्यामात्रसंयुक्तः सन् स्वस्वरूपेण तिष्ठति तदा आत्मा साक्षीति व्यवह्रियत इत्यर्थः ॥ २५ ॥

द्रष्टान्तःकरणादीनामनुभूतेः स्मृतेरपि।
अतोऽन्तःकरणाध्यासानध्यासित्वेनचात्मनः ॥ २६ ॥
भोक्तृत्वं साक्षिता चेति द्वैधं तस्योपपद्यते।

अन्तःकरणादिनामनुभूतेः अनुभवस्य स्मृतेः स्मरणस्य द्रष्टा, अतः आत्मनः अन्तःकरणाध्यासा नध्यासित्वेन अन्तःकरणाध्यासः तदनध्यासश्च तौ यस्य, तत् तत्वेनेत्यर्थः। तस्यात्मनो भोक्तृत्वं साक्षिता चेति यथासंख्ये न द्वैधमुपपद्यत इत्यर्थः ॥ २६ ॥

आतपश्चापि तच्छाया तत्प्रकाशो विराजते।
एको भोजयिता तत्र भोक्ताऽन्यःकर्मणः फलम् ॥ २७ ॥

तत्प्रकाशे चैतन्यरूपे प्रकाशे, आतपः बिम्बभूतं चैतन्यं, छाया तत्प्रतिबिम्बीभूतः जीवो विराजते, काल्पनिक भेदविशिष्टतया भासते, तत्र एकः बिम्बरूपः भोजयिता, अन्यः प्रतिबिम्बभूतो जीवः कर्मणः फलं सुख-दुःखादिकं भोक्ता, भोक्तेत्यत्र तृन् प्रत्ययः ॥ २७ ॥

क्षेत्रज्ञं रथिनं विद्धि शरीरं रथमेव च।
बुद्धिं तु सारथिं विद्धि प्रग्रहं तु मनस्तथा ॥ २८ ॥

इन्द्रियाणि हयान् विद्धि विषयास्तेषु गोचराः ।
इन्द्रियैर्मनसा युक्तं भोक्तारं विद्धि पूरुषम् ।। २९ ।।

एवं शान्त्यादि युक्तः सन् उपास्ते यः सदा द्विजः ।
उद्घाटचोद्घाट्यैकमेकं यथैव कदली तरोः ।। ३० ।।

वल्कलानि ततः पश्चाल्लभते सारमुत्तमम् ।। ३१ ।।

क्षेत्रज्ञं जीवं रथिनं विद्धि, शरीरं रथं विद्धि, बुद्धिं सारथिं विद्धि, मनः प्रग्रहं बन्धनरज्जुं विद्धि ।। २८ ।।

इन्द्रियाणि हयान् विद्धि, तेषु इन्द्रियेषु गोचराः विषयाः व्यवहरणीय-देशा इत्यर्थः । इन्द्रियैः ज्ञानकर्मेन्द्रियैः मनसा च युक्तं पुरुषं भोक्तारं विद्धि, एवमित्यादि–एवं पूर्वोक्त क्रमेण शान्त्यादि युक्तः द्विजः सदा उपास्ते सः कदलीतरोः वल्कलानि एकैकमुद्घाटचोद्घाटच पश्चाद् यथा सारं लभते ।। ३१ ।।

तथैव पंचकोशेषु मनः संक्रामयन् क्रमात् ।
तेषां मध्ये ततः सारमात्मानमपि विन्दति ।। ३२ ।।

तथैव पूर्वोक्त कदलीसारभाग प्राप्तिवत् पंचकोशेषु क्रमात् मनः संक्रामयन् तेषां मध्ये आत्मानं सारभागं विन्दति प्राप्नोतीत्यर्थः ।। ३२ ।।

एवं मनः समाधाय संयतो मनसि द्विजः ।
अथ प्रवर्तयेच्चित्तं निराकारे परात्मनि ।। ३३ ।।

एवं मनः समाधाय विषयान्तर संचाररहितं कृत्वा मनसि संयतः संयतमनस्कः शुद्धमनस्कः सन् अथ साकारोपासनया चित्तस्य वशीकरणा-नन्तरं निराकारे परात्मनि चित्तं प्रवर्तयेदित्यर्थः ।। ३३ ।।

ततो मनः प्रगृह्णाति परमात्मानमेकलम् ।
यत्तदद्रेश्यमग्राह्यमस्थूलाद्युक्तिगोचरम् ।। ३४ ।।

ततो निराकारे चित्तप्रवेशानन्तरं मन एकलं एकं अद्रेश्यं अदृश्यं, अग्राह्यं ग्रहणायोग्यं अस्थूलाद्युक्तिगोचरं "अस्थूलमनणु" इत्याद्युक्ति-गोचरं प्रगृह्णाति वृत्या विषयी-करोति ।। ३४ ।।

श्रीराम उवाच—

भगवन् ! श्रवणेनैव प्रवर्तन्ते जनाः कथं ?।
वेदशास्त्रार्थसंपन्नां यज्वानः सत्यवादिनः ॥ ३५ ॥

शृण्वन्तोऽपि तथात्मानं जानते नैव केचन।
ज्ञात्वापि मन्वते मिथ्या किमेतत् ? तव मायया ॥ ३६ ॥

हे भगवन् ! वेदशास्त्रार्थसंपन्नाः यज्वानः सत्यवादिनोऽपि जनाः ते तव श्रवणे श्रवणादौ कथं न प्रवर्तन्ते ?॥ ३५ ॥

केचन जनाः शृण्वन्तोऽपि आत्मानं न जानते तथा कथं वेत्यर्थः। ज्ञात्वेत्यादि—केचन ज्ञात्वापि मिथ्या मन्वते, एतत् किं तव माययेति प्रश्नार्थः ॥ ३६ ॥

श्री भगवानुवाच—

एवमेव महाबाहो ! नात्र कार्या विचारणा।
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ ३७ ॥

हे महाबाहो ! अत्र विचारणा न कार्यैव, किन्तु एवमेव, तदेवाह—दैवीत्यादि—एषा गुणमयी मम माया दुरत्यया दुर्लंघ्या ॥ ३७ ॥

तर्हि मायाया दुर्लंध्यत्वे तत्र कथं प्रेक्षावतां प्रवृत्तिरित्यत आह—

मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।
अभक्ता ये महाबाहो ! मम श्रद्धाविवर्जिताः ॥ ३८ ॥

फलं कामयमानास्ते चैहिकामुष्मिकादिकम्।
क्षयिष्णवल्पं सातिशयं यतः कर्मफलं मतम् ॥ ३९ ॥

तदविज्ञाय कर्माणि ये कुर्वन्ति नराधमाः।
मातुः पतन्ति ते गर्भे मृत्योर्वक्त्रे पुनः पुनः ॥ ४० ॥

ये मां प्रपद्यन्ते त एव मायां तरन्तीत्यर्थः। अभक्ता—इत्यादि मम, श्रद्धा विवर्जिताः ये भक्ताः ऐहिकामुष्मिक फलं कामयमानाः, क्षयिष्णिव-त्यादि—सातिशयं कर्मफलं तत् क्षयिष्णु अल्पमित्यविज्ञाय ये कुर्वन्ति ते

नराधमा इत्यर्थः। मातुरित्यादि—ते नराधमाः मातुः गर्भे मृत्योर्वक्त्रे पुनः पुनः पतन्तीत्यर्थः॥ ४०॥

नाना योनिषु जातस्य देहिनो यस्य कस्यचित्।
कोटिजन्मार्जितैः पुण्यैः मयि भक्तिः प्रजायते॥ ४१॥

नाना योनिषु जातस्य यस्य कस्यचिद्देहिनः कोटिजन्मार्जितैः पुण्यैः मयि भक्तिः प्रजायते व्याख्यातमेतत्॥ ४१॥

स एव लभते ज्ञानं मद्भक्तः श्रद्धयान्वितः।
नान्यकर्माणि कुर्वाणो जन्मकोटिशतैरपि॥ ४२॥

यः मद्भक्तः श्रद्धयान्वितः स एव ज्ञानं लभते अन्यकर्माणि मद्विषय-कर्मातिरिक्तकर्माणि कुर्वाणो जनः जन्मकोटिशतैरपि, ज्ञानं न लभते इत्यर्थः॥ ४२॥

ततः सर्वं परित्यज्य मद्भक्तिं समुपाश्रय।
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज॥ ४३॥

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्॥ ४४॥

यत्तपस्यसि राम! त्वं तत्कुरुष्व मदर्पणम्।
ततः परतरा नास्ति भक्तिर्मयि रघूत्तम!॥ ४५॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु पंचकोशोपवर्णनं नाम
चतुर्दशोऽध्यायः

ततः तस्मात् तत्वज्ञानविरोधि सर्वं परित्यज्य मद्भक्तिं मद्विषयक भक्तिं समुपाश्रय कुर्वीत्यर्थः। सर्वधर्मान् परित्यज्य एकं मां शरणं व्रज, सर्वपापेभ्यः अहं त्वा मोक्षयिष्यामि माशुचः शोकं माकुर्वीत्यर्थः। यत्करोषीत्यादि—यत् करोषि, यदश्नासि यज्जुहोषि यद्दासि यत्तपस्यसि तत् सर्वं हे राम! त्वं मदर्पणं मदर्पितं कुरुष्वेत्यर्थः। तत इत्यादि—

हे रघूत्तम ! ततः सकलसमर्पणात् परतरा अधिकतरा मयि भक्तिः नास्ति, नैवाधिकतरा भक्तिरित्यर्थः ॥ ४५ ॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरन्धर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमण्डन श्रीमन्नृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
पंचकोशोपवर्णनं नाम
चतुर्दशोऽध्यायः

श्री लक्ष्मीनृसिंहाय नमः

## पंचदशोऽध्यायः

श्रीराम उवाच—

भक्तिस्ते कीदृशी देव! जायते वा कथञ्च सा।
यया निर्वाणरूपत्वं लभते मोक्षमुत्तमम्।
तद् ब्रूहि गिरिजाकान्त! प्राप्यते येन निर्वृतिः॥ १॥

हे देव! स्वयं प्रकाश! ते तव भक्तिः कीदृशी? सा भक्तिः कथं वा जायते? यया भक्त्या उत्तमं निर्वाणरूपत्वं निर्वाणरूपं मोक्षं लभते? हे गिरिजाकान्त! येन कारणेन निर्वृतिः निर्वाणं प्राप्यते? तद्ब्रूहि॥ १॥

श्री भगवानुवाच—

यो वेदाध्ययनं यज्ञं दानानि विविधानि च।
मदर्पणधिया कुर्यात्स मे भक्तः स मे प्रियः॥ २॥

यः पुरुषः वेदाध्ययनं यज्ञं ज्योतिष्टोमादि, दानानि महादानानि मदर्पणधिया "अनेन कर्मणा ईश्वरः प्रीणात्वि"ति संकल्प्य कुर्यात् करोति, स मे भक्तः, स मे प्रियः॥ २॥

नर्यभस्म समादाय विशुद्धं श्रोत्रियालयात्।
अग्निरित्यादिभिर्मन्त्रैरभिमन्त्र्य यथाविधि॥ ३॥

उद्धूलयति गात्राणि तेन चार्चति मामपि।
तस्मात् परतरा भक्तिर्मम राम! न विद्यते॥ ४॥

श्रोत्रियालयाद्विशुद्धं नर्यभस्म गार्हपत्यभस्म "**नर्य प्रजां मे गोपयेति गार्हपत्यमुपतिष्ठत**" इति स्मरणात्तद्भस्म समादाय अग्निरित्यादिभिर्मन्त्रैः यथाविधि अभिमन्त्र्य यो गात्राणि शिरोललाटादीनि उद्धूलयति तेन भस्मना मामप्यर्चति पूजयति च। तस्मात्पूर्वोक्तात् हे राम! परतरा, मम भक्तिः मद्विषयिणी भक्तिः न विद्यत इत्यर्थः॥ ४॥

सर्वदा शिरसा कण्ठे रुद्राक्षान्धारयेत्तु यः।
पञ्चाक्षरीजपपरः स मे भक्तः स मे प्रियः॥ ५॥

यः शिरसा कण्ठे सर्वदा रुद्राक्षान् धारयेत् स्वार्थे णिच्। पंचाक्षरी-जपपरः स मे भक्तः स मे प्रियः इति॥ ५॥

भस्मच्छन्नो भस्मशायी सर्वदा विजितेन्द्रियः।
यस्तु रुद्रं जपेन्नित्यं चिन्तयन् मामनन्यधीः॥ ६॥

स तेनैव हि देहेन शिवस्संजायते स्वयम्।
जपेद्यो रुद्रसूक्तानि तथाऽथर्वशिरः परम्॥ ७॥

कैवल्योपनिषत्सूक्तं श्वेताश्वतरमेव च।
ततः परतरो भक्तो मम लोके न विद्यते॥ ८॥

भस्मेत्यादि—अनन्यधीरित्यन्तं सुगमम्। स इत्यादि। सः अनन्यधीः तेनैव देहेन शिवस्संजायते। जपेदित्यादि। यो रुद्रसूक्तानि तथा परं अर्वशिरो जपेत्। तथा कैवल्योपनिषत्सूक्तं श्वेताश्वतरमेव च यः जपेत् ततः परतरो भक्तो मम लोके न विद्यते॥ ८॥

अन्यत्र धर्मादन्यस्मादन्यत्रास्मात् कृताकृतात्।
अन्यत्र भूताद्भव्याच्च यत्प्रवक्ष्यामि तच्छृणु॥ ९॥

अन्यत्र अन्यस्मिन्प्रदेशे धर्मात् शुभकर्मजात्, अन्यस्मादशुभकर्मजात्, अन्यत्र अस्मात् सर्वप्रसिद्धात् कृताकृतात् कार्यकारणात्, अन्यत्र भूतात् अतीतात्कालात्, भव्यात् भविष्यतः कालात्, चकारात् वर्तमानकालात् अन्यत्र सर्वस्माद्विलक्षणमित्यर्थः। यत्तिष्ठति तत्प्रवक्ष्यामि—तच्छृणु॥ ९॥

वदन्ति यत्पदं वेदाः शास्त्राणि विविधानि च।
सर्वोपनिषदां सारं दध्नो घृतमिवोद्धृतम्॥ १०॥

वेदाः विविधानि शास्त्राणि च यत्पदं दध्नः उद्धृतं सारमिव उप-निषदां सारं वदन्ति॥ १०॥

यदिच्छन्तो ब्रह्मचर्यं चरन्ति मुनयः सदा।
तत्ते पदं संग्रहेण ब्रवीष्यामीति यत्परम्॥ ११॥

मुनयः यत्पदमिच्छन्तः सदा ब्रह्मचर्यं चरन्ति, तत्परं पदं ते तव सङ्ग्रहेण ब्रवीष्यामि आर्षोऽयं प्रयोगः, वक्ष्यामीत्यर्थः॥ ११॥

एतदेवाक्षरं ब्रह्म चैतदेवाक्षरं परम्।
एतदेवाक्षरं ज्ञात्वा ब्रह्मलोके महीयते॥ १२॥

एतदेवोक्तं परं पदमेव अक्षरं ब्रह्म, एतदेव च परमक्षरं, एतदेवाक्षरं ज्ञात्वा ब्रह्मलोके महीयते पूजितो भवतीत्यर्थः॥ १२॥

छन्दसां यस्तु धेनूनामृषभत्वेन चोदितः।
इदमेव पतिस्सेतुरमृतस्य च धारणात्॥ १३॥

यः प्रणवः छन्दसां वेदवाग्रूपाणां धेनूनां गवां ऋषभत्वेन श्रेष्ठत्वेन उदितः कथितः, इदमेव अमृतस्य धारणात् सेतुः, अत एव मेधया पिहिते कोशे पतिः अन्तर्यामितया नियामकः॥ १३॥

मेधया पिहिते कोशे ब्रह्म यत्परमोमिति।
चतस्रस्तस्य मात्रास्युः अकारोकारकौ तथा॥ १४॥

अकारस्यावसानेऽर्धमात्रेति परिकीर्तिता।
पूर्वत्र भूश्च ऋग्वेदो ब्रह्माष्टवसवस्तथा॥ १५॥

गार्हपत्यश्च गायत्री गङ्गा प्रातस्सवस्तथा।
द्वितीया च भुवो विष्णुः रुद्रोऽनुष्टुब् यजुस्तथा॥ १६॥

यमुना दक्षिणाग्निश्च माध्यन्दिनसवस्तथा।
तृतीया च सुवस्सामान्यादित्यश्च महेश्वरः॥ १७॥

अग्निराहवनीयश्च जगती च सरस्वती।
तृतीयं सवनं प्रोक्तमथर्वत्वेन यन्मतम्॥ १८॥

चतुर्थी याऽवसानेऽर्धमात्रा सा सोमलोकगा।
अथर्वाङ्गिरसस्संवर्तकोग्निः मरुतस्तथा॥ १९॥

चतस्र इत्यादिना—तस्य प्रणवस्य मात्राः अकारोकारमकारार्धमात्राः कौ अत्र स्वार्थे कः॥ १४॥

अकारोकारयोरवसाने मकारानन्तरं अर्धमात्रा पूर्वोक्तमात्राणां चतसृणां ऋषिदेवता छन्दांस्याह—पूर्वत्र प्रथममात्रायां भूः पृथिवी ऋग्वेदो ब्रह्म अष्टवसवः॥ १५॥

गार्हपत्याख्योग्निः गायत्री छन्दः गङ्गा तथा प्रातस्सवः प्रातस्सवनं। द्वितीयाचेत्यादि—या द्वितीया मात्रा उक्ता, तत्र भुवः विष्णुः रुद्रः अनुष्टुप् छन्दः यजुः॥ १६॥

यमुना प्रसिद्धा नदी दक्षिणाग्निश्च माध्यन्दिनसवः माध्यन्दिनसवनं तृतीया चेत्यादि। तृतीया च या पूर्वोक्ता तत्र सुवः सामानि आदित्यो महेश्वरः॥ १७॥

अग्निरित्यादि। अग्निः आहवनीयाख्योग्निः जगती छन्दः सरस्वती अथर्वत्वेन यन्मतं तत्तृतीयं सवनं प्रोक्तमित्यर्थः॥ १८॥

चतुर्थीत्यादि। अवसाने मकारावसाने या चतुर्थी अर्धमात्रा सा सोमलोकगा सोमलोकव्यापिनीत्यर्थः। अथर्वाङ्गिरसः संवर्तकः संवर्ताख्योग्निः मरुतः देवाः॥ १९॥

विराट् सभ्यावसथ्यौ च शुतुद्रिः यज्ञपुच्छकः।
प्रथमा रक्तवर्णा स्याद् द्वितीया भास्वरा मता॥ २०॥
तृतीया विद्युदाभा सा चतुर्थी शुक्लवर्णिनी।
सर्वं जातं जायमानं तदोङ्कारे प्रतिष्ठितम्॥ २१॥

विराट् छन्दः, सभ्यावसथ्यावग्नी, शुतुद्रिः नदी, यज्ञपुच्छकः सवनत्रयानन्तरं कर्तव्यकर्मविशेषः। तासां चतसृणां मात्राणां वर्णानाह—प्रथमेत्यादि। प्रथमा मात्रा रक्तवर्णा, द्वितीया मात्रा भास्वरा, प्रकाशका शुक्लरूपेत्यर्थः॥ २०॥

तृतीया मात्रा विद्युदाभा, सा चतुर्थी मात्रा शुक्लवर्णिनी शुक्लः वर्णः अस्याः अस्तीति शुक्लवर्णिनी। सर्वमित्यादि। जातं जायमानं यत् तदोङ्कारे प्रतिष्ठितमित्यर्थः॥ २१॥

विश्वं भूतं च भवनं विचित्रं बहुधा तथा।
जातं च जायमानं च तत्सर्वं रुद्र उच्यते ॥ २२ ॥

विश्वं भूतं भुवनं यद्बहुधा विचित्रं जातं जायमानं तत्सर्वं रुद्रः स एवेत्यर्थः ॥ २२ ॥

तस्मिन्नेव वपुः प्राणः सर्वमोङ्कार उच्यते।
प्रविलीनं तदोङ्कारे परं ब्रह्म सनातनम् ॥ २३ ॥
तस्मादोङ्कारजापी यः स मुक्तो नात्र संशयः ॥ २४ ॥

तस्मिन् रुद्रे वपुः शरीरं प्राणः यत्तत्सर्वं ओङ्कार उच्यते, सनातनं नित्यं यत्परं ब्रह्म ओङ्कारे प्रविलीनं अन्तर्गतं तत्स्वरूपमित्यर्थः ॥ २३ ॥

तस्मादोङ्कारस्यैव ब्रह्मरूपत्वात् तज्जापी तज्जपशीलः स मुक्तो भवति, तत्र संशयो न कर्तव्य इत्यर्थः ॥ २४ ॥

त्रेताग्नेः स्मार्तवह्नेर्वा शैवाग्नेर्वा समाहृतम्।
भस्माभिमन्त्र्य यो मांतु प्रणवेन प्रपूजयेत्।
तस्मात् परतरो भक्तो मम लोके न विद्यते ॥ २५ ॥

त्रेताग्नेः श्रौताग्नेः, स्मार्ताग्नेः शैवाग्नेः विरजाग्नेर्वा सकाशात् समाहृतं भस्म अभिमन्त्र्य यः प्रणवेन प्रपूजयेत्। तस्मात् तादृशपूजाकर्तुः परतरः श्रेष्ठतरो भक्तो मम लोके न विद्यते ॥ २५ ॥

शालाग्नेर्दाववह्नेर्वा भस्मानीयाभिमन्त्रितम्।
यो विलम्पति गात्राणि स शूद्रोऽपि विमुच्यते ॥ २६ ॥

शालाग्नेः पाकशालाद्यग्नेः दाववह्नेः आरण्याग्नेर्वा भस्म आनीय अभिमन्त्र्य यः गात्राणि विलिम्पति स शुद्रोऽपि विमुच्यते ॥ २६ ॥

कुशपुष्पैर्बिल्वदलैः पुष्पैर्वा गिरिसंभवैः।
यो मामर्चयते नित्यं प्रणवेन प्रियो हि सः ॥ २७ ॥

यः कुशपुष्पैः बिल्वदलैः गिरिसंभवैः पुष्पैः वा यो मां प्रणवेनार्चयेत् सः मम प्रियः ॥ २७ ॥

पुष्पं फलं समूलं वा पत्रं सलिलमेव वा।
यो दद्यात्प्रणवैर्मह्यं तत्कोटिगुणितं भवेत् ॥ २८ ॥

पुष्पं फलं समूलं वा पत्रं सलिलं प्रणवैर्मह्यं दद्यात् स मे प्रिय इति पूर्वेणान्वयः। फलमेववेत्यत्र वा शब्दः समुच्चयार्थे। स च तदित्यनेनान्वेति। तथा च तत्पूजनं कोटिगुणितं भवेदित्यर्थः ॥ २८ ॥

अहिंसा सत्यमस्तेयः शौचमिन्द्रियनिग्रहः।
शान्तिदान्ती च वर्तेते स मे भक्तः स मे प्रियः ॥ २९ ॥

प्रदोषे यो मम स्थानं गत्वा पूजयते तु माम्।
स परां श्रियमाप्नोति पश्चान्मयि विलीयते ॥ ३० ॥

अष्टम्यां च चतुर्दश्यां पर्वणोरुभयोरपि।
भूतिभूषितसर्वाङ्गो यः पूजयति मां निशि ॥ ३१ ॥

कृष्णपक्षे विशेषेण स मे भक्तः स मे प्रियः।
एकादश्यामुपोष्यैवं यः पूजयति मां निशि ॥ ३२ ॥

सोमवारे विशेषेण स मे भक्तो न नश्यति ॥ ३३ ॥

पञ्चामृतैः स्नापयेद्यः पञ्चगव्येन वा पुनः।
पुष्पोदकैः कुशजलैः तस्मान्नान्यः प्रियो मम ॥ ३४ ॥

पयसा सर्पिषा वाऽपि मधुनेक्षुरसेन वा।
पक्वाम्रफलजेनाऽपि नालिकेररसेन वा ॥ ३५ ॥

गन्धोदकेन वा मां यो रुद्रमन्त्रमनुस्मरन्।
अभिषिञ्चेत् ततो नान्यः कश्चित्प्रियतरो मम ॥ ३६ ॥

अहिंसेत्यारभ्य कश्चित्प्रियतरो ममेत्येतदन्तं सुगमम्।

आदित्याभिमुखो भूत्वा ऊर्ध्वबाहुर्जले स्थितः ॥ ३७ ॥
मां ध्यायन् रविबिम्बस्थं अथर्वाङ्गिरसं जपेत् ॥ ३८ ॥

प्रविशेन्मे शरीरेऽसौ गृहं गृहपतिर्यथा।
बृहद्रथन्तरं वामदेव्य देवव्रतानि च॥ ३९॥

तद्योगायाज्यदोहांश्च यो गायति ममाग्रतः।
इह श्रियं परां भुक्त्वा मम सायुज्यमाप्नुयात्॥ ४०॥

आदित्याभिमुखो भूत्वा जले स्थितः ऊर्ध्वबाहुश्चसन् रविबिम्बस्थं मां ध्यायन् अथर्वाङ्गिरसं जपेत् जपति। असौ जनः मे मम शरीरे गृहं-गृहपतिर्यथा प्रविशेत् प्रविशति तद्वत्. **बृहदाख्यं** साम **रथन्तराख्यं** साम **वामदेव्याख्यं** साम **देवव्रताख्यानि** सामानि तद्योगाय **तद्योगायाख्यं** साम आज्यदोहांश्च **आज्यदोहाख्यानि** सामानि यः मम पुरतः गायति स इह परां उत्कृष्टां श्रियं भुक्त्वा पश्चान्मम सायुज्यमाप्नुयात्॥ ४०॥

ईशावास्यादि मन्त्रान्यो जपेन्नित्यं ममाग्रतः।
मत्सायुज्यमवाप्नोति मम लोके महीयते॥ ४१॥

ईशावास्यादि मन्त्रान् यः नित्यं ममाग्रतो जपेत् सः मम लोके महीयते मत्सायुज्यमवाप्नोतीत्यर्थः॥ ४१॥

भक्तियोगो मयाख्यातः एवं रघुकुलोद्वह!।
सर्वकामप्रदो मत्तः किमन्यच्छ्रोतुमिच्छसि?॥ ४२॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु भक्तियोगो नाम
पंचदशोध्यायः

हे रघुकुलोद्वह! सर्वकामप्रदो भक्तियोगो मयाऽऽख्यातः मया प्रोक्तः, मत्तः मत्सकाशात् अन्यत्किं श्रोतुमिच्छसीत्यर्थः॥ ४२॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्रार्थ तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमण्डन श्रीनृसिंहभारती
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
भक्तियोगो नाम
पंचदशोऽध्यायः

श्री लक्ष्मीनृसिंहाय नम.

## षोडशोऽध्यायः

पूर्वं भगवता मोक्षसाधनीभूत भक्तियोगे कथिते रामो लोकानुग्रहार्थं तत्राधिकारिणं पृच्छति। श्रीराम उवाच—

भगवन्! मोक्षमार्गो यः त्वया सम्यगुदाहृतः।
तत्राधिकारिणं ब्रूहि तत्र मे संशयो महान्॥ १॥

हे भगवन्! त्वया सम्यक् तत्र तत्र विशकलितं एकत्र संकलय्य उदाहृतः कथितः मोक्षमार्गः, मोक्षोपायभूता भक्तिरित्यर्थः। तत्र मोक्षमार्गे अधिकारिणं ब्रूहि। तत्राधिकारिविषये मे मम महान् संशयोऽस्तीति शेषः॥ १॥

भगवानधिकारिणमाह—श्रीभगवानुवाच—

ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चात्राधिकारिणः।
ब्रह्मचारी गृहस्थो वाऽनुपनीतोऽथ वा द्विजः॥ २॥

वनस्थो वाऽवनस्थो वा यतिः पाशुपतव्रती।
बहुनाऽत्र किमुक्तेन यस्य भक्तिः शिवार्चने॥ ३॥

स एवात्राधिकारी स्यान्नान्यचित्तः कथञ्चन।

ब्रह्माणः ब्राह्मणाः "**वेदस्तत्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिरिति**" अमरः, क्षत्राणि क्षत्रियाः, विशः वैश्याः शूद्राः अत्र मोक्षमार्गेऽधिकारिणः। ब्रह्मचारी गृही वानप्रस्थः यतयश्चेति एतेऽत्राधिकारिणः। मोक्षमार्गे चातुर्वर्ण्यं चातुराश्रम्ययोश्चाधिकारमुक्त्वा स्त्रीणां अनाश्रमिणां च अधिकारमाह—स्त्रियः अनुपानीतो द्विजः अवनस्थः स्नातक इत्यर्थः, पाशुपतव्रती विरजाद्यागमदीक्षावान्, एतेषां भक्तिमार्गेऽधिकारित्वमाह—वनस्थेति। पूर्वं विशिष्याधिकारमुक्त्वा इदानीं सामान्यतः अधिकारिस्वरूपमाह—बहुनेत्यादिना। अत्राधिकारिविषये बहुनोक्तेन बहूक्त्या किं प्रयोजनम्,

न किमपीत्यर्थः। यस्य शिवार्चने भक्तिरस्ति स एवात्राधिकारी स्यात्; कथञ्चन येन केन प्रकारेण अन्यचित्तः शिवपूजाविमुखस्सन् अधिकारी न स्यादिति ॥ ३ ॥

अधिकारिणमुक्त्वाऽनधिकारिस्वरूपमाह—

जडोऽन्धो बधिरो मूको निश्शौचः कर्मवर्जितः।
अज्ञोपहासाऽभक्ताश्च भूतिरुद्राक्षधारिणः ॥ ४ ॥

लिङ्गिनो यश्च वा द्वेष्टि ते नात्रैवाधिकारिणः।
यो मां गुरुं पाशुपतं व्रतं द्वेष्टि नराधिप!।
विष्णुं वा न स मुच्येत जन्मकोटिशतैरपि ॥ ५ ॥

जडः असमर्थः, अन्धः बधिरः मूकः निश्शौचः अशुचिः, कर्मवर्जितः शिवपूजादिरहितः अज्ञः मूढः उपहासः उपहासविषयः अभक्तः, भूतिरुद्राक्षधारिणः लिङ्गिनः लिङ्गयुक्तान् यो द्वेष्टि तेऽत्र अधिकारिणो नेत्यर्थः ॥ ४ ॥

यः मां गुरुं पाशुपतव्रतं च विष्णुं वा द्वेष्टि सः, हे नराधिप! जन्मकोटिशतैरपि न मुच्यते ॥ ५ ॥

अनेककर्मसक्तोऽपि शिवज्ञानविवर्जितः।
शिवभक्तिविहीनश्च संसारी नैव मुच्यते ॥ ६ ॥

अनेककर्मासक्तोऽपि शिवज्ञानविवर्जितः शिवस्वरूपज्ञानवर्जितः शिवभक्तिविहीनश्च एतादृशः यः सः संसारी, न मुच्यत एवेत्यर्थः ॥ ६ ॥

आसक्ताः फलरागेण ये त्ववैदिककर्मणि।
दृष्टमात्रफलास्ते तु न भक्तावधिकारिणः ॥ ७ ॥

फलरागेण अवैदिके कर्मणि ये आसक्ताः ते दृष्टमात्रफला, न भक्तावधिकारिणः ॥ ७ ॥

अत्र जडान्धबधिरमूकादीनामपि स्थलविशेषीयमरणस्याऽपि तारकब्रह्मोपदेशद्वारा मोक्षोपायत्वमाह—

अविमुक्ते द्वारकायां श्रीशैले पुण्डरीकके।
देहान्ते तारकं ब्रह्म लभते मदनुग्रहात् ॥ ८ ॥

अविमुक्ते काशीक्षेत्रे, द्वारकायां श्रीशैले पुण्डरीकके चिदंबरे क्षेत्रे देहान्ते मदनुग्रहात् तारकं ब्रह्म संसारोत्तारकं ब्रह्म लभते ॥ ८ ॥

यस्य हस्तौ च पादौ च मनश्चापि सुसंयुतम्।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ ९ ॥

यस्य पुरुषस्य हस्तौ सुसंयुतौ दुष्प्रतिग्रहादिपराङ्मुखौ, पादौ सुसंयुतौ म्लेच्छदेशगमनादिरहितौ, मनश्च सुसंयुतं रागद्वेषादिरहितं, विद्या अध्यात्मविद्या, तपः स्वस्वाश्रमविहितं कर्म, कीर्तिः यस्यास्ति स तीर्थफलमश्नुते। तथा च तत्तद्गुणविशिष्टः तीर्थस्य फलं लभत इत्यर्थः ॥ ९ ॥

विप्रस्यानुपनीतस्य विधिरेष उदाहृतः।
नाऽभिव्याहरयेद् ब्रह्म स्वधानिनयनादृते ॥ १० ॥

अनुपनीतस्यापि विप्रस्य एष विधिरुदाहृतः। तमेव विधिमाह—नाऽभिव्याहरयेदित्यादि। स्वधानिनयनादृते स्वधोच्चारणादिकं विना ब्रह्म वेदं नाऽभिव्याहरयेत् नोच्चारयेत्। व्याहरयेदित्यत्र ह्रस्वपाठश्छान्दसः ॥ १० ॥

अनुपनीतस्यापि विप्रस्य वेदानजानतोपि नामसंकीर्तनध्यानेन अधिकारित्वमाह—

स शूद्रेण समस्तावद्यावद्वेदान्न जानते।
नामसंकीर्तने ध्याने सर्व एवाधिकारिणः ॥ ११ ॥

सः यावद्वेदान्नजानते न जानातीत्यर्थः, वचनव्यत्ययः आर्षः ॥

संसारान्मुच्यते जन्तुः शिवतादात्म्य भावनात् ॥ १२ ॥

यथा दानं तपो वेदाध्ययनं चान्यकर्म वा।
सहस्रांशन्तु नार्हन्ति सर्वदा ध्यानकर्मणः ॥ १३ ॥

शिवतादात्म्यभावनात् जन्तुः यथा संसारान्मुच्यते तथा कर्मभिः न मुच्यत इत्यर्थः। तत्र युक्तिमाह—दानमित्यादि। दानं तपः वेदाध्ययनं अन्यद्वा कर्म एतानि ध्यानकर्मणः सहस्रांशं नार्हन्ति। सहस्रांशफलमपि न जनयितुं योग्यानि इत्यर्थः॥ १३॥

अत्र ध्यानादिकर्मणि अतिरिक्ताङ्गादीनि नापेक्षन्त इत्याह—

जातिमाश्रममङ्गानि देशं कालमथापि वा।
आसनादीनि कर्माणि ध्यानं नापेक्षते क्वचित्॥ १४॥

गच्छं स्तिष्ठन् चरन्वाऽपि शयानोवाऽन्यकर्मणि।
पातकेनापि वा युक्तो ध्यानादेव विमुच्यते॥ १५॥

जातिः ब्राह्मणत्वादिकं, आश्रमं ब्रह्मचर्यादिकं, अङ्गानि देशं कालं तथा आसनादीनि कर्माणि क्वचिदपि नापेक्षते ध्यानमित्यर्थः। गच्छन्नित्यादि विमुच्यत इत्यन्तं सुगमम्॥ १५॥

नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्॥ १६॥

इह मोक्षमार्गे ध्यानादि कर्मणि अभिक्रमनाशो नास्ति, प्रत्यवायो न विद्यते, स्वल्पमस्य धर्मस्य अस्य प्रारंभस्य नाशो नास्ति वैफल्यं नास्ति। यथा कृष्यादेः कस्यचिद्वैफल्यं तद्वदत्र नास्तीत्यर्थः। किञ्च नापि चिकित्सावत् प्रत्यवायो विद्यत इत्याह—प्रत्यवाय इत्यादि। तद्वत्प्रत्यवायो नास्तीत्यर्थः।' किन्तु अस्य धर्मस्य अल्पमपि उपक्रममात्रमपि महतो भयात् संसारभयाज्जन्ममरणादिलक्षणात् त्रायते रक्षति॥ १६॥

आश्चर्येवा भये क्रोशे क्षुते वा मम नाम यः।
व्याजेनापि स्मरेन्मर्त्यः स याति परमां गतिम्॥ १७॥

आश्चर्ये भये क्रोशे क्षुते व्याजेनापि यः (मर्त्यः) मम नाम स्मरेत् सः परमां गतिं याति प्राप्नोतीत्यर्थः॥ १७॥

महापापैरपि स्पृष्टो देहान्ते यस्तु मां स्मरेत्।
पंचाक्षरीं वोच्चरति स मुक्तो नात्र संशयः॥ १८॥

महापापयुक्तोऽपि देहान्ते मां स्मरति पंचाक्षरीं वा उच्चारयति समुक्त एव, अत्र संशयो नास्ति ।। १८ ।।

विश्वं शिवमयं यस्तु पश्यत्यात्मानमात्मना ।
तस्य क्षेत्रेषु तीर्थेषु किं कार्यं चान्यकर्मसु ? ।। १९ ।।

यः जनः विश्वं प्रपंचं शिवमयं शिवरूपमात्मानं आत्मना पश्यति तस्य तादृशस्य तीर्थेषु क्षेत्रेषु किं कार्यं ? अन्यकर्मसु वा किं कार्यं ? न किमपीत्यर्थः ।। १९ ।।

सर्वेण सर्वदा कार्यं भूतिरुद्राक्षधारणम् ।
युक्तेनाथाप्ययुक्तेन शिवभक्तिमभीप्सता ।। २० ।।

शिवभक्तिमभीप्सता युक्तेन योग्येन, अयुक्तेन अयोग्येन वा सर्वेण भूतिरुद्राक्षधारणं कार्यम् ।। २० ।।

भगवन्मोक्षमार्गोयः त्वया सम्यगुदाहृतः ।
नर्यं भस्म समायुक्तो रुद्राक्षान् यस्तु धारयेत् ।
महा पापैरपि स्पृष्टो मुच्यते नात्र संशयः ।। २१ ।।

नर्यभस्मसमायुक्तः रुद्राक्षान् यस्तु धारयेत् सः महापापैरपि स्पृष्टः मुच्यते, अत्र संशयो नास्तीत्यर्थः ।। २१ ।।

अन्यानि शैवकर्माणि करोति न करोति वा ।
शिवनाम जपेद्यस्तु सर्वदा मुच्यते तु सः ।। २२ ।।

अन्यानि शैवकर्माणि शिवसंबंधीनि कर्माणि करोति, न करोति वा, सर्वदा शिवनाम यः पठेत् स मुक्तो भवति ।। २२ ।।

अन्तकाले तु रुद्राक्षान् विभूतिं धारयेत्तु यः ।
महापापोपपापौघैरपि स्पृष्टो नराधमः ।। २३ ।।
सर्वथा नोपसर्पन्ति तं जनं यमकिङ्कराः ।
बिल्वमूलमृदायस्तु शरीरमुपलिम्पति ।
अन्तकालेऽन्तकजनैः स दूरीक्रियते नरः ।। २४ ।।

श्रीराम उवाच—

भगवन् ! पूजितः कुत्र कुत्र वा त्वं प्रसीदसि ?।
तद् ब्रूहि मम जिज्ञासा वर्तते महती विभो ॥ २५ ॥

श्रीभगवानुवाच—

मृदा वागोमयेनापि भस्मना चन्दनेन वा।
सिकताभिर्दारुणा वा पाषाणेनार्थ निर्मिता ॥ २६ ॥

लोहेन वाथ रङ्गेण कांस्यपित्तल कर्परैः।
ताम्ररौप्य सुवर्णैर्वा रत्नैर्नानाविधैरपि ॥ २७ ॥

अन्तकालेत्वित्यादि रत्नैर्नानाविधैरित्यन्तं सुगमम् ॥ २७ ॥

अथवा पारदेनैव कर्पूरेणाथवा कृता।
प्रतिमा शिवलिङ्गं वा द्रव्यैरेतैः कृतं तु यत् ॥ २८ ॥

तत्र मां पूजयेत्तेषु फलं शतगुणोत्तरम्।
मृद्दारुकांस्य लोहैश्च पाषाणेनापि निर्मिता ॥ २९ ॥

गृहिणा प्रतिमा कार्या शिवं शश्वदभीप्सता।
आयुः श्रियं कुलं धर्मं पुत्रान् पश्यति तैः क्रमात् ॥ ३० ॥

पारदेनैवेति—पारदो रसः इत्येतैः कृता प्रतिमा शिवलिङ्गं वा, तत्र मां यः पूजयेत् स शतगुणोत्तरं फलं, उक्तेषु द्रव्येषु उत्तरोत्तरं शतगुणाधिकं फलं द्रष्टव्यम् ॥ २९ ॥

गृहिणेति—शश्वत् शिवं मङ्गलमभीप्सता गृहिणा गृहस्थेन तैः द्रव्यैः प्रतिमा कार्या, क्रमादायुः श्रियं कुलं धर्मं पुत्रान् पश्यति क्रमेण सर्वं प्राप्नोतीत्यर्थः ॥ ३० ॥

बिल्ववृक्षे तत्फले वा यो मां पूजयते नरः।
परां श्रियमभिप्राप्य मम लोके महीयते ॥ ३१ ॥

बिल्ववृक्षे तत् फले वा यः मां पूजयते सः परां श्रियमभिप्राप्य मम लोके महीयते ॥ ३१ ॥

बिल्ववृक्षं समाश्रित्य यो मन्त्रान् विधिना जपेत्।
एकेन दिवसेनैव तत्पुरश्चरणं भवेत्॥ ३२॥

यो बिल्ववृक्षं समाश्रित्य विधिना विधिना मन्त्रान् जपेत् एकेन दिवसेन तत् पुरश्चरणं भवेत्॥ ३२॥

यस्तु बिल्ववने नित्यं कुटीं कृत्वा विशेन्नरः।
सर्वे मन्त्राः प्रसिध्यन्ति जपमात्रेण केवलम्॥ ३३॥

यः बिल्ववने कुटीं कृत्वा नित्यं विशेत्, तस्य सर्वे मन्त्राः जपमात्रेण प्रसिद्ध्यन्ति सिद्धा भवन्ति॥ ३३॥

पर्वताग्रे नदीतीरे बिल्वमूले शिवालये।
अग्निहोत्रे केशवस्य सन्निधौ तु जपेत्तु यः॥ ३४॥
नैवास्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः॥ ३५॥

पर्वताग्रइत्यादि यक्षराक्षसा इत्यन्तं सुगमम्।

तं न स्पृशन्ति पापानि शिवसायुज्यमृच्छति।
स्थण्डिले वा जले वह्नौ वायावाकाश एव वा॥ ३६॥
गिरौ स्वात्मनि वा यो मां पूजयेत् प्रयतो नरः।
स कृत्स्नफलमाप्नोति लवमात्रेण राघव?॥ ३७॥

स्थण्डिले स्थले, जले वह्नौ वा वायौ आकाशे गिरौ वा स्वात्मन्येव वा यो नरः प्रयतः शुद्धः सन् मां पूजयेत् स नरः पूजायाः लवमात्रेण कृत्स्नं परिपूर्णं फलं प्राप्नोतीत्यर्थः॥ ३७॥

आत्मपूजासमा नास्ति पूजा रघुकुलोद्भव!।
मत्सायुज्यमवाप्नोति चण्डालोऽप्यात्मपूजया॥ ३८॥

हे रघुकुलोद्भव! आत्मपूजा आत्मनि शिवत्वेन रूपेण पूजा, तत्समा पूजा अन्या नास्ति। मदित्यादि—चण्डालोऽपि आत्मपूजया मत्सायुज्यमवाप्नोति। अन्यः शुद्धः किमुतेति भावः॥ ३८॥

अत्र जपपूजादौ तत्तदासनविशेषनिबन्धन-फलविशेषमाह—

सर्वकामानवाप्नोति मनुष्यः कम्बलासने।
कृष्णाजिने भवेन्मुक्तिः मोक्षश्रीः व्याघ्रचर्मणि।
कुशासने भवेज्ज्ञानं आरोग्यं पत्रनिर्मिते ॥ ३९ ॥

कम्बलासने कम्बलरूपे आसने सर्वकामानवाप्नोतीत्यर्थः। कृष्णाजिने मुक्तिः, मोक्षश्रीः व्याघ्रचर्मणि मोक्षरूपालक्ष्मीः भवतीत्यर्थः। कुशासने ज्ञानं भवेत्। पत्रनिर्मिते आसने आरोग्यं भवेत् ॥३९॥

अत्र पूजायां जपे दिङ्नियममाह—

उदङ्मुखः प्राङ्मुखो वा जपं पूजां समाचरेत् ॥ ४० ॥

पाषाणे दुःखमाप्नोति काष्ठे नानाविधान् गदान्।
वस्त्रे श्रियमवाप्नोति भूमौ मन्त्रो न सिद्ध्यति ॥ ४१ ॥

पाषाण इत्यादि—पाषाणमये आसने दुःखमाप्नोति। काष्ठमये आसने नानाविधान् गदान् व्याधीन्। वस्त्रे वस्त्ररूपे आसने श्रियमवाप्नोति, भूमौ पृथिव्यां मन्त्रो न सिद्ध्यति ॥ ४१ ॥

अक्षमालाविधिं वक्ष्ये शृणुष्वावहितो नृप !।
साम्राज्यं स्फाटिके दद्यात् पुत्रजीवे परां श्रियम् ॥ ४२ ॥

आत्मज्ञानं कुशग्रन्थौ रुद्राक्षः सर्वकामदः।
प्रवालैश्च कृतामाला सर्वलोकवरप्रदा ॥ ४३ ॥

मोक्षप्रदा च माला स्यादामलक्याः फलैः कृता।
मुक्ताफलैः कृता माला सर्वविद्याप्रदायिनी ॥ ४४ ॥

माणिक्यरचिता माला त्रैलोक्यश्रीवशंकरी।
नीलैर्मरकतैर्वाऽपि कृता शत्रुवशप्रदा ॥ ४५ ॥

सुवर्णरचिता माला दद्याद्धैमवतीं श्रियम्।
तथा रूप्यमयी माला कन्यां यच्छति वाञ्छिताम्।
उक्तानां सर्वकामानां दायिनी पारदैः कृता ॥ ४६ ॥

अक्षमालाविधिं वक्ष्ये, हे नृप! अवहितस्सन् शृणु। साम्राज्यमित्यादि— अत्र स्फटिक एव स्फाटिकः स्वार्थेऽण्प्रत्ययः। अत्र सप्तमी विषये। स्फाटिकनिर्मिता माला साम्राज्यं चक्रवर्तित्वं दद्यात्, स्फाटिक इति शेषः। रुद्राक्षः सर्वकामद इति स्पष्टम्। प्रवालैरित्यारभ्य पारदान्तं सुगमम्, ॥ ४६ ॥

अत्राक्षमालायाः मणिसंख्यामाह—

अष्टोत्तरशतं माला तत्र स्यादुत्तमोत्तमा।
शतसंख्योत्तमा माला पंचाशन्मध्यमा मता ॥ ४७ ॥

चतुःपंचाशता यद्वा अधमा सप्तविंशतिः।
अधमा पंचविंशत्या यदि स्यान् मणिनिर्मिता ॥ ४८ ॥

अष्टोत्तरशतं अष्टोत्तरशतमणिसंघटितं तत् माला, तत्र मालासु उत्तमोत्तमा उत्तमायाः मालाया अपि उत्तमा, शतसंख्या या माला सा उत्तमा, पंचाशन्मध्यमा ॥ ४७ ॥

यत् चतुःपंचाशता मणिभिः निर्मितं तत् मध्यमा माला, सप्तविंशतिः सप्तविंशतिमणिघटिता मालाऽधमा। अधमेत्यादि—अक्षमाला यदि पंचविंशत्या कृता तदा मालाऽधमा ॥ ४८ ॥

अत्राक्षररूपमालामाह—

पंचाशदक्षराण्यत्रानुलोमप्रतिलोमतः।
इत्येवं स्थापयेत् स्पष्टां न कस्मैचित् प्रदर्शयेत् ॥ ४९ ॥

अनुलोमप्रतिलोमतः अनुलोमतः प्रतिलोमतश्च अकारादिळकारान्तं अनुलोमतः, ळकाराद्यकारान्तमिति प्रतिलोमतः। अत्रान्तर्जपे, एवं अनेन रूपेण पंचाशदक्षरा मालेति, एनां मालां हृदि स्थापयेत्। कस्मैचिदपि न प्रदर्शयेदित्यर्थः। अत्रायमुपदेशक्रमः। अकारं पूर्वं सबिन्दुकमुच्चार्य अभीष्टं मन्त्रं जपेत्। एवं क्रमेण ळमित्यन्तं जपेत्। एवं कृते पंचाशद्वारं जायते। पुनः क्षकारं मेरुस्थानीयं मन्त्ररहितं केवलं जपेत्। पुनः प्रतिलोमार्थं पूर्वं मन्त्रं जपेत्। तन्मन्त्रान्ते ळइति विसर्गान्तमुच्चारयेत्।

पुनरपि मन्त्रः। एवमकारान्तं जपः कर्तव्यः। एवमनुलोमेन प्रतिलोमेन च कृते मातृकामन्त्रेण पुटिता भवति। शतसंख्या च भवति। तत्राष्टोत्तर-शतसंख्यापेक्षायां स्वरादि वर्गाष्टकेन वा पंचवर्गादि यादि तृतीयादि वर्णैः अष्टभिर्वा संयोजयेत्? एवमनुलोम प्रतिलोमक्रमेण मातृकामालया जपः कर्तव्यः। इदंच प्रपंचसारादौ द्रष्टव्यम्॥ ४९॥

वर्णमालायाः फलमाह—

वर्णैर्विन्यस्तया यस्तु क्रियते मालया जपः।
एकवारेण तस्यैव पुरश्चर्या कृता भवेत्॥ ५०॥

वर्णैः विन्यस्तया मालया विन्यस्तवर्णरूपया मालया यो जपः क्रियते तस्य जपस्यैकवारेण पुरश्चर्या कृता भवेत्॥ ५०॥

सव्यपार्ष्णं गुदे स्थाप्य दक्षिणंच शिवोपरि।
योनि मुद्राबन्ध एवं भवेदासनमुत्तमम्॥ ५१॥

योनिमुद्रासने स्थित्वा प्रजपेद्यस्समाहितः।
यं कंचिदपि वा मन्त्रं तस्य स्युस्सर्वसिद्धयः॥ ५२॥

सव्यपार्ष्णं वामपार्ष्णं गुदे स्थाप्य संस्थाप्य दक्षिणपार्ष्णं शिवो-परि लिङ्गोपरि ध्वजोपरीति पाठेप्ययमेवार्थः। एवं क्रमेण योनिमुद्राबन्धः तदुत्तममासनं भवेत्॥ ५१॥

योनिमुद्रेत्यादि—योनिमुद्रासने स्थित्वा यः समाहितस्सन् यं कंचि-दपि वा मन्त्रं जपेत् तस्य सर्वा एव सिद्धयः स्युः॥ ५२॥

छिन्ना रुद्धा स्तम्भिताश्च मथिता मूर्च्छितास्तथा।
सुप्ता मत्ता हीनवीर्या दग्धाः स्रस्तारिपक्षगाः॥ ५३॥

बालयौवनमत्ताश्च वृद्धामन्त्राश्च ये मताः।
योनिमुद्रासने स्थित्वा मन्त्रानेवंविधान् जपेत्॥ ५४॥

तस्य सिद्ध्यन्ति ते मन्त्राः नान्यस्य तु कथंचन॥ ५५॥

छिन्ना रुद्धा इत्यारभ्य वृद्धान्ताः ये मन्त्राः मताः एवं विधान्मन्त्रान् योनिमुद्रासने स्थित्वा यः जपेत् तस्य पुरुषस्य एते छिन्नादयः अन्येपि दुष्टामन्त्राः सिद्ध्यन्ति फलोत्पादका भवन्ति। अन्यस्य योनिमुद्रासनादि-संस्कारहीनस्य कथंचन कथंचित् ते मन्त्राः न सिद्ध्यन्तीत्यर्थः। छिन्नादि पंचाशद्दोषाः, तेषां लक्षणानि संस्कारांश्च एतत्सर्वं शारदातिलकादौ द्रष्टव्यम्॥ ५५॥

ब्राह्मं मुहूर्तमारभ्याऽऽमध्याह्नं प्रजपेन्मनुम्।
अत ऊर्ध्वं कृते जप्ये विनाशो भवति ध्रुवम्॥ ५६॥

ब्राह्मं मूहूर्तमारभ्य आमध्याह्नं मध्याह्नपर्यन्तं मन्त्रं जपेत्। अत ऊर्ध्वं मध्याह्नादूर्ध्वं जप्ये जपे कृते ध्रुवं विनाशो भवति॥ ५६॥

पुरश्चर्याविधावेवं सर्वकामफलेष्वपि।
नित्यनैमित्तिके वाऽतो तपश्चर्यासु वा पुनः।
सर्वदैव जपः कार्यो न दोषस्तत्र कश्चन॥ ५७॥

एवं पुरश्चर्याविधौ पुरश्चर्याविधाने सर्वकामफलेषु सकलकामकर्म-स्वपि एवं प्रकारो द्रष्टव्यः। नित्यादि—नित्यकर्मणि नैमित्तिके वा कर्मणि तपश्चर्यासु तपोन्तरचर्यासु वा सर्वदा जपः कार्यः। तत्र सर्वदा जपे कश्चन दोषो नास्तीत्यर्थः॥ ५७॥

यस्तु रुद्रं जपेन्नित्यं ध्यायमानो ममाऽऽकृतिम्।
षडक्षरं वा प्रणवं निष्कामो विजितेन्द्रियः॥ ५८॥
अथाऽथर्वशिरोमात्रं कैवल्यं वा रघूत्तम!।
स तेनैव हि देहेन शिवस्संजायते स्वयम्॥ ५९॥

यः पुरुषः ममाकृतिं ध्यायमानः ध्यायन् नित्यं रुद्रं रुद्राध्यायं षडक्षरं प्रणवं वा निष्कामः निर्जितेन्द्रियः अथर्वशिरसं मन्त्रं कैवल्योपनिषदं वा हे रघूत्तम! यः जपेत् सः तेनैव देहेन शिवः संजायते शिव एव भवती-त्यर्थः॥ ५९॥

अधीते शिवगीतां यो नित्यमेतां जितेन्द्रियः।
शृणुयाद्वा स मुक्तः स्यात् संसारान्नात्र संशयः॥ ६०॥

यः एतां शिवगीतां नित्यमधीते पठति, शृणुयाद्वासः संसाराद्विमुक्तो भवति, अत्र संशयो नास्तीत्यर्थः ॥ ६० ॥

सूत उवाच—

एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
रामः कृतार्थमात्मानममन्यत तथैव सः ॥ ६१ ॥

महादेवः एवमुक्त्वा तत्रैवान्तरधीयत अन्तर्धानं कृतवान्, स रामः आत्मानं कृतार्थममन्यत ॥ ६१ ॥

एवं मया समासेन शिवगीता समीरिता ।
एतां यः प्रजपेन्नित्यं शृणुयाद्वा समाहितः ॥ ६२ ॥

एकाग्रचित्तो यो मर्त्यः तस्य मुक्तिः करे स्थिता ॥ ६३ ॥

एवं पूर्वोक्तप्रकारेण समासेन संक्षेपेण मया शिवगीता समीरिता, एतां शिवगीतां समाहितः सन् यः प्रजपेत् शृणुयाद्वा तस्य करे मुक्तिः स्थिता अवश्यं मुक्तिर्भवतीत्यर्थः ॥ ६३ ॥

अतः शृणुध्वं मुनयो नित्यमेतां समाहिताः ।
अनायासेन वो मुक्तिर्भविता नास्ति संशयः ॥ ६४ ॥

कायक्लेशो मनःक्षोभो धनहानिर्नचात्मनः ।
पीडास्ति श्रवणादेव यस्मात् कैवल्यमाप्नुयात् ॥ ६५ ॥
शिवगीता मतो नित्यं शृणुध्वमृषीसत्तमाः ।

हे मुनयः ! अतः नित्यमेतां शिवगीतां समाहिताः सन्तः शृणुध्वं, युष्माकमनायासेन मुक्तिः भविता भविष्यतीत्यर्थः । (यस्मात् श्रवणादेव कैवल्यं) कायक्लेशः शरीरक्षोभादिः मनःक्षोभः आधिः, धनहानिः, आत्मनः पीडा च नास्ति न भवतीत्यर्थः । यस्मात् श्रवणादेव कैवल्यमाप्नुयात् । श्रवणादेवेति—यस्याः श्रवणमात्रेणेति व्याख्यातं, हे ऋषिसत्तमाः, अतः शिवगीतां नित्यं शृणुध्वं ॥ ६५ ॥

ऋषय ऊचुः—

अद्यप्रभृति नः सूत ! त्वमाचार्यः पिता गुरुः।
अविद्यायाः परं पारं यस्मात्तारयितासि नः॥ ६६॥

हे सूत! अद्यप्रभृति नः अस्माकं त्वमाचार्यः, त्वं पिता, त्वं गुरुः, यस्मात् कारणात् अविद्यायाः परं पारं तारयिता तारणकर्ता॥ ६६॥

उक्तमर्थमुपसंहरति—

उत्पादकब्रह्मदात्रोः गरीयान् ब्रह्मदः पिता।
तस्मात् सूतात्मज ! त्वत्तः सत्यं नान्योऽस्ति नो गुरुः॥ ६७॥

उत्पादकश्च ब्रह्मदाता च उत्पादक ब्रह्मदातारौ, तयोर्मध्ये ब्रह्मदः पिता यस्माद् गरीयान् सर्वतः श्रेष्ठः, तस्मात् हे सूतात्मज ! नः अस्माकं त्वत्तः अन्यो गुरुर्नास्ति, त्वमेव गुरुरित्यर्थः॥ ६७॥

श्रीव्यास उवाच—

इत्युक्त्वा प्रययुः सर्वे सायंसंध्यामुपासितुम्।
स्तुवन्तः सूतपुत्रं ते संतुष्टा गोमतीतटम्॥ ६८॥

इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योग-शास्त्रे
शिवराघवसंवादे मोक्षयोगो नाम षोडशोऽध्यायः

ते ऋषयः सूतपुत्रं इत्युक्त्वा एवं प्रकारेणोक्त्वा स्तुवन्तः सन्तः, सन्तुष्टाः सन्तः, सायंसंध्यामुपासितुं गोमतीतटं प्रययुरित्यर्थः॥ ६८॥

इति श्रीमत्परमहंस-परिव्राजकाचार्यवर्य-पदवाक्यप्रमाण-
पारावारपारीण-यमनियमाद्यष्टाङ्गयोगसाम्राज्यधुरंधर
सकलशास्त्र तत्वविचारणैकदक्ष निखिल
विद्वन्मौलिमण्डन श्रीनृसिंहभारती-
मुनीन्द्रशिष्य श्रीमदभिनव
नृसिंहभारतीस्वामिनः
कृतौ श्री शिवगीताभाष्ये
ब्रह्मविद्यायां योग-शास्त्रे
शिवराघवसंवादे मोक्षयोगो नाम
षोडशोऽध्यायः
श्रीशिवगीताभाष्यं संपूर्णम्

पुरा भगवता प्रोक्तां रामाय शिवगीतिकाम्।
षोडशाध्यायसंयुक्तां नृहरिर्व्याकरोन्मुदा ।।

दुष्टानां मन्दबुद्धीनामंजली रचितो मया।
अबुद्ध्वार्थं दूषणे न मतिर्देया कदाचन ।।

नृसिंह मुनिवर्येण कृतं भाष्यं महोदयम्।
आचन्द्रार्कं स्थायि भूयात् लोके जीयात् स्वसद्गुणैः ।।

श्रीमन्नृसिंहमुनिवर्य कृतं सुभाष्यम्।
आदावहोवल इति प्रथितेन, तैश्च ।।

सम्यग्विबोधित सुभाष्य हृदामयैतत्।
लोकस्य साधु लिखितं च समाहितं च ।।

क्षयाब्दोर्जासिते पक्षे सप्तम्यां भाष्यमंजसा।
अहोबलेन नृहरिकृतं पूर्णमलेखि च ।।

# शुद्धाशुद्धपत्रिका

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ८ | मीमागसा | मीमागँ्सा |
| ६ | ११ | तत्वज्ञान | तत्त्वाज्ञान |
| ९ | ३ | संभावात् | संभवात् |
| ११ | ४ | नवच्छिन्नात्वाभावावन्ना | नवच्छिन्नत्वाभावाभ्ना |
|  | २५ | नतुददाते | ननु ददाते |
| १२ | १५ | ह्मेष | ह्येष |
|  | १५ | सम्यज्ज्ञानेन | सम्यग्ज्ञानेन |
|  | २० | भयं सह | भयंगं् सह |
| १३ | २६ | सम्यज् | सम्यग् |
| १७ | २३ | इन् | इति |
|  | १४ | कात्स्न्येन | कात्स्न्र्येन |
| २१ | ३ | प्रयोज्जकत्वं | प्रयोजकत्वं |
| २४ | २२ | सम्यकत | सम्यकत्वं |
| २५ | २० | वे | वै |
| २९ | ६ | पाशुपतभिधं | पाशुपताभिधं |
| ३२ | ३ | तिङत | तिङन्त |
| ३४ | ७ | स्यात्मानि | स्यात्मनि |
| ३५ | १० | जानतीत्यर्थः | जानातीत्यर्थः |
|  | ११ | मे ? | — |
| ३६ | १६ | रनर्थेस्तु | रनर्थैस्तु |
| ३९ | १ | हन्यमानात्ववत् | हन्यमानत्ववत् |
| ४१ | १७ | करणम् | कारणम् |
|  | २६ | चा | च। |
| ४२ | २३ | विभोवि | विभोर्वि |
| ४६ | १७ | भोगोपत्ति | भोगापत्ति |
| ४७ | १५ | निबन्धनायोनि | निबन्धनयोनि |
| ४८ | १२ | मात्सर्य | मात्सर्यं |
|  | २० | महंकारा | अहङ्कारा |
| ५० | १४ | ज्ञानेनमविद्या | ज्ञानेनाविद्या |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५० | २० | विदित्वा भवेति तप्य स | विदित्वैव भव तप्यस |
| ५१ | ८ | तत्त्वज्ञाननि | तत्वज्ञानि |
| ५२ | २ | तस्मात | तस्मात् |
| ५३ | १६ | शंखदापक्रचगाणिः | शंखचक्रगदापाणिः |
| | २४ | सहितेपे | सहि तेपे |
| ५६ | २५ | अवम तस्य | अवमतस्य |
| ५७ | १२ | प्रेत्याहत्वतोनेति | प्रेत्याह त्वत्तोनेति |
| | २० | वांञ्च्छितार्थं | वांञ्छितार्थं |
| | २१ | प्रदस्यति | प्रदास्यति |
| ५८ | २४ | दृढिष्ठो | दृढिष्ठो |
| ५९ | १२ | अभिलाषितार्थं | अभिलषितार्थः |
| ६१ | २१ | अग्निनेत्यात्यादिना | अग्निनेत्यादिना |
| ६२ | २४ | अग्निबीजेन | अग्निबीजेन |
| ६४ | ३ | ल्यस्नातो | स्नातः |
| ६५ | २८ | प्रसिद्धंव | प्रसिद्धं वा |
| ७० | १५ | प्रतिप्रति | प्रतिपत्ति |
| ७४ | १२ | सुवर्णं | स्वर्णं |
| ७७ | २ | आव्ढा च | आढ्या च |
| ८५ | ७ | दर्शनमात्रेणव | दर्शनमात्रेणैव |
| ८८ | २३ | लवणबुधि | लवणांबुधि |
| | १४ | निऋरुतिः | निर्ऋतिः |
| ८९ | २ | देवदानवरपि | देवदानवैरपि |
| ९२ | १८ | मप्स्यसी | माप्स्यसी |
| ९६ | २५ | दक्षिणास्च | दक्षिणांञ्चः |
| ९८ | १४ | अंगीरसो | आंगिरसो |
| ९९ | ५ | आहुतिरिति | अहुतिरिति |
| | १५ | विहंगमे | विहंगमे। |
| १०३ | १५ | श्रृतिः | श्रुतिः |
| | २५ | प्राणमय | प्रणामयेत् |
| | २६ | प्राणामयेत् | प्रणामयेत् |
| १०४ | २ | नाहं | नहं |
| १०७ | १५ | जनः | जनाः |
| १०८ | २ | कर्तुत्व | कर्त्तृत्व |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०८ | १६ | येनुपश्यन्ति | येऽनुपश्यन्ति |
| १०९ | १५ | त्यभिलाषा | त्यभिलाषः |
| ११० | ६ | श्रृत्वेति | श्रुत्वेति |
| | १९ | अव्यवं | अव्ययं |
| १११ | ९ | कारण | करण |
| | १० | " | " |
| ११३ | ३ | कर्तु | कर्त्तृ |
| | ५ | " | " |
| | १७ | पुरा (सुराः) | सुराः |
| | १९ | श्रृत्वा | श्रुत्वा |
| ११४ | १ | " | " |
| ११६ | ११ | भयानकं | भयावहम् |
| ११८ | १० | वत्तः | त्वत्तः |
| | २१ | रित | रित्यत |
| १२० | ४ | कर्तु | कर्त्तृ |
| | १५ | दृश्यते | जायते |
| १२१ | २६ | निश्चितोमी | निश्चिनोमी |
| १२२ | १३ | कल्पितामिति | कल्पितमिति |
| १२३ | ३ | श्रृति | श्रुति |
| १२४ | ७ | ह्या | द्या |
| १२७ | ६ | वृत्ति | वृति |
| | १२ | " | " |
| १३० | २५ | नपृंसक | नपुंसक |
| १३२ | १२ | दृरौ | र्दौ |
| | १४ | व्रतीं | वतीं |
| १३३ | १८ | धौऽसौ | धोऽसौ |
| १३४ | १७ | त्तस्था | त्तथा |
| | २० | पार्श्वस्था | पार्श्वास्थि |
| १३५ | ६ | याद्द | यादृ |
| १३९ | १ | स्थनागश्वैः ? | रथनागाश्वै |
| १४२ | १८ | इमि | इति |
| | १८ | कुच्छ्रा | कृच्छ्रा |
| १४४ | २५ | जातस्य च | जातस्य हि |

| पृष्ठम् | पञ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १४९ | ९ | मोदो | मेदो |
| | १४ | मातृभावाः | मातृभवाः |
| १५१ | १९ | श्रृत्या | श्रुत्या |
| १५२ | १८ | देहस्य | देहः |
| | १८ | पंचजन्य भूतत्वेन | पंचभूतजन्यत्वेन |
| १५३ | १३ | कुकरं | कूकरं |
| | २१ | वियादि | वित्यादि |
| १५५ | १६ | कुकरस्य | कूकरस्य |
| १६० | १४ | वय | त्वया |
| १६३ | ३ | समायुक्तो | समाथुक्तो |
| १६४ | २० | भाननम् | भानम् |
| १६५ | १३ | कर्तुत्वादिक | कत्तृत्वादिक |
| १६७ | २३ | यत्रातत्वात् | यत्रतत्वात् |
| १७२ | ७ | तद्वसना | तद्वासना |
| | २२ | जन्मतो | जन्मनो |
| १७९ | ३ | आध्यात्मिकादि | आध्यात्मिकाधि |
| २०३ | १२ | हृमेकलः | हमेकलः |
| २०४ | १७ | व्याप्प | व्याप्य |
| २१६ | ३ | संपन्नां | संपन्ना |
| २१७ | २२ | माकुर्वी | माकुर्वि |
| २३७ | १८ | मृषी | मृषि |